मू॰ पद्मकोशप्रतीकाशमित्यादि वचनं दहरविद्याशेषत्वमस्योपोद्बलयतीति तन्न बलीयसा प्रमाणेन सर्वविद्योपास्यनिर्धारणार्थत्वेऽवधृते सति दहरविद्यायामपि तस्यैव नारायणस्योपास्यत्वेन तद्वचनोपपत्तेः, न च सहस्रशीर्षमित्यादिद्वितीयानिर्देशेन पूर्वानुवाकोदितोपासिना सम्बन्धः शङ्कनीयः, तस्मिन् यदन्तस्तदुपासितव्यमित्युपासिगतेन कृत्प्रत्ययेनोपास्यस्य कर्मणोऽभिहितत्वात्तदुपास्ये द्वितीयाऽनुपपत्तेः, विश्वमेवेदं पुरुषः तत्त्वं नारायणः पर इत्यादिप्रथमानिर्देशाच्च प्रथमार्थे द्वितीया वेदितव्या, "अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः । तस्याः शिखाया मध्ये परमात्मा व्यवस्थितः स ब्रह्म स शिवः सेन्द्रः सोऽक्षरः परमः स्वराडि"ति निर्देशैः ।

टी॰ पद्मकोशेत्यादि, यथा ऐतदात्म्यमिदं सर्वमिति सामान्येनोक्तं ब्रह्मात्मकत्वं तत्त्वमसीति जीवविशेषे निगमितं, तथा नारायण एव सर्वविद्योपास्यः तस्मादस्मिन्नपि विद्याविशेषे स एवोपास्य इति विशेषे तत्प्रदर्शनमित्यर्थः । न च सहस्रशीर्षमित्यादीति, येनावृतं खं च दिवं महीं चेति वद् द्रष्टव्यमिति भावः । विश्वमेवेदमित्यादिना प्रथमार्थत्वमेव सन्निकृष्टवाक्यैरुपपादितं द्वितीयाविभक्त्यन्तवाक्यानुगुणं प्रथमान्तानि वाक्यानि किं न नेयानीति शङ्कायामुपरितनवाक्यैश्च प्रथमार्थत्वमुपपादयति "अन्तर्बहि"श्चेति, उपासीतेति विधिपदाध्याहारश्च स्यादित्यर्थसिद्धं विद्यादुपासीतेत्यादिविधायकपदरहितानां भगवत्परत्वपराणामनेकवाक्यानां पर्यालोचनया सर्वविद्यासूपास्यविशेषनिर्धारणपरत्वम् अस्यानुवाकस्य प्रतीयते पूर्वानुवाकोक्तदहरविद्याशेषत्वे पूर्वापरवाक्यानामर्थस्वभावविरोधः, विधिपदाध्याहारः प्रथमान्तपदानामस्वारस्यं च

सर्वविद्योपास्यविशेषनिर्द्धारणपरत्वे येनावृतं खं च दिवं महीं चेत्यादिवद् द्वितीयान्तपदमात्रास्वारस्यं न तु विधिपदाध्याहारः, नापि पूर्वापरवाक्यावगतार्थस्वभावविरोधः ॥ ननु प्रथमार्थत्वे सति पूर्वानुवाकस्थितेनोपासितव्यमिति पदेनान्वयो घटते नैवं स्वारसिकेन सर्वस्मात्परत्वप्रतिपादनेन वाक्यस्य निराकाङ्क्षत्वे सत्यपि पूर्वानुवाकस्थपदाकर्षणेनान्वयकल्पनायोगात् ।

सू० सर्वस्मात्परो नारायण एव सर्वैरुपास्य इति निर्णयमानत्वाच्च प्रथमार्थे द्वितीयेति निश्चीयते ॥ लिङ्गभूयस्त्वाधिकरणं समाप्तम् ॥

टी० सर्वस्मात्परो नारायण एवेत्यस्यायमभिप्रायः केचिन्नारायणपरं ब्रह्मेति वाक्ये नारायणात्परमिति अन्तर्गतमिति अन्तर्गतसमासं वदन्ति तदयुक्तं प्रातिपदिकेन विभक्त्यर्थलक्षणा हि समासः मुख्यार्थे सम्भवति लक्षणानुपपत्तेः, समासेऽपि निषादस्थपतिन्यायेन नारायण एव परमिति प्रथमाविभक्तिस्वीकारोपपत्तेः, महोपनिषदि नारायणः परं ब्रह्मेति व्यासेन समासार्थावगमात्, अन्यथा पूर्वापरवाक्यविरोधात् तत्त्वं नारायणः पर इति विरोधात् श्रुत्यन्तरविरोधात् सुपां सुलुगित्यादिसूत्रेण विभक्तिलोपेनासमासेऽपि नारायणशब्दस्य प्रथमान्तत्वसाधुत्वाच्चेति आत्म-शब्दश्चात्मा वा अरे द्रष्टव्यः आत्मा वा इदमेक एव आत्मनस्तु कामाय आत्मानमेव लोकं तमेवैकं ध्यायथात्मानमित्यात्म-शब्दस्य बहुषूपनिषत्सूद्घोषितेष्वपि नारायणस्यैवोपास्यत्वसाधकः, इतरे त्वयोऽपि लिङ्गभूयस्त्वादिति सूत्रमुत्तराधिकरणशेषं सिद्धान्तोपक्रमं व्याचक्षते तान् हैतानेवं विदे सर्वदा सर्वाणि भूतानि चिन्वन्ति अपि स्वपत इत्यादीनि भूयांसि लिङ्गानि, लिङ्गं च प्रकरणात् बलीय इति, पूर्वविकल्प इत्यादिपूर्वपक्षसूत्रद्वयं तदयुक्तं लिङ्गे उपन्यस्ते दुर्बलप्रकरणेन पूर्वपक्षोत्थानायोगात् । ननु सत्यामन्यस्यां प्राप्तौ गुणवादेनाप्युपपद्यमानत्वल्लिङ्गं न प्रकरणं बाधितुमुत्सहत इति चेत् तर्हि श्रुत्यादिबलीयस्त्वा-

दिति सिद्धान्तदशायाम् आदि-शब्दोपात्तत्वं दुर्बलस्य लिङ्गस्यानुपपन्नं, ननु तत्र प्राबल्यहेतुर्विवक्षित इति चेत् अशाब्दत्वात् अभिप्रेत इति चेत् कथमभिप्रायः श्रुतविध्युद्देशानामन्यार्थदर्शनानां तदेकवाक्यत्वादर्थान्तराप्रापकत्वम्, अत्र तु विस्पष्टविध्यन्तरानुपलब्धेर्नार्थवादत्वं किन्तु वचनानि त्वपूर्वत्वादित्यादिना विधिः कल्पनीय इति चेत् तर्हि लिङ्गभूयस्त्वादिति सूत्रवैयर्थ्यम्, अत्रोक्तस्य सिद्धान्तहेतोस्तत्प्राबल्यस्य च सूत्रान्तरसिद्धत्वात् पृथगधिकरणत्वे तु सप्रयोजनत्वं, दर्शनाच्चेत्येतत् पूर्वोक्तलिङ्गदर्शनादिति परे चापरे त्वाहुः, तदयुक्तं लिङ्गभूयस्त्वादित्यनेन श्रुत्यादीत्यादि-शब्देन च पुनरुक्तेः, दृष्टश्च तदुक्तमित्यस्य क्रियाप्रकरणादुत्कर्षेण स्वातन्त्र्याङ्गीकारो मनश्चिताद्दीनां न्याय्यः राजसूयप्रकरणादवेष्टेरुत्कर्षो दृष्ट इति, तदुक्तं भेदलक्षणे "अवेष्टौ यज्ञसंयोगादिती"ति त्रयोऽप्याहुः ततोऽपि विधिकल्पनपरत्वमुचितं स्वातन्त्र्यस्यापि विधिकल्पनमूलकत्वान्न ह्यविहितस्य कस्यचित् स्वातन्त्र्यं शक्यमुपगन्तुम् । अन्ये तु मन्त्रान्तरशब्दमेवमाहुः योऽश्वमेधेन यजते य उ चैनमेवं वेदेत्यश्वमेधाद्युपासनमश्वमेधादिभ्यः पृथगिति ततोऽपि शाण्डिल्यविद्यादिपरत्वं युक्तं प्रतीतिशैघ्र्यात् मानसग्रहस्तुत्यादिसामान्येन न क्रियाशेषत्वं पुरुषार्थत्वोपलब्धेरित्येतदर्थपरं न सामान्यादिति सूत्रं परे चापरे चाहुः । विद्यामयस्य क्रियानुप्रवेशसम्भवमात्रे दृष्टान्तत्वान्मानसग्रहस्य तत्र परिहरणीयाभावादतिदेशहेतोः परिहरणीयत्वाच्च तदयुक्तं, न हि लोकापत्तिरित्यस्यैवार्थमाहुः, "असौ वै लोकोऽग्निरित्यत्र न ह्यग्नेर्लोकस्वरूपतापत्तिरिति ततोऽपि पूर्वदृष्टान्तस्योपपादकत्वं युक्तं, हि-शब्दस्वारस्यात् परेणान्यत्र तादर्थ्यं विद्याविधित्वमिति व्याख्यातं तस्याप्रकृतत्वेन तच्छन्दोपस्याप्यत्वायोगात् तदयुक्तम् ॥ लिङ्गभूयस्त्वाधिकरणं समाप्तम् ॥

पूर्वविकल्पाधिकरणम् ।

**सू० पूर्वविकल्पः प्रकरणात् स्यात् क्रियामानसवत् ॥ ४४ ॥**

सू० वाजसनेयकेऽग्निरहस्ये मनश्चितादयोऽग्नयः श्रूयन्ते "म-

नश्चितो वाक्चितः प्राणचितश्चक्षुश्चितः श्रोत्रचितः कर्मचितोऽग्निचित" इति, तत्र संशयः किमेते मनश्चितादयः साम्पादिकत्वेन विद्यारूपा अग्नयः क्रियामयक्रत्वनुप्रवेशेन क्रियारूपा? आहोस्विद्विद्यामयक्रत्वनुप्रवेशेन विद्यारूपा एवे?ति विशये क्रियारूपत्वं तावदाह पूर्वविकल्प इत्यादिना, चित्याग्नित्वेन सम्पादितानामेषां मनश्चितादीनां क्रत्वनुप्रवेशसाकाङ्क्षाणां स्वदेशे क्रतुविध्यभावात् पूर्वंचासद्वा इदमग्र आसीत् इत्यादिनेष्टकचितस्याग्नेः प्रक्रान्तत्वात् तस्य च क्रियामयक्रत्वव्यभिचारित्वेन तत्र–

टी० सू० पूर्वविकल्पः प्रकरणात् स्यात् क्रियामानसवत् ॥ ४४ ॥

प्रकरणात् बलीयसा वाक्येन नारायणानुवाकस्य सर्वविद्यासाधारण्यमुक्तम्, इह तु प्रकरणस्य बाधकाभावान्मनश्चितादयः क्रियामयक्रत्वनुप्रवेशिन इति शङ्कया सङ्गतिः, सौत्रनिर्देशानुरोधेन क्रियारूपा विद्यारूपा इति निर्दिष्टं, तद्विवरणं क्रियामयक्रत्वनुप्रवेशिन विद्यामयक्रत्वनुप्रवेशेनेति च मनश्चितादीनां स्वरूपस्य विद्यारूपत्वे हि न विप्रतिपत्तिः, अङ्गद्वारा विद्यारूपत्वे तु विप्रतिपत्तिः अतः सूत्रे क्रियाशब्दो लाक्षणिकः क्रियामयक्रत्वङ्गतया क्रियास्तत्संबन्धिन इत्यर्थः । किं मनश्चितादयः क्रियामयक्रत्वन्वयिन? उत विद्यामयक्रत्वन्वयिनः? किमिष्टकचिताग्निद्वारा संनिहितक्रियामयक्रतौ एषां विनियोऽस्ति ने?ति, किं श्रुतिलिङ्गवाक्यैर्विद्यामयक्रतौ विनियोगोऽवगम्यते? उत नेति? किमनुबन्धादिभिरतिदिष्टफलान्वयाच्च विद्याविधिः कल्प्यः? उत ने?ति, अकल्प्यत्वे तत्र श्रुत्यादिभिर्विनियोगायोगात् प्रकरणाविनियोगेन क्रियामयक्रत्वन्वयिनः स्युः, विधेः कल्प्यत्वे तत्र श्रुत्यादिभिर्विनियोगात् प्रकरणस्य दुर्बलत्वाच्च विद्यामयक्रत्वन्वयिनः स्युः, होमस्थानत्वादग्नि–शब्देन निर्देशः, न हि

होमस्थानत्वमात्रेण क्रत्वनुप्रवेश इति तद्व्यावृत्त्यर्थं चित्याग्नित्वेनेत्युक्तम्, इष्टकचिताग्निः प्रकृतः स्यात्ततः किं क्रियामयक्रत्वनुप्रवेशस्येत्यत्राह "तस्य चे"ति, ।

सू० क्रतुसन्निधानात् तत्प्रकरणस्थैहीता मनश्चितादयः तेनेष्टकचितेनाग्निना विकल्प्यमानाः क्रियारूपा एव स्युः । विद्यारूपाणामपि क्रियामयक्रत्वनुप्रवेशेन क्रियारूपत्वं मानसग्रहवदुपपद्यते, यथा द्वादशाहे अविवाक्ये दशमेऽहनि मानसग्रहस्य मनोनिष्पाद्यग्रहणासादनस्तोत्रशस्त्रप्रत्याहरणभक्षणत्वेन विद्यारूपस्यापि क्रियामयक्रत्वङ्गतया क्रियारूपत्वं, तथेहापि ॥

सू० अतिदेशाच्च ॥ ४५ ॥

इतश्चेष्टकचितेनाग्निना मनश्चितादीनां विकल्पः क्रियारूपत्वं चावगम्यते, तेषामेकैक एव तावान् यावानसौ पूर्व इति पूर्वस्येष्टकचितस्याग्नेर्वीर्यं मनश्चितादिष्वतिदिश्यते तेन तुल्यकार्यत्वाद्विकल्पः, ततश्चेष्टकचितवत्तत्क्रतुनिर्वर्त्तनेन तदङ्गभूता मनश्चितादयः क्रियामयक्रत्वनुप्रवेशेन क्रियारूपा एवेत्येवं प्राप्ते प्रचक्ष्महे—

सू० विद्यैव तु निर्धारणाद्दर्शनाच्च ॥ ४६ ॥

तु-शब्दः पक्षं व्यावर्त्तयति, यदुक्तं मनश्चितादयः क्रियामयक्रत्वनुप्रवेशेन क्रिया[1]मया एवेति नैतदस्ति विद्यारूपा एवैते विद्यारूपक्रत्वन्वयिन इत्यर्थः । कुतः निर्धारणाद्दर्श-

१ क्रियारूपाएयेवेति पाठान्तरं युक्तमीक्षामहे पा० ।

नाच्च, निर्धारणं तावत् "ते हैते विद्याचित एव विद्यया हैवैत एवं विदश्चिता भवन्ती"ति वाङ्मनश्चक्षुरादिव्यापाराणामिष्टकादिवच्चयनानुपपत्तेर्मनसा सम्पादिताग्नित्वेन विद्यारूपत्वे सिद्धेऽपि विद्याचित एव विद्यया हैवैते इति चावधारणं विद्यामयक्रत्वन्वयेन विद्यारूपत्वज्ञापनार्थम् इति निश्चीयते ॥

टी० क्रतुसन्निधानं बुद्धिस्थत्वं सम्पादितानां तथात्वेनानुसंहितानामित्यर्थः, इष्टकचिताग्न्यङ्गकत्वेन मनश्चितादिनिरपेक्षत्वात् नैषां क्रियामयक्रत्वनुप्रवेश इत्यत्राह "विकल्प्यमाना" इति, विद्यारूपाणां क्रियामयक्रत्वनुप्रवेशः कथमित्यत्राह "विद्यारूपाणामपी"ति, ग्रहः—पात्रविशेषः । तस्य विद्यारूपत्वमुपपादयति "यथे"ति, विवाक्ये—विगतवाक्ये । यद्वा अविवाक्ये—विविधवाक्यरहिते मनोनिष्पाद्योपयोगित्वेन ग्रहस्य मानसत्वं, न हि स्वरूपेण विद्यते ॥ सू० अतिदेशाच्च ॥ ४५ ॥ वीर्यं कार्यंकरत्वसामर्थ्यं अङ्गमुपकारकं कुर्वन्तो मनश्चितादयोऽङ्गानि इत्यत्राह "ततश्चे"ति, एवं प्राप्त इति । सू० विद्यैव तु निर्धारणाद्दर्शनाच्च ॥ ४६ ॥ विद्यारूपक्रत्वन्वयिन इति सूत्रे विद्या—शब्दो लाक्षणिक इत्यर्थः । विद्याचित एवेत्येतच्छ्रुतिरेवोपपादयति "विद्यया हैवैत" इति, दर्शनाच्चेति सूत्रखण्डं व्याचष्टे—

सू० दृश्यते चाचैषां श्रेणी विद्यारूपः क्रतुः ते मनसैवाधीयन्त मनसैवाचीयन्त मनसैषु ग्रहा अगृह्यन्त मनसा स्तुवन्त मनसा संशन् मनसा पश्यति यत्किञ्च यज्ञे कर्म क्रियते यत्किञ्च यज्ञीयं कर्म मनसैव तेषु मनोमयेषु मनस्वित्सु मनोमयमक्रियत इति, इष्टकचितेष्वग्निषु यत्क्रियामयं यज्ञीयं कर्म क्रियते तन्मनोनिर्वर्त्येषु मनश्चिताद्य-

ग्निषु मनोमयमेवाक्रियते"ति वचनात्, क्रतुरपि विद्यामयोऽत्र प्रतीयते । नन्वत्र विधिपदाश्रवणात् फलसम्बन्धाप्रतीतेश्चेष्टकाचिताग्न्युत्थापितक्रियामयक्रतुप्रकरणाद्विद्यामयक्रत्वन्वयेन विद्यारूपतैषां बाध्येत, नेत्याह—

**सू० श्रुत्यादिबलीयस्त्वाच्च न बाधः ॥ ४७ ॥**

श्रुतिलिङ्गवाक्यानां प्रकरणाद्बलीयस्त्वेन श्रुत्याद्यवगतः क्रतुरेषां तदन्वयश्च दुर्बलेन प्रकरणेन बाधितुं न शक्यते, श्रुतिस्तावत् "ते हैते विद्याचित एवे"ति तान् विद्द्योति विद्यया हैवैत एवं विदश्चिता भवन्ती"ति, विद्यया—विद्यामयेन क्रतुना सम्बद्धा मनश्चितादयश्चिता भवन्तीत्यर्थः, तान् हैतानेवंविदे सर्वदा सर्वाणि भूतानि विचिन्वन्त्यपि स्वपते" इति लिङ्गं, वाक्यं च "एवंविदे चिन्वन्ती"ति, समभिव्याहारोवाक्यम् एवंविदे विद्यामयक्रतुमते सर्वदा सर्वाणि भूतानि विचिन्वन्तीत्यर्थः ॥

टी० दृश्यते चेत्यादिना, मनसैष्विति एषु मनश्चितादिषु यत् किञ्च यज्ञे कर्म क्रियते प्रधानभूतं कर्म क्रियते यत् किञ्च यज्ञीयं कर्म अङ्गभूतं कर्मेत्यर्थः । अनन्तरसूत्रशङ्कामाह "नन्वि"ति, विधिपदाश्रवणेऽपि फलसम्बन्धे सति विधिः कल्प्यते सोऽपि नास्तीत्याह "फलसम्बन्धाप्रतीतेश्चे"ति, सू० श्रुत्यादिबलीयस्त्वाच्च न बाधः ॥ ४७ ॥ विद्ययेति प्रयोजनतया हेतुः विद्यामयक्रतुसम्बन्धेन तन्निर्वर्त्तनार्थमित्यर्थः । वाक्यत्वमुपपादयति 'समभिव्याहार"इति, यथोक्तविद्यामयक्रतुमतः पुरुषस्य कृते हि एतानग्नीन् सर्वभूतानि चिन्वन्ति इत्यर्थः । लिङ्गत्वमुपपादयति ।

सू० सर्वभूतकर्तृकं सर्वकालव्यापिचयनं मनसा सम्पादितं परिमितकर्तृकालक्रियामयेष्टकचितकार्यद्वारेण क्रत्वनुप्रवेशसम्भवमलभमानं विद्यामयक्रत्वनुप्रवेशे लिङ्गं भवति, यच्चेदमुक्तं विधिप्रत्ययाश्रवणात् फलसम्बन्धाप्रतीतेश्च क्रियामयात्क्रतोरन्योऽत्र विद्यामयः क्रतुर्न सम्भवतीति तत्राह—

## सू० अनुबन्धादिभ्यः प्रज्ञान्तरपृथक्त्ववद् दृष्टश्च तदुक्तम् ॥ ४८ ॥

दृष्टकचिताऽन्वयिनः क्रियामयात्क्रतोर्विद्यामयोऽयं क्रतुः पृथक्त्वेनानुबन्धादिभ्यः पृथक्त्वहेतुभ्योऽवगम्यते, अनुबन्धाः यज्ञानुबन्धिनो ग्रहस्तोत्रशस्त्रादयः। मनसैषु ग्रहा अगृह्यन्त मनसा स्तुवन्त मनसा शंसन्नित्यादिना प्रतिपादिताः, आदि—शब्देन श्रुत्यादयः पूर्वोक्ता गृह्यन्ते, श्रुतिलिङ्गादिभिः सानुबन्धैर्विद्यामयः क्रतुः पृथगवगम्यत इत्यर्थः। प्रज्ञान्तरपृथक्त्ववत्। यथा प्रज्ञाऽन्तरं दहरविद्यादि क्रियामयात्क्रतोः पृथग्भूतं श्रुत्यादिभिरवगम्यते एवमयमपि, एवं चानुबन्धादिभिः पृथग्भूते विद्यामये यज्ञेऽवगते सति विधिः परिकल्प्यते हृष्टश्चानुवादसरूपेषु कल्प्यमानो विधिः तदुक्तं "वचनानि त्वपूर्वत्वा"दिति, फलं च तेषामेवैकैक एव तावान् यावानसौ पूर्व इत्यतिदेशात्, स्वक्रतुद्वारेणेष्टकचितस्याग्नेर्यत्फलं तदेव मनश्चितादीनामपि स्वक्रतुद्वारेण फलमित्यवगम्यते ॥

टी० "सर्वभूते"ति, सर्वभूतकर्तृकत्वेन सर्वकालव्यापित्वेन च मनसाऽनुसंहितस्य चयनस्य परिमितकालकर्त्तृक्रियामयेष्टकाचिततुल्यकार्यतया क्रत्वनुप्रवेशासम्भवो विद्यामयक्रत्वनुप्रवेशेलिङ्गमित्यर्थः । विद्यामयः क्रतुः सर्वकालवर्त्तित्वेन सर्वभूतकर्त्तृकत्वेचानुसन्धीयते, अतस्तादृशं चयनन्तादृशक्रत्वयीति भावः । अनन्तरसूत्रमवतारयितुं पूर्वमुक्तं पूर्वपक्षहेतुमनुवदति "यच्चेदमि"ति, । सू० अनुबन्धादिभ्यः प्रज्ञान्तरपृथक्त्ववद् दृष्टश्च तदुक्तम् ॥ ४८ ॥ दृष्टश्चानुवादसरूपेष्विति फलसम्बन्धश्रवणाद्विधिकल्पनं श्रुतहानप्रसङ्गभयाद्धि, क्रियते तदत्रापि तुल्यं, सानुबन्धैः श्रुत्यादिभिर्विद्यामयक्रतोरवगतत्वात् श्रुतहानप्रसङ्गपरिहारार्थं विधिः कल्प्यत इति भावः । किञ्च अधिकं फलश्रवणमस्तीत्याह "फलं चे"ति, इष्टकाचितस्यायेयेत्फलमिति फलकामनया कृतं चेत् तत्फलावाप्तिः, अन्यथा चेन्मुक्तिः फलमिति भावः । अनन्तरसूत्रशङ्कामाह—

सू० यत्पुनरतिदेशेन तुल्य[१]वीर्यत्वावगमात् क्रियामयक्रत्वनुप्रवेशोऽवगम्यत इत्युक्तं तत्राह—

**सू० न सामान्यादप्युपलब्धेर्मृत्युवन्न हि लोकापत्तिः ॥ ४९ ॥**

नावश्यमतिदेशाद्वान्तरव्यापारस्यापि तुल्यतया भवितव्यं येन क्रियामयक्रत्वनुप्रवेश एषां स्यात्, यस्मात् यस्मात्कस्माच्चित्सामान्यमात्रादतिदेशोपलब्धेः, उपलभ्यते हि "स एष एव मृत्युर्य एतस्मिन्मण्डले पुरुष" इत्यादिषु संहर्तृत्वादिसामान्यमात्रातिदेशः, न हि तत्र मण्डलपुरुषस्य मृत्त्युवत्तल्लोकापत्तिलक्षणप्राप्तिरपि भवति, एवमिहापि मनश्चितादीनामिष्टकाचितान्निवद्भावातिदे-

१ तुल्यकार्यत्वावगमादिति पा० ।

समाचेनेष्टकचितानिदेशरूपक्रियामयक्रत्वनुप्रवेशेनापि न भवितव्यम्, अत इष्टकचितान्ने: स्वक्रतुद्वारेण यत्फलं तदेव मनश्चितादीनामपि विद्यामयक्रतुद्वारेण फलमित्यतिदेशादवगम्यते ॥

## सू० परेण च-शब्दस्य ताद्विध्यं भूयस्त्वात्त्वनुबन्धः ॥ ५० ॥

परेण च ब्राह्मणेनास्यापि मनश्चिताद्यभिधायिनः शब्दस्य ताद्विध्यं-तद्विधत्वं, विद्यामयप्रतिपादकत्वमवगम्यते, परेण हि ब्राह्मणेन "अयं वाव लोक एषोऽग्निश्चितस्तस्याप एव परिश्रिता इत्यादिना स यो हैतदेवं वेद लोकं पृणानमेनं भूतमेतत्सर्वमभिसम्पद्यत इति पृथक्फला विद्यैव विधीयते, तथा वैश्वानरविद्यादौ विद्यैव विधीयते, अतोऽग्निरहस्यस्य क्रियैकविषयत्वं नास्ति, एवं तर्हि विद्यामयामनश्चितादयो बृहदारण्यकेऽनुबन्धव्याः किमर्थमिहानुबध्यन्ते तत्रोच्यते भूयस्त्वात्त्वनुबन्ध इति, मनश्चितादिषु सम्पादनीयानामग्न्यङ्गानां भूयस्त्वात्तत्सन्निधाविहानुबन्धः कृतः ॥ पूर्वविकल्पाधिकरणं समाप्तम् ॥

"यत्पुनरि"ति, सू० न सामान्यादप्युपलब्धेर्मृत्युवन्न हि लोकापत्तिः ॥ ४९ ॥ अवान्तरव्यापारस्य क्रियामयक्रत्वनुप्रवेशस्येत्यर्थः । तल्लोकापत्तिरिति व्याख्येयं पदं, तच्छब्दः पूरकतयाऽध्याहृतः । तद्व्याचष्टे "तद्देशप्राप्तिरि"ति, अग्निवद्भावातिदेशमात्रेण अग्निवद्भावः-अग्नितुल्यत्वम् इष्टकचिताग्निदेशरूपेति, देशः-आश्रयः अङ्गस्याश्रयोऽङ्गी इष्टकचिताग्न्यङ्गिरूपेत्यर्थः । एवं प्रकरणादपि प्रबलैः श्रुत्यादिभिर्विद्यामयक्र-

त्वङ्गत्वमुक्तम् । अथ प्रकरणेनाप्ययमर्थउपपाद्यते । सू० परेण च-शब्दस्य ताद्विध्यं भूयस्त्वात्त्वनुबन्धः ॥ ५० ॥ "एष लोको भूः आपस्समुद्राः परिश्रुताः परिस्तरणानि एतं लोकं पृणानं, पृ पालनपूरणयोः पूरयन्तं भुवं एतदेवं वेद लिङ्गव्यत्ययः एतमग्निं वेदेत्यर्थः । पूर्वविकल्पाधिकरणं समाप्तम् ॥

शरीरे भावाधिकरणम् ।

## सू० एक आत्मनः शरीरे भावात् ॥ ५१ ॥



भा० सर्वासु परविद्यासूपास्योपासनस्वरूपवदुपासकस्वरूपस्यापि ज्ञातव्यत्वमुक्तं, त्रयाणामेव चैवमुपन्यासः प्रश्नश्चेति, वक्ष्यति चास्य प्रत्यगात्मनः परमात्मात्मकत्वेनानुसन्धानमा"त्मेति तूपगच्छन्ति ग्राहयन्ति चे"ति किमयं प्रत्यगात्मा ज्ञाता कर्त्ता भोक्तेहामुत्र संचारक्षमोऽनुसंन्धेयः? उत प्रजापतिवाक्योदितापहतपाप्मत्वादिस्वरूपः? किं युक्तम्, ज्ञातृत्वाद्याकारमात्र इत्येके मन्यन्ते, कुतः अस्योपासकस्यात्मनः शरीरे भावात्, आत्मनः शरीरे वर्त्तमानस्य तादृशमेव रूपं तावतैवानुसन्धानेन तत्फलसिद्ध्युपपत्तेश्च, न हि कर्मस्वधिकृतानां स्वर्गादिफलार्थिनां ज्ञातृत्वाद्यतिरेकेण फलानुभवदशायां यादृशं रूपं तादृशं रूपं साधनानुष्ठानदशायामनुसन्धातव्यं तावतैव साधनानुष्ठानतत्फलयोः सिद्धेरतिरिक्तानुसन्धाने प्रयोजनाभावात्तदविशेषादिहापि तथैव । ननु चात्र "यथाक्रतुरस्मिँल्लोके पुरुषो भवति तथेतः प्रेत्य भवती"ति विशेषवचनादपहतपाप्मत्वाद्याकार एवानुसन्धातव्य इत्यवगम्यते ॥

टी० सू० एक आत्मनः शरीरे भावात् ॥ ५१ ॥ पूर्वाधिकरणं प्रासङ्गिकम्, अतस्तत्पूर्वाधिकरणेन सङ्गतिः तत्र सर्वविद्यासु भगवत एवोपास्यत्वमुक्तं, तथा प्रत्यगात्माऽप्यनुसन्धेय इति सङ्गतिः सर्वास्वित्यादिना सूचिता, त्रयाणामित्यादिसूत्रे त्रयाणामिति पदमुपायोपेयोपेतृपरं व्याख्यातं भाष्ये, दीपसारयोरुपास्योपासकोपासनपरं व्याख्यातम् । एतदभिप्रायेणाह "सर्वास्वि"ति, सिद्धान्ते प्रत्यगात्मन उपास्यकोटिनिक्षेपस्य वक्ष्यमाणत्वात् तदुपयोगित्वेनाह "वक्ष्यति चे"ति, सूत्रद्वयोक्तार्थोपजीवनेनेदमधिकरणं प्रवर्त्तत इत्यर्थः । परमात्मशरीरत्वेनानुसन्धेयः प्रत्यगात्मा किं ज्ञातृत्वकर्तृत्वभोक्तृत्वमात्राकारोऽनुसन्धेय ? उतापहतपाप्मत्वाद्याकारः ? किं यथाक्रतुरिति यथोपासनप्राप्तिवचनं परविषयम् ? उत प्रत्यगात्मविषयमपि भवती ? ति, तं यथायथोपासत इति तच्छब्दः किं परमात्मपरः ? उत जीवशरीरकपरमात्मपर ? इति परमात्ममात्रपरत्वे यथोपासनप्राप्तिवचनस्य परविषयत्वात् ज्ञातृत्वादिमात्राकारेण प्रत्यगात्माऽनुसन्धेय स्यात्, जीवशरीरकपरमात्मपरत्वे यथाक्रतुरिति श्रुतेर्विशेषणभूतजीवांशविषयत्वस्यापि सम्भवात् अपहतपाप्मत्वाद्याकारोऽनुसन्धेयः स्यात् शरीरस्यास्य रूपं तादृशमस्तु ततः किं तथाऽनुसन्धानस्येत्यत्राह "तावतैवे"ति, फलसिद्ध्युपपत्तिं दर्शयति "न ही"ति, तावता फलसिद्ध्यनुपपत्तिमुखेन चोदयति "ननु चे"ति, विषयव्यवस्थया परिहरति -

श्रु० नैवं "तं यथा यथोपासत" इत्युपास्यविषयत्वात्तस्येत्येवं प्राप्ते प्रचक्ष्महे ॥

## सू० व्यतिरेकस्तद्भावभावित्वान्न तूपलब्धिवत् ॥ ५२ ॥

न त्वेतदस्ति यज्ज्ञातृत्वाद्याकार एवानुसन्धेय इति, अस्यात्मनः संसारदशायां मोक्षदशायां योव्यतिरेकः सोऽपहतपाप्मत्वादिकोऽनुसन्धेयः । अस्य मोक्षदशायां

यादृशं रूपं तादृग्रूप एवोपासनवेलायामात्माऽनुसन्धेय इत्यर्थः । कुतः तद्भावभावित्वात्तद्रूपापत्तेर्यथाक्रतुरस्मिँल्लोके पुरुषो भवति तथेतः प्रेत्य भवति तं यथा यथोपासते तथैव भवती"ति यथोपासनमेव हि प्राप्तिः श्रूयते, न च परस्वरूपमात्रविषयमेवेदमिति वक्तुं शक्यते, प्रत्यगात्मनोऽप्युपास्यभूतपरब्रह्मशरीरतयोपास्यकोटिनिक्षिप्तत्वात्, अतः प्रजापतिवाक्योदितापहतपाप्मत्वादिगुणकप्रत्यगात्मशरीरपरमात्मोपासनस्य तथा रूपमेव प्राप्यमित्युक्तं भवति, अत एवैवं क्रतुरिहामुं लोकं प्रेत्याऽभिसम्भविताऽस्मी"त्युच्यते, तस्मात्प्रत्यगात्मा प्राप्याकार एवानुसन्धेयः । उपलब्धिवत्—ब्रह्मोपलब्धिवत्, यथा ब्रह्मोपलब्धिर्विहिता यथाऽवस्थितब्रह्मस्वरूपविषया तथाऽऽत्मोपलब्धिरपि यथाऽवस्थितात्मस्वरूपविषयेत्यर्थः । कर्मस्वात्मस्वरूपानुसन्धानं कर्माङ्गं, "यजेत स्वर्गकाम" इति कर्मानुष्ठानमेव हि फलाय चोद्यते, देहाद्यतिरिक्तज्ञातृत्वाद्याकारात्मावगतिः कालान्तरभाविफलसाधनकर्माधिकारार्थेति तावन्मात्रमेव तत्रापेक्षितमिति न किञ्चिदपहीनम् ॥ शरीरे भावाधिकरणं समाप्तम् ॥

टी० "नैव"मिति, एवं प्राप्त इति । सू० व्यतिरेकस्तद्भावभावित्वान्न तूपलब्धिवत् ॥ ५२ ॥ व्यतिरेक इत्युक्ते धर्ममात्रस्यानुसन्धेयत्वशङ्कानिवृत्त्यर्थमाह "अस्य मोक्षदशाया"मिति, तद्भावभावित्वात् तद्रूपापत्तेरिति, अपहतपाप्मत्वादिरूपापत्तेः तथाऽनुसन्धानसद्भावभावित्वादित्यर्थः । न चेत्यादि यथोपासनफलश्रुतिर्न विशेष्यमात्रविषया अपि तु

विशिष्टविषयेत्यर्थः । फलितमर्थमाह "अत" इति, तस्मात् ब्रह्मगुणानामिव शुद्धस्वरूपस्यापि ब्रह्मविशेषणत्वात्तदनुसन्धेयमित्यर्थः । तं यथा-यथोपासत इत्यत्र तच्छब्दो विशिष्टविषय इति भावः । अत एवेति-प्राप्याकारस्यानुसन्धेयत्वादेव हि प्राप्यचिन्तनमुच्यत इत्यर्थः । परे-चापरे च देहात्मभेदसमर्थनपरमधिकरणं व्याचक्षते, तदयुक्तं पादसङ्गत्यभावात्, उपासनेषु गुणोपसंहारानुपसंहारचिन्तनं हि पादकृत्यं प्रासङ्गिकचिन्तनमपि शास्त्रारम्भे करणीयं देहस्यैवात्मत्वे शास्त्रस्यानारम्भणीयत्वात् । ये पुनः साधनचतुष्टयं पूर्ववृत्तं वदन्ति तेषामथातो ब्रह्मजिज्ञासेत्यस्मात्पूर्वमेव निवेशनीयं देहोत्तीर्णनित्यात्मविवेकस्य नित्यानित्यवस्तुविवेकान्तर्गतत्वादिहामुत्र फलभोगविरागमुमुक्षुत्वयोस्तन्मूलत्वाच्च, ऐकशास्त्र्यं वदतामपि धर्मजिज्ञासायाः पूर्वमेव देहात्मविवेकः प्रसज्येदिति चेत् न माणवकहितैषिभिः पित्रादिभिरध्ययने कारिते सत्यपातप्रतीत्यवगतविलक्षणस्वर्गादिफलरागात् नित्यानित्यसन्देहेऽपि तदुपपत्त्यनुपपत्तिनिरूपणाय स्वयमेव शास्त्रप्रवृत्त्युपपत्तेर्देहव्यतिरेकनिश्चयानपेक्षत्वात्, प्रवृत्तस्य च देहातिरेकनिश्चयो भवत्येव "स एष यज्ञायुधी यजमानोऽञ्जसा स्वर्गं लोकमेती"त्यत्रलोकान्तरप्राप्तुरात्मनो देहातिरेकस्यापि निरूपितत्वात्, "शारीरके वक्ष्याम" इति वृत्तिकारोक्तिस्तु न देहातिरेकमात्राभिप्राया किन्तु जडत्वज्ञानात्मकत्वस्थूलत्वविभुत्वाणुत्वाद्याकारविषया मन्तव्या । अन्ये तु ब्रह्माहमस्मीत्युपासने स्थूलत्वाद्याकारोऽहं ब्रह्मेत्येवमनुसन्धेयं मानसप्रतिपत्तेर्दृष्टसजातीयाकाराविकल्पितविषयत्वनियमात् स्वर्णमात्रमित्युक्तेऽपि कुण्डलत्रिकोणचतुरस्राद्याकारेण विना स्वर्णप्रतीत्यनुपपत्तेः, नीरूपं ब्रह्मेत्युक्तेऽपि दीर्घादित्वनीलपीताद्यवच्छेदेन विना प्रतीत्यनुपपत्तेश्च, स्थूलत्वाद्याकारेण[1] विरहेणात्मप्रतिपत्तेर्विधातुमशक्यत्वादिति पूर्वपक्षं कृत्वा देहातिरेकः प्रतिपत्तव्यः, "तं स्वाच्छरीरात् प्रवृहेन्मुञ्जादिवेषीका-मित्यादिशास्त्रप्रवृत्तेः शरीरव्यतिरेकभावभावित्वात् । न च निराकारप्रतीत्यनुपपत्तिः, सन्तमसन्तं वा कञ्चन नीलपीताद्याकारमवर्जनीयं मनः

१ स्थूलत्वाद्यामारेण विनेति पा· ।

स्वयमेव ग्रहीष्यति, न च मिथ्याप्रतिपत्तिर्दोषः अन्यथा तत्प्रतीत्यनुपपत्तेः, अङ्गुष्ठमात्रो रवितुल्यरूप इत्यादिराकारश्च शास्त्रोपदिष्टः परस्य च महारजनाद्याकारोपदेशात् जीवस्यापि तुल्यस्वभावत्वात् तादात्म्यध्यानसौकर्याय तथाऽनुसन्धेयः सम्भूत्युपासनेषु विनाशोपासनेष्वस्तित्वमुभयोराकारः, अस्तीत्येवोपलब्धव्यस्तत्त्वभावेन चोभयोरिति श्रवणात्, अतो देहातिरिक्त आत्मा ब्रह्माऽहमस्मीति प्रतिपत्तव्य इति सिद्धान्तयन्ति, तदयुक्तं स्थूलत्वादिविरहेणापि सुखादिविशिष्टात्मावभासदर्शनादशक्यविधानत्वाप्रसक्तेः, । ननु सुखदुःखाद्योऽप्यौपाधिका निरुपाधिकस्वरूपं दुरनुसन्धानमिति चेत् सत्यं, तत् कदेति निरूपणीयं शुभाश्रयध्यानेन मनःपरिशोधनात् पूर्वं हि तत्तदा चाहं ब्रह्मेत्युपासनमविहितम् अशक्यत्वादेव, यदा तु शुभाश्रयसंशीलनपरिशोधितमुपदेशसहकृतं च मनः तदा निरुपाधिकस्वरूपानुसंधानक्षममिति नाशक्यविधिः, अत एव सिद्धान्ते मिथ्याभूतस्य यस्य कस्यचिदाकारस्यावलम्बनेऽपि न दोष इति कल्पनमप्ययुक्तं, नीलपीताद्याकारेणात्मानुसन्धानं परिशुद्धात्मसाक्षात्कारस्य न दृष्टोपकारकं विरुद्धत्वात्, अदृष्टोपकारकत्वं तु निष्प्रमाणकं, रवितुल्यरूपतोक्तिः प्रकाशस्वरूपताऽभिप्राया "यथा प्रकाशयत्येक" इति व्याख्यातत्वात्, यदि यत्किञ्चिन्नीलपीताद्याकारावलम्बनेन चिन्त्यमिति सिद्धान्तः तर्हि पूर्वपक्षसिद्धान्तयोरवैषम्यमेव स्यात्, महारजनाद्याकारेण तादात्म्यानुसन्धानमप्ययुक्तं तस्येश्वराकारत्वात्, घटशरावयोरिव तुल्यरूपयोर्देवदत्तयज्ञदत्तयोरिव च जीवेश्वरयोस्तादात्म्यानुपपत्तेः, सम्भूत्युपासने विनाशोपासने चास्तित्वमुभयोराकार इत्यपि दुरुक्तं, जीवब्रह्मतादात्म्यज्ञानस्य जडजीवतादात्म्यानुसन्धानस्य च वैषम्याभावात्, असाधारणाकारानुसन्धाने हि वैषम्यसिद्धिः, सत्ता च सर्वसाधारणी, सदस्मीत्यनुसन्धाने च शास्त्रवैयर्थ्यं न ह्यसदस्मीति कश्चिदात्मानं जानाति, असाधारणाकारानुसन्धाने च भेद एवानुसंहितः स्यात्, न तु तादात्म्यम्, असाधारणाकारप्रतिपन्नयोर्जीवपरयोः साधारणाकारानुसन्धानमेव तादात्म्यप्रतिपत्तिरिति चेत्तर्हि खण्डो मुण्डो गौरितिवदेकजातीयत्वमेवानुसंहितं स्यात्,

ततश्च तादात्म्यविधानवैयर्थ्यं, न हि साधारणाकारविधुरं किञ्चित् द्रव्यमस्ति "अस्तीत्येवोपलब्धव्य" इति श्रुतिस्तु जन्मादिभावविकाराराहित्यविषया न तु सन्मात्रं ब्रह्मेत्येवं परा, अतो यथाभाष्यमेवाधिकरणं युक्तम् ॥ शरीरे भावाधिकरणं समाप्तम् ॥

अङ्गावबद्धाधिकरणम् । **सू० अङ्गावबद्धास्तु न शाखासु हि प्रतिवेदम् ॥ ५३ ॥**

सू० "ओमित्येतदक्षरमुद्गीथमुपासीत लोकेषु पञ्चविधं सामोपासीत उक्थमुक्थमिति वै प्रजा वदन्ति तदिदमेवोक्थमियमेव पृथिवी अयं वा लोक एषोऽग्निर्चित" इत्येवमाद्याः क्रत्वङ्गाश्रया उपासना भवन्ति ताः किं यासु शाखासु श्रूयन्ते तास्वेव नियताः? उत सर्वासु शाखासु उद्गीथादिषु सम्बन्ध्यन्त इति विचारः ॥

टी० सू० अङ्गावबद्धास्तु न शाखासु हि प्रतिवेदम् ॥ ५३ ॥ यत्र-यत्र ब्रह्मण उपास्यत्वं तत्र तत्र शुद्धस्य जीवस्योपास्यत्वमुक्तम्, एवं यत्र यत्र शाखासूद्गीथाद्यनुप्रवेशः तत्र तत्र सर्वत्रउद्गीथाद्युपासनानुप्रवेशोऽस्ति न वेति शङ्कया संगतिः, उद्गीथाद्युपासनानि किं प्रतिशाखं व्यवतिष्ठेरन्? उत ने? ति, उद्गीथमुपासीतेत्युद्गीथ-शब्दः किमुद्गीथमात्रे वर्त्तते? उत स्वरादिभेदभिन्नोद्गीथे? किं स्वरादिविशेषविशिष्टोद्गीथव्यक्तेः, सन्निधिः? उत सर्वोद्गीथव्यक्तीनां संनिधि? रिति व्यक्तिविशेषस्य संनिधिश्चेत् तस्यैवोद्गीथ-शब्दवाच्यत्वात् तत्तच्छाखाविशेषेषूपासनव्यवस्था, सर्वव्यक्तिसंनिधिश्चेदुद्गीथ-शब्दस्य उद्गीथमात्रवाचित्वात्तद्विषयोपासनानि न व्यवतिष्ठन्त इति अधिकरणारम्भाक्षेपशङ्कां परिहरति-

सू० सर्ववेदान्तप्रत्ययत्वे स्थितेऽपि प्रतिवेदं स्वरभेदादुद्गीथादयो भिद्यन्त इति तत्र तत्र व्यवतिष्ठेरन्निति युक्ता

शङ्का, किं युक्तं व्यवतिष्ठेरन्निति, कुतः उद्गीथमुपासीतेति सामान्येनोद्गीथसम्बन्धितया श्रुतायास्तस्यामेव शाखायां स्वरविशेषयुक्तस्योद्गीथविशेषस्य सन्निधानात्तस्मिन्नेव विशेषे पर्यवसानं युक्तमिति, इत्येवमाद्यास्तास्वेव शाखासु व्यवतिष्ठेरन्नित्येवं प्राप्ते प्रचक्ष्महे अङ्गावबद्धास्त्विति, तु—शब्दः पक्षं व्यावर्त्तयति, न ह्युद्गीथाद्यङ्गावबद्धा उपासनास्तास्वेव शाखासु व्यवतिष्ठेरन् अपि तु प्रतिवेदं सम्बध्येरन्, सर्वासु शाखास्वित्यर्थः हि—शब्दो हेतौ, यस्माच्छ्रुत्यैवोद्गीथाद्यङ्गमात्रावबद्धास्तस्मात् यत्रोद्गीथादयस्तत्र सर्वत्र सम्बध्येरन् । यद्यपि स्वरभेदेनोद्गीथव्यक्तयो भिद्यन्ते तथाऽपि सामान्येनोद्गीथश्रुत्या सर्वा व्यक्तयः संनिहिता इति न क्वचिद् व्यवस्थायां प्रमाणमस्ति, सर्वशाखाप्रत्ययन्यायेन च सर्वासु शाखासु क्रतुरेकः, अतः सर्वासु शाखास्वेकस्य क्रतोः सन्निधानात् क्रत्वङ्गभूतोद्गीथादयोऽपि सन्निहिता इति नैकस्य सन्निधिविशेषोऽस्तीति न व्यवस्था ॥

टी० "सर्ववेदान्ते"ति, यथा कर्म चोपासनं च सर्वशाखास्वेकं तथोद्गीथस्याप्येकत्वात् सर्वत्रोद्गीथानुसारेण प्राप्नुवन्त्युपासनानीत्यधिकरणारम्भाक्षेपः । उद्गीथादीनां स्वरभेदेन व्यक्तिभेदात् तत्तत्स्वरविशेषविशिष्टव्यक्तिविषया उपासना? उत सर्वोद्गीथव्यक्तिविषया? इति संशयः स्यादित्याक्षेपसमाधिरित्यर्थः तस्मिन्नेव विशेष इति लोके गामानयेत्यादिषु सामान्यशब्दानां व्यक्ति[1]विशेषपर्यन्तत्वदर्शनादिति भावः । एवं

१ सन्निहितविशेषपर्यन्तत्वादिति पा० ।

प्राप्त इति यस्मात् श्रुत्यैवोद्गीथाद्यङ्गमात्रविषयाः प्रतीयन्त इति तस्मादित्यर्थः। पूर्वपक्षयुक्तिमनूद्य प्रतिवक्ति "यद्यपी"ति, न क्वचिद्व्यवस्थायां प्रमाणमस्तीति, गामानयेत्यादिषु सर्वव्यक्तीनामानयनायोग्यत्वं व्यक्तिविशेषे शब्दस्य व्यवस्थापकं न त्वसन्निधिः सामान्येन व्यक्तीनां धीस्थत्वात्, धीस्थत्वं हि सन्निधिः, अत्र तु तादृशायोग्यत्वादिव्यवस्थापकाभावात् शब्दस्य स्वतःप्राप्तं सर्वव्यक्तिविषयत्वं तिष्ठतीति भावः । सन्निहिताः—बुद्धिस्थाः, अनेन सन्निधेर्व्यवस्थापकत्वमपास्तं निरङ्कुशया शब्दशक्त्या सर्वव्यक्तीनां बुद्धिस्थत्वात् । अर्थस्वभावादपि सर्वोद्गीथव्यक्तिसन्निधिमाह "सर्वशाखाप्रत्यये"ति, अङ्गिनस्सन्निधानादङ्गान्यपि सन्निहितानि भवन्ति इत्यर्थः ॥

## सू० मन्त्रादिवद्वा विरोधः ॥ ५४ ॥

सू० वा–शब्दश्चार्थे, आदि–शब्देन जातिगुणसंख्यासादृश्यक्रमद्रव्यकर्माणि गृह्यन्ते, यथा मन्त्रादीनामेकैकशाखास्वाम्नातानामपि शेषिणः क्रतोः सर्वशाखास्वेकत्वेन यथायथं श्रुत्यादिभिः सर्वासु शाखासु विनियोगो न विरुध्यते तद्वदिहाप्यविरोधः ॥ अङ्गावबद्धाधिकरणं समाप्तम् ।

भूमज्यायस्त्वाधिकरणम् ।

## सू० भूम्नः क्रतुवज्ज्यायस्त्वं तथा हि दर्शयति ॥ ५५ ॥

"प्राचीनशाल औपमन्यव इत्यारभ्य वैश्वानरविद्याऽऽम्नाता तत्र वैश्वानरः परमात्मा त्रैलोक्यशरीर उपास्यः श्रुतः स्वर्लोकादित्यवाय्वाकाशपृथिव्यवयवः, तत्र च द्यौर्मूर्द्धा आदित्यश्चक्षुर्वायुः प्राणः आकाशः सन्देहोमध्यकाय इत्यर्थः, आपो वस्तिः पृथिवी पादावित्यवयवविशेषाः, तत्र संशयः किमस्य त्रैलोक्यशरीरस्य व्यस्तश्चो-

पासनं कर्त्तव्यम्? उत व्यस्तस्य समस्तस्य च? अथ समस्तस्यैवे?ति, किं युक्तं, व्यस्तस्येति कुतः, उपक्रमे व्यस्तोपासनोपदेशात्, तथा ह्युपदिश्यते, औपमन्यवादयः किलोद्दालकषष्ठाः केकयमश्वपतिमुपसद्यात्मानमेवेमं वैश्वानरं संप्रत्यध्येषि तमेव नो ब्रूही"ति पप्रच्छुः, स च तेभ्यः प्रत्येकं स्वोपास्यान् द्युप्रभृतीनुक्तवद्भ्यो मूर्द्धादिषु व्यस्तेषूपासनं तत्र तत्र फलं चोक्तवान् ॥

टी० सू० मन्त्रादिवद्वा विरोधः ॥ ५४ ॥ वेदान्तरोत्पन्नानामग्नेर्वै होत्रं वे"त्वित्यादिमन्त्राणां वेदान्तरेऽपि परिग्रहो दृष्टः, बह्वृचपठितस्य "योजात एव प्रथमो मनस्वा"निति सूक्तस्याध्वर्यवे सजनीयं शस्यमिति विनियोगो दृष्टः, अजोऽग्नीषोमीय इत्युपदिष्टा जातिस्तदुपदेशरहिते शाखाभेदे छागस्य वपाया मेदसोऽनुब्रूहि इत्याश्रीयते, एवं गुणादीनां विनियोगो द्रष्टव्यः, प्रकरणाम्नानमात्रेणान्यत्र प्रवेशाभावे मन्त्रादीनामपि शाखाऽन्तरे प्रवेशो न स्यादित्यतिप्रसङ्गरूपस्तर्कोऽभिप्रेतः, अविरोधः शाखाविशेषस्थस्यान्यत्र प्रवेशे विरोधाभावः, मन्त्रादीनां श्रुत्यादिभिर्विनियोगादविरोधश्चेदिहाप्युद्गीथपदश्रुत्या विनियोगादविरोध इत्यभिप्रायः, एवं सर्वशाखासूद्गीथानुवृत्त्या सर्वशाखिनामुपासनेष्वधिकारः फलम् ॥ अङ्गावबद्धाधिकरणं समाप्तम् । सू० भूम्नः क्रतुवज्ज्यायस्त्वं तथा हि दर्शयति ॥ ५५ ॥ पूर्वाधिकरणे उद्गीथादिकं प्रस्तुतं, तत्र सामावयवभूतोद्गीथादेः समस्तस्य व्यस्तस्य चोपासनं श्रुतिसिद्धम्, एवं वैश्वानरविद्यायां किं समस्तस्योपासनं कार्यम्? उत व्यस्तस्य? उतोभयस्ये?ति शङ्कया सङ्गतिः, स्वर्लोकादिषु किं किमवयवभूतमित्यत्राह "तत्र चे"ति, किं वैश्वानरविद्यायां व्यस्तोपासनविधिः? उत व्यस्तस्य समस्तस्य च? उत समस्तस्यैव? किं प्रत्यवयवं फलश्रवणात् यस्त्वेतमेवमित्युपासनसमुदाया-

नुवादः ? उत व्यस्ते समस्ते च फलश्रवणादुभयत्र विधिः कल्प्यः ? उत प्रत्येकफलश्रवणमर्थवादः, आद्ये व्यस्तोपासनविधिः, द्वितीये उभयविधिः, तृतीये समस्तस्यैव विधिः ।

मू० अन्त्यन्नं पश्यति प्रियं भवत्यस्य ब्रह्मवर्चसं कुले य एतमेवमात्मानं वैश्वानरमुपास्ते मूर्द्धा त्वेष आत्मन" इति एष वै सुतेजा आत्मा वैश्वानर" इत्यादिना तेषु तेषूपासनेषूपास्यस्य वैश्वानरत्वं चाह, अतो व्यस्तस्यैवोपासनं कर्त्तव्यम् । परत्र यस्त्वेतमेवं प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्त इति द्युप्रभृतिप्रदेशावच्छिन्नमात्रे वैश्वानरे उक्तस्य मूर्द्धाद्युपासनस्य समासेनोपसंहार इत्यवगन्तव्यम् । अपर आह एवमेव समस्तस्याप्युपासनं कार्यमिति पृथक्फलनिर्देशात् यस्त्वेतमेवं प्रादेशमात्रमभिविमानं वैश्वानरमुपास्ते सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मस्वन्नमत्ती"ति न चैतावता वाक्यभेदः यथा भूमविद्योपक्रमे नामाद्युपासनं तत्फलं चाभिधाय "एष तु वा अतिवदति यः सत्येनातिवदती"त्यादिना भूमविद्यामुपदिश्य स स्वराड् भवति तस्य सर्वेषु लोकेषु कामचारो भवतीति तत्फलं च व्यपदिशति, तत्र भूमविद्यापरत्वेऽपि वाक्यस्य नामाद्यवान्तरोपासनं तत्फलं चाङ्गीक्रियते तथेहापीत्येवं प्राप्तेऽभिधीयते भूम्नः क्रतुवज्ज्यायस्त्वमिति भूम्नो विपुलस्य समस्तस्यैव ज्यायस्त्वं प्रामाणिकत्त्वमित्यर्थः एकवाक्यत्वावगतेः, तथा हि प्राचीनशाल औप-

मन्यव इत्युपक्रम्योद्दालको ह वै भगवन्तोऽयमारुणि: संप्रतीममात्मानं वैश्वानमध्येति तं हं ताभ्यागच्छामेति वैश्वानरात्मबुभुत्सयौपमन्यवादय: पञ्च महर्षय: तम् उद्दालकमुपेत्य तत्र वैश्वानरात्मवेदनमलभमानास्तेन च सहाश्वपतिं कैकयं वैश्वानरात्मवेदिनमुपसङ्गत्यात्मानमेवेमं वैश्वानरं संप्रत्येध्येषि तमेव नो ब्रूहीति पृष्ट्वा तस्मात्कात्परमात्मानं वैश्वानरं स्वर्लोकादिपृथिव्यन्तशरीरमुपास्यमवगम्य तत्फलं च सर्वलोकसर्वभूतसर्वात्मान्नभूतब्रह्मानुभवमवगतवन्त इत्युपसंहारतो वाक्यस्यैकत्वमवगम्यते । एवमेकवाक्यत्वेऽवगते सत्यवयवविशेषेषूपास्तिवचनं फलनिर्देशश्च समस्तोपासनैकदेशानुवादमात्रमिति

टी० अन्त्यवम् अत्रमत्ति प्रियं पश्यति अस्य कुले ब्रह्मवर्च्चसम्भवतीत्यन्वय:, वैश्वानरोपासनं ह्युपक्रान्तं तत्कथं मूर्द्धमात्रोपासनोपदेश इत्यत्राह "वैश्वानरत्वं चाहे"ति, एतमेवमात्मानं वैश्वानरमुपास्ते इत्यादिष्वित्यर्थ: व्यस्तोपासनं विवक्षितं चेत् कथं समस्तस्योपसंहार? इत्यत्राह "परत्रे"ति, वैश्वानर उक्तस्य वैश्वानरविषयत्वेनोक्तस्येत्यर्थ: । अपर आहेति पृथक्फलनिर्देशात्, व्यस्तोपासनफलात् पृथक्फलनिर्देशाद्वाक्यभेद:, महावाक्यभेद: अनेकार्थप्रतिपादने सत्यपि वाक्यैकत्वे दृष्टान्तमाह "यथा भूमे"ति, समास्तोपासनं प्रधानप्रतिपाद्यं व्यस्तोपासनं प्रासङ्गिकमिति न विरोध इति भाव: । एवं प्राप्त इति भूम-शब्दोधर्मिपर: वैश्वानरात्मजिज्ञासून् प्रति द्युपृथिव्याद्यवयवविशिष्टविषयोपासनतत्फलोपदेशादेकवाक्यत्वमवगतम् । अनुवादमात्रमिति ॥

स्व० निश्चीयते क्रतुवत् यथा "वैश्वानरं द्वादशकपालं निर्वपेत् पुत्रे जाते" इति विहितस्यैव क्रतोरेकदेशा यदष्टाक-

पालो भवतीत्यादिभिरनूद्यन्ते । तथा समस्तोपासनमेव न्याय्यं न व्यस्तोपासनं, तथा हि दर्शयतीयं श्रुतिः व्यस्तोपासनेऽनर्थं ब्रुवती । "मूर्द्धा ते व्यपतिष्यद्यन्मां नागमिष्य" इति अन्धोभविष्यसि यन्मां नागमिष्य इत्यादिका, अत इदमप्यपास्तं यन्नामाद्युपासनसाम्यमुक्तं, तत्र हि नामाद्युपासनेष्वनर्थो न श्रुतः, नामाद्युपासनेभ्यो भूमोपासनस्यातिशयितफलत्वं श्रुतम् एष तु वा अतिवदति यः सत्येनातिवदती"ति, तत एव तत्र भूमविद्यापरत्वेऽपि वाक्यस्य नामाद्युपासनानां सफलानां विवक्षितत्वम्, अन्यथाऽतिशयितफलत्वनिमित्तातिवादेन भूमविद्यास्तुत्यनुपपत्तेः, अतः समस्तोपासनमेव न्याय्यम् । भूमज्यायस्त्वाधिकरणं समाप्तम् ॥

शब्दादिभेदाधिकरणम् ।

## सू० नाना शब्दादिभेदात् ॥ ५६ ॥

इह ब्रह्मविद्याः सर्वा ब्रह्मप्राप्तिरूपमोक्षैकफलाः सद्विद्याभूमविद्यादहरविद्योपकोसलविद्याशाण्डिल्यवि-द्यावैश्वानरविद्या ऽऽनन्दमयविद्याऽ—

टी० समुदायोपासनतत्फले विहिते तदन्तर्गततदेकदेशोपासनतदेकदेशफलकथनमनुवाद इत्यर्थः । समस्तोपासनफले सर्वदेशसर्वकालवर्त्तिसमस्तभोग्यजातं ह्यन्तर्गतमिति दर्शयितुं फलैकदेशेनुवादः कृतः, न तु तथाऽनुष्ठेयमिति ज्ञापयितुम् इतरथा वाक्यभेदात्, व्यस्तोपासने प्रत्यवायकथनाच्च यथोक्त एवार्थः । अत इदमपीत्यादि अनर्थाश्रयणमेकं वैषम्यमित्यर्थः । वैषम्यान्तरमाह "नामाद्युपा-

सनेभ्य" इति, नामाद्युपासनानां भूमविद्योपयोगित्वमस्ति आधिक्यस्य प्रतियोगित्वेनापेक्षितत्वात्, । अतिशयितफलश्रवणमस्तु ततः किमित्यत्राह "तत एवे" ति, विवक्षितत्वमुपपादयति "अन्यथे" ति, एवमर्थान्तराणां प्रधानार्थोपयोगित्वान्न वाक्यभेदो भूमविद्यायाम्, अत्र तूपासनानामन्योन्योपयोगित्वाभावाद्वाक्यभेदस्तिष्ठत्येवेत्यर्थः । अत इत्यधिकरणार्थोपसंहारः, ज्यायस्त्वशब्दश्रवणात् व्यस्तोपासनपक्षोऽपि सूत्रकाराभिमत इति चेन्न वाक्यभेदादिप्रसङ्गात्, ज्यायस्त्वशब्दस्तु प्रामाणिकत्वाभिप्रायेणाप्युपपन्नः, क्रतुवदिति दर्शपौर्णमासप्रभृतिषु सामस्त्येन साङ्गस्य प्रधानस्यैकस्य विवक्षितत्ववदिति परे व्याचक्षते ततोऽपि भाष्योक्तदृष्टान्त एवोचितः सादृश्यप्रकर्षात् क्रतोरङ्गोपचयात् फलोपचयवदित्यन्ये ते व्यस्तोपासनस्य सूत्रानुमतिमपि मन्यन्ते तदयुक्तं ज्यायस्त्व-शब्दस्यान्यथासिद्धेः पूर्वोक्तत्वात्, एकैकोपासननिन्दाया इतरप्रशंसार्थत्वाभिप्रायकल्पने गौरवात्तस्य च गतिशून्यत्वाभावेऽनुपपत्तेः, । भूमज्यायस्त्वाधिकरणं समाप्तम् ॥ सू० नानाशब्दादिभेदात् ॥ ५६ ॥ पूर्वं विद्याविशेषविषयचिन्ता कृता इदानीं सर्वविद्याविषयचिन्ता क्रियत इति सङ्गतिः ॥

भा० दहरविद्यादिकाः एकशाखागताः शाखान्तरगताश्चोदाहरणम्, अन्याः प्राणाद्येकविषयफलाश्च, किमत्र विद्यैक्यमुत विद्याभेद? इति संशय्यते । अत्रैवासां परस्परभेदे समर्थिते सत्येकस्या दहरविद्यादिकायाः सर्ववेदान्तप्रत्ययन्यायः किं युक्तं, विद्यैक्यमिति, कुतः वेद्यस्य ब्रह्मण एकत्वात्, वेद्यं हि विद्याया रूपम् अतो रूपैक्याद्विद्यैक्यमित्येवं प्राप्तेऽभिधीयते "नाने" ति, नाना भूता विद्याः कुतः शब्दादिभेदात् आदि-शब्देनाभ्यासंख्यागुणप्रक्रियानामधेयानि गृह्यन्ते, शब्दान्तरादि-

भिश्च विधेयभेदहेतवोऽनुबन्धभेदा दृश्यन्ते, यद्यपि वेद उपासीतेत्यादयः शब्दाः प्रत्ययावृत्त्यभिधायिनः, प्रत्ययाश्च ब्रह्मैकविषयाः तथाऽपि तत्तत्प्रकरणोदितजगदेककारणत्वापहतपाप्मत्वादिविशेषणविशिष्टब्रह्मविषयप्रत्ययावृत्त्यवबोधिनः ।

टी० अक्षरविद्यादिका इति इत्यादि–शब्देन न्यासो विवक्षितः सूत्रेऽपि शब्दादिभेदसद्भावात् उदाहरणं विषय इत्यर्थः । किं सर्वासां परविद्यानामैक्यम्? उत विद्याभेदः? किं सर्वासां ब्रह्मकर्मकत्वमुक्तिफलकत्वाविशेषादैक्यं न्याय्यं किं विद्यानां तत्तद्गुणविशेषविशिष्टतया श्रुतानां तावता निराकाङ्क्षत्वात् भेदो न्याय्यः, प्रथमे विद्यैक्यं द्वितीये विद्याभेदः । पौनरुक्त्यशङ्कां परिहरति अत्रैवासामित्यादिना, अविशेषपुनःश्रवणस्य प्रकरणभेदस्य च विद्याभेदहेतुत्वे सिद्धे सति हि विद्याविशेषाणां भेदाभेदविचारावतारः तस्मात्त[1]त्रेदमर्थमुपजीव्य पूर्वं वेदान्तप्रत्ययन्यायोऽवतारितः, तदपेक्षितः परस्परभेदोऽत्र निरूप्यत इत्यर्थः । अविशेषपुनःश्रवणस्य प्रकरणभेदस्य च भेदहेतुत्वे कर्मकाण्डसिद्धेऽपीह तदुपपादनम् अविधेयभूतवाक्यार्थज्ञानमात्रोपायत्वनिरासार्थमिति इदं स्वयमेव वक्ष्यति किं युक्तमिति रूपैक्यं फलैक्यं च पूर्वपक्षहेतुः एवं प्राप्त इति विधेयं साङ्गं प्रधानं कर्म, अनुबन्धस्तदेकदेशा धात्वर्थादयः शब्दादयोऽनुबन्धभेदहेतुत्वेन प्रधानविधेयभेदहेतव इत्यर्थः । यद्यपीत्यादि विषयैक्योऽपि धात्वर्थभेदाद्रूपभेदो माभूदिति प्रत्ययावृत्त्यभिधायिन इत्युक्तं, यजति ददाति जुहोति इत्यादयो भिन्नार्थतयैव लोके व्युत्पन्नाः अतः शास्त्रेऽपि ते स्वार्थभूतानुबन्धभेदज्ञापका उपासनध्यानादिशब्दा एकार्थतयैव व्युत्पन्नाः, वेदनोपासनादिशब्दाश्च सामान्यविशेषभावेनैकार्थविषयाः । तत्कथमनुबन्धभेदज्ञापकत्वमित्यर्थः । तथापीऽति "अर्थेनैव विशेषो हि निरा-

१ तस्मादत्रोक्तमर्थमुपजीव्येति पा० ।

कारतया भिन्नामित्यभिप्रायः, नन्वेवं सति रूपभेदात्को विशेषः ? उच्यते यागदानहोमेषु द्रव्य[1]ग्रहणे समानेऽपि देवतोद्देशपरस्वत्वापादनदेशविशेषविशिष्टप्रहाणगोचरतया यजत्यादिशब्दानां भिन्नार्थत्ववत् तत्तद्रूपविशेषविशिष्टप्रत्ययावृत्त्यवबोधित्वमुपासनादिशब्दानां तत्तत्प्रकरणावगतानां तत्र एकैकविद्याश्रवणवेलायां तेषामुपासनादिशब्दानां विलक्षण–

सू० प्रत्ययावृत्तिरूपा विद्या भिन्दन्ति ब्रह्मप्राप्तिरूपफलसम्बन्ध्युपासनविशेषाभिधायीनि च निराकाङ्क्षाणि वाक्यानि प्रतिप्रकरणं विलक्षणविद्याऽभिधायीनीति निश्चीयते, अस्मिन्नर्थे शब्दान्तरे कर्मभेद इत्यादिभिः पूर्वकाण्डोदितैः सूत्रैस्सिद्धेऽपि पुनरिह प्रतिपादनं वेदान्तवाक्यान्यविधेयज्ञानपराणीति कुदृष्टिनिरसनाय, अतो विद्याभेद इति स्थितम् ॥ शब्दादिभेदाधिकरणं समाप्तम् ॥

विकल्पाधिकरणम् ।

## सू० विकल्पोऽविशिष्टफलत्वात् ॥ ५७ ॥

टी० प्रत्ययावृत्तिबोधकत्वावगमो ऽप्युत्पत्तिस्थानीयः पश्चात्तासां विद्यानां भेदाभेदबुभुत्सायां विलक्षणार्थतया बुद्धिस्था उपासनादिशब्दाः शब्दान्तरस्थानीया इति तयोक्तिरुपचारात् एवं स्वरूपभेदश्चोक्तो भवति ब्रह्मेति प्रकरणभेद उक्तः । अत्रैतदर्थप्रतिपादनस्य प्रयोजनमाह "अस्मिन्नि"ति, अविधेयज्ञानपराणीति अत्र निर्विशेषविषयज्ञानपरत्वमपि निरसनीयमनुसन्धेयं बह्वधिकरणेषु बहुभिः सूत्रैर्विस्तरेणोक्तार्थस्य संक्षेपेण स्मारणं कुदृष्ट्यादिनिरसनं च प्रयोजनम् । अन्ये तु आत्मानं विद्यादिति वेदनस्य द्रव्यनिष्ठत्वादुद्देशद्वारेण विना ऽतिशयान्तरासम्भवेन प्रोक्षणावघातादीनामिवावान्तरकार्यभेदाभावेन कर्मभेदाभावात् आत्मनश्चैकत्वाद्वि-

१ द्रव्यप्रहाणे इति पा० ।

द्यैकत्वमित्युक्त्वा आत्मनः कार्यान्तरासम्भवेन सक्तुवदात्मना विद्यादिति विपरिणामस्य न्याय्यत्वात् भावार्थप्राधान्ये सति साध्यानामपूर्वाणां भेदेन भिन्नानुबन्धानां श्रवणादिप्रत्ययानां भेदोपपत्तेर्विद्याभेद इति वदन्ति उपासीत श्रोतव्यो मन्तव्य इति शब्दभेदादिति सूत्रं च योजयन्ति तदयुक्तं रागप्राप्ततयाऽनूदितयोः श्रवणमननयोर्विधेयेन ध्यानेनैक्यशङ्कानुदयात्, अत एव सिद्धान्ते साध्यापूर्वभेदाङ्गीकारेण भेदसमर्थनं चायुक्तं तेषां विधेयत्वेऽपि नैक्यशङ्का श्रवणादिस्वरूपभेदस्य लोकसिद्धत्वात्, अज्ञातप्रतीतिश्रुतार्थप्रतिष्ठापनवैशद्यरूपकार्यभेदस्य प्रसिद्धत्वाच्च ॥ शब्दादिभेदाधिकरणं समाप्तम् ॥ सू० विकल्पो विशिष्टफलत्वात् ॥ ५७ ॥ अस्मिन्नधिकरणे न्यासविद्याऽभिप्रेता । सङ्गतिमाह—

सू० ब्रह्मप्राप्तिफलानां सद्विद्यादहरविद्यादीनां नानात्वमुक्तम्, इदानीमासां विद्यानामेकस्मिन् पुरुषे प्रयोजनवत्त्वेन समुच्चयोऽपि सम्भवति? उत प्रयोजनाभावाद्विकल्प एवे?-ति विषये किं युक्तं, समुच्चयोऽपि सम्भवतीति, कुतः एकफलानां भिन्नशास्त्रार्थानामपि समुच्चयदर्शनात्, दृश्यते ह्येकस्यैव स्वर्गादेः साधनानामग्निहोत्रदर्शपूर्णमासादीनां तस्यैव स्वर्गस्य भूयस्त्वापेक्षयैकत्र पुरुषे समुच्चयः, एवमिहापि ब्रह्मानुभवभूयस्त्वापेक्षया समुच्चयोऽपि सम्भवतीत्येवं प्राप्ते प्रचक्ष्महे विकल्प एव न समुच्चयः सम्भवतीति कुतः, अविशिष्टफलत्वात्, सर्वासां हि ब्रह्मविद्यानामनवधिकातिशयानन्दब्रह्मानुभवः फलमविशिष्टं श्रूयते, ब्रह्मविदाप्नोति परं स एको ब्रह्मण आनन्दः श्रोत्रियस्य चाकामहतस्य यदा पश्यः पश्यते रुक्मवर्णं कर्त्तारमीशं पुरुषं ब्रह्मयोनिं तदा विद्वान्पुण्यपापे विधूय

निरञ्जनः परमं साम्यमुपैतीत्यादिभ्यः, ब्रह्म हि स्वस्य परस्य च स्वरूपमनुभूयमानमनवधिकातिशयानन्दं भवति, स च तादृशो ब्रह्मानुभव एकया विद्ययाऽवाप्यते चेत्किमन्ययेति न समुच्चयसम्भवः । स्वर्गादेर्हि देशतः कालतः स्वरूपतश्च परिमितत्वेन तच्च देशाद्यपेक्षया भूयस्त्वसम्भवात्तदर्थिनः समुच्चयः सम्भवतीति, इह तु तद्विपरीतस्वरूपे ब्रह्मणि तन्न सम्भवति, सर्वाश्च विद्या ब्रह्मानुभविरोध्यनादिकर्माविद्यानिरसनमुखेन ब्रह्मप्राप्तिफला इत्यविशिष्टफलत्वात्सर्वासां विकल्प एव, ब्रह्मप्राप्तिव्यतिरिक्तफलास्तु विद्याः स्वर्गादिफलकर्मवद्यथेष्टं विकल्प्येरन् समुच्चीयेरन् वा तासां परिमितफलत्वेन भूयस्त्वापेक्षासम्भवात् तदाह—

टी० "ब्रह्मप्राप्ती"ति, भेदे सिद्धे हि समुच्चयविकल्पनिरूपणं युक्तमिति भावः । किं सर्वासां समुच्चयः ? उत विकल्पः ? किं ब्रह्मप्राप्तिरूपा ? उत स्वर्गप्राप्तिवद्विलक्षणे ? ति वैलक्षण्ये तदपेक्षया समुच्चयः ऐकरूप्ये विकल्पः, राद्धान्ते परमं साम्यमुपैतीति अनवधिकातिशयानन्दं ब्रह्म स्वसदृशानन्दं ददाति ततोऽधिकानन्दस्याभावान्न भूयस्तदपेक्षासम्भव इति भावः । ब्रह्मा[1]नन्दस्य फलत्वं दर्शयति "ब्रह्म ही"ति, काश्चिद्विद्या विरोधिनिरसनोपक्षीणाः काश्चिद् ब्रह्मप्राप्तिफलाः, अतः समुच्चयसम्भव इत्यत्राह "सर्वाश्च विद्या" इति, अनेन सूत्रेण सङ्गतमुत्तरसूत्रार्थं सङ्क्षेपेणाह "ब्रह्मप्राप्तिव्यतिरिक्तफलास्त्वि"ति,

## सू० काम्यास्तु यथाकामं समुच्चीयेरन्न वा पूर्वहेत्वभावात् ॥ ५८ ॥

१ ब्रह्मानुभवस्येति पा० ।

सू० अपरमितिफलत्वाभावादित्यर्थः ॥ विकल्पाधिकरणं समाप्तम् ॥

टी० सू० काम्यास्तु यथाकामं समुच्चीयेरन्न वा पूर्वहेत्वभावात् ॥ ५८ ॥ अत्र व्याख्येयं चरमपदं व्याचष्टे "अपरिमिते"ति, समुच्चीयेरन्नेत्युक्तेऽपि समुच्चयविकल्पयोः किं नियामकमित्यपेक्षायामिच्छा नियामिका स्यादिति यथाकाममिति पदस्यार्थः विद्यानामेकरूपं फलं समाधौ साक्षात्करणमिति परे तदयुक्तं समाधौ साक्षात्कारस्य विद्याशरीरान्तर्भावात् तस्य च फलभावेऽपि तत्तद्गुणविशेषविशिष्टविषयतया भिन्नरूपत्वाच्च विकल्पनानुपपत्तेः, साक्षात्कारस्यैकरूपत्वेऽपि बन्धनिवृत्त्यनन्तरभाविब्रह्मानुभववैषम्यशङ्कानिरासेन विना समुच्चयनिरासायोगाच्च बन्धनिवृत्तिपूर्वकब्रह्मानुभवफलैक्यरूपं वक्तव्यम् । अन्ये तु सम्भूत्युपासनविषयं विचारमाहुः, तदयुक्तं सम्भूतिविनाशविभागविभक्तोपासनसमुच्चयस्याप्रामाणिकत्वोपपादनात्, ते च ये चेमेऽरण्य इत्यत्र देवयानपथस्य फलत्वेनोपादानादेकाधिकारपरिगृहीतत्वादाग्नेयादीनामिव समुच्चय इति पूर्वपक्षं कृत्वा आग्नेयादीनामिव प्रकरणैक्याधिकारवाक्यैक्याभावादिभिः प्रतिप्रकरणं निराकाङ्क्षाणां विद्यानां मिथः सम्बन्धानुपपत्तेः, ये चेमे इत्यादिवाक्यस्य गतिविधिपरत्वेन ब्रह्मप्राप्तेरनूद्यमानतया अधिकारवाक्यत्वाभावादेकस्मिन् दोषे विहितप्रायश्चित्तानामिव विकल्प इत्याहुः । तदिदमयुक्तम् अथ ये इमे ग्राम इष्टापूर्त्ते दत्तमित्युपासते ते धूममभिसम्भवन्तीति पितृयाणपथस्य फलत्वेनोपादानेऽपि प्रत्येकं फलसाधनत्वेन विहितानामिष्टापूर्त्तदत्तादीनामिव विद्यादीनामपि समुच्चित्यैकफलसाधनत्वशङ्काऽनुत्थानादधिकारवाक्यभेदादिभिः प्रत्येकमेकरूपफलसाधनत्वे सिद्धान्तदृष्ट्या दर्शितेऽपि फलातिशयसम्भावनया ज्योतिष्टोमदर्शपौर्णमासविश्वजिदादीनामिव समुच्चयशङ्काया दुर्निवारत्वाच्च, अतः सैवाविशिष्टफलत्वेन निराकार्या समुच्चित्य साधनत्वे पूर्वपक्षिते प्रत्येकं निरपेक्षसाधनत्वं सिद्धान्तिनः साध्यं स्यात्तत्र चाविशिष्टफलत्वादिति हेतुर्न घटते साध्याविशि-

ष्टत्वात्, अविशिष्टं फलं प्रतिनिरपेक्षसाधनत्वं हि साध्यं तद्धेतवोऽभिप्रेता इति चेत् अनपेक्षितकण्ठोक्तिरपेक्षितस्यावचनं सूत्रास्वारस्यं च स्यात्, अतो यथाभाष्यमेवार्थः । इतरे सर्वे काम्यास्त्विति सूत्रमधिकरणान्तरमाहुः, तदयुक्तम् अविशिष्टफलत्वाभावस्य स्फुटत्वात्, सूत्रप्रयोजनन्तु विद्यात्वसामान्यप्रसक्तविकल्पनिवारणं काम्यासु विद्यासु सूत्रस्वारस्येन सामान्यतो निरूपितास्वपि मुमुक्षोश्च भवति प्रयोजनं विद्याङ्गक्रतुसमृद्ध्यर्थानामुद्गीथाद्युपासनानां क्रतुफलप्रतिबन्धककर्मलाघवभूयस्त्वाद्यानुगुण्येन विकल्पसमुच्चयाद्याश्रयणम् ॥ विकल्पाधिकरणं समाप्तम् ॥

यथाश्रयभावाधिकरणम् ।

## सू० अङ्गेषु यथाश्रयभावः ॥ ५९ ॥

भू० उद्गीथादिक्रत्वङ्गव्यपाश्रिताः ओमित्येतदक्षरमुद्गीथमुपासीतेत्यादिका विद्याः किमुद्गीथादिवत् क्रत्वर्थतया क्रतुषु नियमेनोपादेयाः ? उत गोदोहनादिवत्पुरुषार्थतया यथाकाममिति विशये नियमेनोपादेया इति युक्तं, ननु चासां पुरुषार्थत्वेनानियमः प्रतिपादितः "तन्निर्धारणानियमस्तद्दृष्टेः पृथग्ध्यप्रतिबन्धःफल"मित्यत्र, सत्यं तदेव द्रढयितुं कैश्चिल्लिङ्गदर्शनैर्युक्त्या चाक्षिप्यते, तत्र हि तेनोभौ कुरुत इत्यनियमदर्शनात् पृथक्फलत्वमुक्तम्, उपासनाश्रयभूतोद्गीथादिवदुपासनानामप्यङ्गतयोपादाननियमे बहवो हेतव उपलभ्यन्ते, न ह्यत्र गोदोहनेन पशुकामस्य प्रणयेदित्यादिवदुपासनाविधिवाक्ये फलसम्बन्धः श्रूयते, उद्गीथमुपासीतेत्युद्गीथादिसम्बन्धितयैवोपासनं प्रतीयते यदेव विद्यया करोति श्रद्धयोपनिषदा

तदेव वीर्यवत्तरमिति वर्त्तमानापदेशरूपवाक्यान्तराद्धि फलसम्बन्धो ज्ञायते ॥

टी० सू० अङ्गेषु यथाश्रयभावः ॥ ५९ ॥ यथाकाममिति पदेन सङ्गतिरभिप्रेता, यथाकामं विकल्पः समुच्चयो वा स्यादिति ह्युक्तं तथा उद्गीथादिविद्या यथाकाममुपादेया न वेति शङ्कया[1] सङ्गतिः किमुद्गीथाद्युपासनानि क्रतुषु नियमेनोपादेयानि? उतानियमेन? किं क्रत्वङ्गोद्गीथादिमुखेन पर्णत्वादिवत् क्रत्वर्थानि? उत फलवत्त्वश्रवणात् पुरुषार्थभूतानि, किं गोदोहनादीनां पुरुषार्थत्वं स्ववाक्ये फलसम्बन्धश्रवणात्? उत क्रतुफलात्पृथक्फलसम्बन्धश्रवणात् स्ववाक्ये फलश्रुत्या पुरुषार्थत्वं चेत् तदभावेन पर्णतादिवत् क्रत्वर्थतया नियमेनोपादेयता पृथक्फलसम्बन्धश्रवणमात्राच्चेदुद्गीथाद्युपासनानामपि पृथक्फलतया पुरुषार्थत्वाच नियमेनोपादेयता, । पौनरुक्त्येन चोदयति "नन्वि"ति, परिहरति "सत्यन्तदेवे"ति, सङ्गतिविशेषादधिकरणान्तरं मध्ये प्राप्तमतो न तत्र कृतमित्यर्थः । तत्रोक्तांशमाह "तत्र ही"ति, अत्र तद्विपरीतहेतुबहुत्वमाह "उपासने"ति, न ह्यत्रेति गोदोहनस्य स्ववाक्ये श्रूयमाणं पृथक्फलसाधनत्वमङ्गत्वविरोधि, अत्र तु वाक्यान्तरस्थत्वेन फलसम्बन्धस्य विलम्बितप्रतीतित्वात् अर्थवादत्वमात्रमिति न तदङ्गत्वविरोधीत्यर्थः । विरोध्यभाव उक्तः । अनूकूलहेतुमाह "उद्गीथमि"ति, उद्गीथगता द्वितीयाश्रुतिरुपासनस्य तच्छेषत्वे प्रमाणं व्रीह्यादिगतावहननप्रोक्षणादेरिवेत्यर्थः । फलसम्बन्धस्य वाक्यान्तरस्थत्वं दर्शयति "यदेवे"ति, । वर्तमानापदेशः—वर्त्तमानव्यपदेशः, स्ववाक्यस्थे फलसम्बन्धे तत्रापि विधिकटाक्षः स्याद्वाक्यान्तरस्थत्वे सोऽपि नास्तीति भावः । फलितमर्थमाह—

सू० स्ववाक्येनैवाव्यभिचरितक्रतुसंबन्ध्युद्गीथादिसम्बन्धेन निर्ज्ञातक्रत्वङ्गभावस्य वाक्यान्तरस्थवर्त्तमानफलसम्बन्धनिर्देशोऽर्थवादमात्रं स्यात्, अपापश्लोकश्रवणादिवत्, अतो

१ संशयात्सङ्गतिरिति पा० ।

यथोद्गीथादयः उपासनाश्रयाः क्रत्वङ्गतया प्रयोगविधिना नियमेनोपादीयन्ते तथा तदाश्रिताश्चोपासनास्तन्मुखेन क्रत्वङ्गभूता इति नियमेनोपादेया एव, ॥

शिष्टेश्च ॥ ६० ॥

शिष्टिः—शासनं विधानमित्यर्थः, उद्गीथमुपासीतेत्युद्गीथाङ्गतयोपासनविधानाच्चोपादाननियमः, गोदोहनेन पशुकामस्य प्रणयेदित्यादिवद्विधिवाक्येऽधिकारान्तराश्रवणात् उद्गीथाद्यङ्गभाव एव हि विधेय इति गम्यते ॥

सू० समाहारात् ॥ ६१ ॥

होतृषदनाद्धैवापि दुरुद्गीथमनुसमाहरतीत्युपासनस्य समाहारनियमो दृश्यते, दुरुद्गीथं वेदनविहीनमुद्गीथं वेदनहानावन्येन समाधानं ब्रुवतस्य नियमेनोपादानं दर्शयति ॥

सू० गुणसाधारण्यश्रुतेश्च ॥ ६२ ॥

उपासनगुणस्य उपासनाश्रयस्य प्रणवस्य सोपासनस्य तेनेयं त्रयी विद्या वर्त्तते ओमित्याश्रावयत्योमिति शंसत्योमित्युद्गायती"ति साधारण्यश्रुतेश्चोपासनसमाहारोगम्यते, तेनेति प्रकृतपरामर्शात् सोपासन एव प्रणवः सर्वत्र संचरति, अत उपासनस्य प्रणवसहभावनियमदर्शनाच्चोद्गीथाद्युपासनानामुद्गीथादिवन्नियमेनोपादानमिति प्राप्ते उच्यते—

## सू० न वा तत्सहभावाश्रुतेः ॥ ६३ ॥

न चैतदस्ति यदुद्गीथाद्युपासनानां क्रतुषूद्गीथादिवदुपादाननियम इति कुतः तत्सहभावाश्रुतेः ॥

टी० "स्ववाक्येनैवे"ति, निर्ज्ञातो निश्चितः प्रयोगविधिः–अनुष्ठापकत्वदशापन्नविधिः, न तु ज्ञापकावस्थः यथा स्ववाक्यानवगतफलसम्बन्धस्य प्रकरणान्तरस्यस्याप्यव्यभिचरितक्रतुसम्बन्धिजुहूसम्बन्धेन ज्ञातक्रत्वङ्गभावस्य पर्णत्वस्यापापश्लोकश्रवणफलमर्थवादमात्रं स्यात्, अतः पर्णत्वं नियमेनोपादेयं तथेदमित्यर्थः, । सू० शिष्टेश्च ॥ ६० ॥ पूर्वं युक्तिरुक्ता व्याप्तिरूपा हि युक्तिः, विधिवाक्यस्यफलसम्बन्धेप्यङ्गत्वाभावः, विधिवाक्यस्यफलविरहेऽङ्गत्वं च दर्शितम् । अथ लिङ्गानि प्रदर्श्यन्ते गोदोहनस्याप्यङ्गत्वप्रसङ्ग इत्यत्राह "गोदोहनेने"ति, । सू० समाहारात् ॥ ६१ ॥ समाहारः–समाधानं कथं दृश्यत इत्यत्राह "दुरुद्गीथमि"ति, सू० गुणसाधारण्यश्रुतेश्च ॥ ६२ ॥ उपासनार्थत्वविवक्षया तदाश्रयस्य गुणत्वव्यपदेशः समाहारो गम्यत इति, समाहारोऽनुवृत्तिः सोपासनप्रणवानुवृत्त्योपासनानुवृत्तिर्गम्यते इत्यर्थः । तदुपपादयति "तेने"ति, । सू० न वा तत्सहभावाश्रुतेः ॥ ६३ ॥ फलितमर्थमाह–

सू० उद्गीथाङ्गभावाश्रुतेरित्यर्थः, अङ्गभावे हि सहभावनियमो भवति, यद्यप्युद्गीथमुपासीतेत्यस्मिन् पदसमुदायेऽधिकारान्तरं न प्रतीयते तथाऽपि तदनन्तरमेव "यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवती"ति विद्यायाः क्रतुवीर्यवत्तरत्वं प्रति साधनभावः प्रतिपाद्यते, तेन क्रतुफलात् पृथग्भूतफलसाधनभूता विद्योद्गीथमुपासीतेति कर्त्तव्यतया विधीयते, क्रतुफलात् पृथ-

ग्भूतफलसाधनतयाऽवगतस्योपासनस्य क्रत्वङ्गभूतोद्गीथाङ्गतया विनियोगो नोपपद्यते, अत उपासनस्याश्रयापेक्षायां सन्निहित उद्गीथ आश्रयमात्रं भवति ।

टी० "उद्गीथाङ्गभावाश्रुतेरि"ति, कथमयमर्थ इत्यत्राह "अङ्गभावेही"ति, सहभावमात्रस्य पूर्वपक्षिणाऽप्यङ्गीकृतत्वात् सहभावनियम इत्युक्तं, सहभावनियम एवाङ्गत्वम् अङ्गत्वविरोधिपृथक्फलसाधनत्वं सूत्राभिप्रेतं, गोदोहनवाक्यसाम्यप्रतिपादनेन तदुपपादयति "यद्यपी"ति, स्ववाक्यस्थत्वं वाक्यान्तरस्थत्वं च न प्रयोजकं विलम्बाविलम्बावेव प्रयोजकौ पर्णताविधिवाक्ये विलम्बद्वयमस्ति पर्णताया अपापश्लोकश्रवणं प्रति साधनत्वाश्रवणात् फलस्य वाक्यान्तरस्थत्वाच्च, गोदोहनवाक्ये त्वन्यतरविलम्ब एव फलस्य स्ववाक्ये श्रवणात् पशुं प्रति गोदोहनस्य साधनतामात्रस्य कल्प्यत्वात्, एवं पर्णताविधिवाक्ये विलम्बद्वयसद्भावात् वाक्यस्वरससिद्धाङ्गत्वबाधायोगात् तत्फलश्रुतिरर्थवादः, एवं गोदोहनवाक्येऽन्यतरविलम्बाभावात्तत्र फलसाधनत्वमङ्गत्वविरोधि, एवमन्यतरविलम्बाभावसाधर्म्यात्तद्वदिदमपि पृथक्फलसाधनत्वमेवोपासनस्य प्रतिपादयतीति गोदोहनवदुपासनमपि न क्रत्वङ्गम् । अतो विलम्बद्वयाभाववैषम्यात् पर्णतावाक्यवन्नेदं क्रत्वङ्गतां प्रतिपादयतीत्यर्थः । जुह्वाः प्रकृतिद्रव्याकाङ्क्षाऽस्ति नैवमुद्गीथादीनामुपासनाकाङ्क्षताऽस्ति पर्णताया अक्रियारूपत्वात् क्रत्वनुप्रवेशाकाङ्क्षाऽस्ति नैवमुपासनानां क्रियारूपत्वेनाव्यवधानेन पुरुषार्थसंस्पर्शादिति च पर्णतावैषम्यं सिद्धम् । अधिकारान्तरं फलान्तरसाधनत्वं साधनभावः प्रतिपाद्यत इत्यनेन गोदोहनवाक्ये साधनभावः कल्प्यत इति अन्यतरविलम्बः सूचितः, । एवं तत्साम्येन पृथक्फलसाधनतयैव उद्गीथविद्या विहितेत्याह "तेने"ति, ततः किमित्यपेक्षायामुपासनस्य क्रत्वङ्गत्वमयुक्तमित्याह "क्रतुफलादि"ति, उद्गीथमुपासीतेत्युपासनस्योद्गीथशेषत्वं प्रतीयते इत्यत्राह "अत उपासनस्ये"ति, आश्रयमात्रं भवति न तु शेषीत्यर्थः । यथा गोदोहनं कि

सम्बन्धिपशुसाधनमित्यपेक्षायां प्रणयनसम्बन्धीति प्रणयनं सम्बन्धिमात्रतया प्रतीयते तथा किंविषयमुपासनं वीर्यवत्तरत्वसाधनमित्यपेक्षायामुद्गीथ आश्रयमात्रं भवतीत्यर्थः । उपासनस्य पृथक्फलसाधनत्वे अधिकार्यन्तरानुष्ठेयता स्यादित्यत्राह—

सू० उद्गीथस्य क्रत्वङ्गभूत इति क्रतुप्रयुक्तोद्गीथाद्याश्रये उपासने क्रत्वधिकारिण एव क्रतोर्वीर्यवत्तरत्वेच्छानिमित्तमिदमधिकारान्तरमिति न क्रतुषु तदुपादाननियमः, वीर्यवत्तरत्वं च क्रतुफलस्य प्रबलकर्मान्तरफलेनाप्रतिबन्ध इत्युक्तम्, क्रतोरविलम्बितफलत्वमित्यर्थः । पर्णतादीनां तु "यदेव विद्यया करोति तदेव वीर्यवत्तरं भवती"ति विद्यायाः फलसाधनत्ववदपापश्लोकश्रवणादिफलं प्रति साक्षात्साधनभावो न श्रुत इति क्रत्वङ्गभूतजुह्वाद्यङ्गतया विनियोगाविरोधात्तदङ्गभूतानां फलान्तरसाधनभावकल्पनानुपपत्तेस्तत्र फलश्रुतिरर्थवादमात्रं स्यात् ॥

## सू० दर्शनाच्च ॥ ६४ ॥

दर्शयति च श्रुतिरुपासनोपादानानियमम्, एवं विद्ध वै ब्रह्मा यज्ञं यजमानं सर्वांश्च ऋत्विजोऽभिरक्षतीति ब्रह्मणो वेदनेन सर्वेषां रक्षणं ब्रुवती उद्गातृप्रभृतीनां वेदनस्यानियमे सत्येतदुपपद्यते, अनेन लिङ्गेन पूर्वोक्तानां समाचारादिलिङ्गानां प्रायिकत्वमवगम्यते, अतोऽनियम एवेति स्थितम् ॥ यथाऽऽश्रयभावाधिकरणं समाप्तम् ॥

इति श्रीभगवद्रामानुजाचार्यविरचिते शारीरकमीमांसाभाष्ये तृतीयाध्यायस्य तृतीयः पादः ॥ ३ ॥

टी० "उद्गीथश्चे"ति, यथा क्रत्वधिकारिण एव पशुकामनानिमित्तमधिकारान्तरं भवति गोदोहने तद्वदत्रापीत्यर्थः । उद्गात्रनुष्ठितमप्युपासनं यजमानस्यैव फलप्रदं वीर्यवत्तरत्वस्य पृथक्फलतां दर्शयति "वीर्ये"ति, । पर्णतावाक्यवैषम्यमाह "पर्णतादीनां त्वि"ति, फलस्य वाक्यान्तरस्थत्वेन विलम्बः स्पष्टतया न कण्ठोक्तः फलसम्बन्धस्य विलम्बद्वयोपहतत्वेनाविरोधित्वादङ्गतया विनियोगात् अङ्गत्वे सति पृथक्फलत्वकल्पनायोगात्तत्र फलश्रुतिरर्थवादः, अत्र पुनरन्यतरविलम्बसाम्यात् पृथक्फलसाधनत्वेनोपासनस्य पुरुषार्थतया क्रत्वर्थत्वाभावाच्चोपादाननियम इत्यर्थः, । सू० दर्शनाच्च ॥ ६४ ॥ पूर्वसूत्रे पूर्वपक्षयुक्तिर्निराकृता, अत्र लिङ्गानि प्रतिवक्ष्यन्ते, । अनियमस्य प्रदर्शितत्वमुपपादयति "उद्गातृप्रभृती"ति, यजमानं सर्वांश्च ऋत्विजो ऽभिरक्षतीत्यत्र यजमानसंरक्षणं क्रतुफलाप्रतिबन्धकरणादिभिरिति मन्तव्यम्, उद्गातृप्रभृतिवेदनफलं हि क्रतुफलाप्रतिबन्धादिः, तस्य ब्रह्माख्यर्त्विग्वेदनेन सिद्धौ सत्यां ह्युद्गातृप्रभृतिवेदनानियमसिद्धिः समाहारादिलिङ्गानां प्रायिकत्त्वमवगम्यत इति, आदावेव क्रतुफलाप्रतिबन्धायोद्गीथोपासनं संकल्पितं चेत् वेदनविरहितोद्गीथे समाधानं कर्त्तव्यमित्यर्थः सोपासनप्रणवसहभावनियमदर्शनमपि तथा संकल्पितकृतावेव ॥ यद्वा तेनेति न सोपासनप्रणवपरामर्शः अपि तु प्रणवमात्रपरामर्शः उद्गीथसम्बन्धितयोपासनविधानं न तूद्गीथविशेषणतयेत्यनेन शिष्टिश्च परिहृता, । परे तु किमुद्गीथादिप्रत्ययाः समुच्चीयेरन् किं यथाकामं स्युरिति विचारयन्ति पुरुषार्थत्वे यथाकाममनुष्ठेयत्वं काम्यास्तु यथाकाममिति सिद्धम् । अतःपुरुषार्थत्वतदभावविषयविचारो युक्तः । तत्सहभावाश्रुतेरिति "ग्रहं वा गृहीत्वा चमसं वोन्नीय स्तोत्रमुपाकरोति स्तुतमनुशंसति प्रस्तोतस्सामानि गाय होतरेतद्यजेत्यादिना स्तोत्रादीनां परस्परसहभावः श्रुतः, इह तथा न श्रूयते इति चाहुः । लिङ्गादीनामप्यङ्गभावे प्रमाणत्वात्सहभावाश्रवणमात्रेण नाङ्गत्वनिवृत्तिः सहभावाश्रुतिर्विनियोगप्रमाणाभावप्रदर्शनार्थेति चेत् सहभाव–शब्देन तन्नियमरूपमङ्गत्वमुपस्थाप्य विनियोजकप्रमाणाभावेन तद्व्युदासपरत्वं

सूत्रस्य ततोऽपि वरम् ॥ अन्ये तु शिष्टेश्च यदेव विद्यया करोतीत्यङ्गत्वं शिष्यत इत्याहुः । ततोऽपि वरमुद्गीथमुपासीतेति विधानपरत्वं शिष्टि-शब्दस्य विधाने स्वारस्यात्, यदेव विद्ययेति विधिपदाश्रवणाच्च, दर्शनाच्च तेनोभौ कुरुत इत्यनियमदर्शनादिति व्याचक्षते तदयुक्तं, तद्दृष्टेरित्यनेन पुनरुक्तत्वात् । यथाश्रयभावाधिकरणं समाप्तम् ॥

इति श्रीभगवद्रामानुजविरचितशारीरकमीमांसाभाष्यविवरणे श्रुतप्रकाशिकायां तृतीयस्याध्यायस्य तृतीयः पादः ३ ॥

अस्मिन् पादे ॥ ६ ॥ अधिकरणानि, सूत्राणि च पादेऽस्मिन् ॥ ६४ ॥ समुदिताधिकरणसंख्या ॥ १०८ ॥ समुदितसूत्रसंख्या ॥ ४१७ ॥

---

श्रीमते रामानुजाय नमः ॥

## अथ तृतीयाध्याये चतुर्थः पादः आरभ्यते ॥

---

पुरुषार्थाधिकरणम् ।

### सू० पुरुषार्थोऽतः शब्दादिति वादरायणः ॥ १ ॥

भा० गुणोपसंहारानुसंहारफला विद्यैकत्वनानात्वचिन्ता कृता, इदानीं विद्यातः पुरुषार्थः? उत विद्याङ्गकात्कर्मणः? इति चिन्त्यते, किं युक्तम्, अतो विद्यातः पुरुषार्थ इति भगवान्बादरायणो मन्यते कुतः शब्दात्, दृश्यते ह्यौपनिषदः शब्दो विद्यातः पुरुषार्थं ब्रुवन्, ब्रह्मविदाप्नोति परं वेदाहमेतं पुरुषं महान्तमादित्यवर्णं तमसः परस्तात् तमेवं विद्वानमृत इह भवति नान्यः पन्था विद्यतेऽयनाय यथा नद्यः स्यन्दमानाः समुद्रेऽस्तं गच्छन्ति नामरूपे विहाय तथा विद्वान्नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यमित्यादिः, तच्च पूर्वपक्षी प्रत्यवतिष्ठते

## सू० शेषत्वात्पुरुषार्थवादो यथाऽन्ये-
## ष्विति जैमिनिः ॥ २ ॥

वृ० नैतदेवं यद्विद्यातः पुरुषार्थावाप्तिः शब्दादवगम्यते इति न ह्येष ब्रह्मविदाप्नोति परमित्यादिशब्दो वेदनात्पुरुषार्थावाप्तिमवगमयति,

टी० सू० पुरुषार्थोऽतः शब्दादिति वादरायणः ॥ १ ॥ पूर्वाधिकरणेनास्याधिकरणस्य सङ्गतिमाह "गुणे"ति, उपासनचिन्तानन्तरमङ्गचिन्तनं क्रियते इति पादसङ्गतिरर्थसिद्धा, तत्र विद्याया अङ्गित्वे सति हि तदङ्गचिन्तनं कार्यं तस्मादङ्गचिन्तनोपयोगित्वेन विद्याया अङ्गित्वं प्रथमाधिकरणे, निरूप्यते किं विद्यातः पुरुषार्थः ? उत विद्याङ्गकात् कर्मण ? इति, किं विद्या क्रतुकर्मभूतात्मसंस्कारद्वारेण क्रत्वर्था ? उतापुनरावृत्तिफलसाधनतया पुरुषार्था ? किं ब्रह्मविदाप्नोतीत्यादयः फलविधयः ? उतार्थवादाः ? किं परविद्यासु कर्मभूतो जीवः ? उत तदन्यः परमात्मा किमाचारदर्शनादिलिङ्गानुगृहीतं तत्त्वमस्यादिसामानाधिकरण्यमुपास्यस्य जीवभावमवगमयति नेति किमिदं लिङ्गमनैकान्तिकं नेति ? अनैकान्तिकत्वाभावे तदनुगृहीतसामानाधिकरण्येनोपास्यस्य जीवत्वावगमात् परविद्यानां स्वकर्मीभूतजीवसंस्कारत्वात् आत्मज्ञानफलश्रुतेरर्थवादतया पृथक्फलसाधनत्वाभावात् विद्या क्रत्वर्थेति तदङ्गकात् कर्मणः पुरुषार्थः स्यात्, लिङ्गस्यानैकान्तिकत्वे तदनुग्रहाभावेन सामानाधिकरण्यस्य जीवानतिरेकानवगमकत्वात् परविद्यानां जीवकर्मकत्वाभावेन तत्संस्कारत्वाभावात् आत्मविद्याफलश्रुतेरर्थवादत्वाभावेन पृथक्फलसाधनतया पुरुषार्थत्वाद्विद्यातः पुरुषार्थसिद्धिः स्यात्, इदं च सिद्धान्तोपक्रमं विद्यायाः पूर्वपादे प्रस्तुतत्वात्, अतः शब्देन सोक्ता ब्रह्मविदाप्नोतीति वाक्ये विद्यया प्राप्यावाप्तिरुक्ता वेदाहमित्यत्र विद्याया ब्रह्मप्राप्तिहेतुत्वं प्रतिबन्धनिवृत्तिद्वारकमित्यर्थः । तत्र ब्रह्मणो विग्रहादिविशिष्टत्वमुपायान्तरनिषेधश्च सिद्धः, उभयमप्यभिहितं यथा नद्य इति

वाक्ये, द्वितीयसूत्रप्रभृतिपूर्वपक्षविषयं तदाह "अत्रे"ति, सू० शेषत्वात्पुरुषार्थवादो यथाऽन्येष्विति जैमिनिः, ॥ २ ॥ व्याचष्टे नैतदित्यादिना, न हीत्यादि, आदित्यो यूय इत्यादिष्विव न तात्पर्यमित्यर्थः । कुत इत्यत्राह

मू० कर्मसु कर्तृभूतस्यात्मनो याथात्म्यवेदनप्रतिपादनपरत्वात्, अतः कर्तुः संस्कारद्वारेण विद्यायाः क्रतुशेषत्वात् तच्च फलश्रुतिरर्थवादमात्रं यथाऽन्येषु द्रव्यादिष्विति जैमिनिराचार्यो मन्यते तदुक्तं "द्रव्यगुणसंस्कारकर्मसु परार्थत्वात् फलश्रुतिरर्थवादः स्या"दिति, ननु च कर्मसु कर्तुर्जीवादन्यो मुमुक्षुभिः प्राप्यतया वेदान्तेषु वेद्य उपदिश्यते इति प्रागेवोपपादितम् "नेतरोऽनुपपत्तेः" "भेदव्यपदेशाच्च" "अनुपपत्तेस्तु न शारीरः" "इतरपरामर्शात्स इति चेन्नासम्भवा"दित्येवमादिभिः सूत्रैः, तदेव ब्रह्म तत्त्वमस्यादिसामानाधिकरण्येन जीवादनतिरिक्तमित्येतदपि "अधिकं तु भेदनिर्देशादि"त्येवमादिभिर्निरस्तं सामानाधिकरण्यनिर्देशश्चैतदात्म्यमिदं सर्वं, सर्वं खल्विदं ब्रह्मेति चेतनाचेतनसाधारणः यः पृथिव्यां तिष्ठन् य आत्मनि तिष्ठन्नित्यादिनाऽवगततत्तदात्मतयाऽवस्थितिनिबन्धन इ"त्यवस्थितेरिति काशकृत्स्न" इत्यादिभिरुपपादितं तत्कथं कर्मसु कर्तुरात्मनोयाथात्म्योपदेशपरा वेदान्तशब्दा इति विद्यायाः कर्माङ्गत्वं प्रतिपाद्यते—उच्यते वेदान्तवाक्येष्वेव विद्यायाः कर्मप्राधान्यं सूचयद्भिर्लिङ्गैस्त—

टी० "कर्मस्वि"ति व्रीह्यादेः प्रोक्षणादिवत् विद्या आत्मशेषत्वेनावगता आत्मा ज्ञातव्य इति अधीत्य स्नास्यचिति ज्ञानमपि कर्मशेषत्वेनावगतं, व्रीह्यादिशेषभूतप्रोक्षणादेः क्रतुशेषत्वं द्वारभूतव्रीह्यादेः क्रतुशेषत्वेनैव यथोपपद्यते तथाऽऽत्मशेषभूतज्ञानस्य कर्मशेषत्वमात्मनः कर्मशेषत्वेनोपपद्यत इति ज्ञातव्य आत्मा क्रतुशेषभूत एव, कर्मशेषभूतत्वं च कर्मसु कर्त्तृभूतस्यात्मनः, स चात्मा जीव एवेति तत्स्वरूपप्रतिपादनपरं वेदान्तवाक्यजातमित्यर्थः । आत्मज्ञानस्य पृथक् फलसाधनत्वाच्च कर्माङ्गत्वमित्यत्राह "अत"इति, आत्मा वा अरे द्रष्टव्य इत्यादिषु स्वाध्यायोऽध्येतव्य इतिवदात्मनः कर्मत्वावगमात् ज्ञानेन संस्कार्यत्वम् । अतो यज्ञादेर्व्रीह्यादिद्वारा प्रोक्षणादिवत् विद्याऽपि कर्त्तृसंस्काररूपतया कर्मशेषभूता, तस्माद्यथाऽव्यभिचरितक्रतुसम्बन्धिजुहूद्वारा क्रतुशेषभूतपर्णमयत्वस्यापापश्लोकश्रवणमर्थवादः तद्वदव्यभिचरितक्रतुसम्बन्धिकर्त्तृद्वारा विद्यायाः क्रतुशेषभूतायाः फलश्रुतिरर्थवाद इत्यर्थः । प्रकरणान्तराधीताया विद्यायाः क्रतुशेषत्वमपि पर्णत्ववदुपपन्नम्, । आदिशब्दविवरणार्थमाह "तदुक्तमि"ति, । चोदयति "नन्वि"ति, अचेतनेनेव चेतनेनापि स्वरूपैक्यानुपपत्तिद्योतनार्थम् ऐतदात्म्यमिदं सर्वं सर्वं खल्विदं ब्रह्मेति वाक्यद्वयोपादानम् । एवं जीवविलक्षणस्य प्रतिपाद्यमानत्वेन जीवप्रत्यभिज्ञानाभावात्तद्द्वारा विद्यायाः कर्माङ्गत्वमनुपपन्नमित्यर्थः । परिहरति "उच्यत"इति, वेदान्तवाक्येष्विवेति त्वया जीवविलक्षणपरत्वेनोक्तेष्विवेति भावः । लिङ्गानुग्रहात्सामानाधिकरण्यमपि स्वरूपैक्यपरमित्याह—

मू० दुपबृंहितसामानाधिकरण्यनिर्देशेन च वेदान्तशब्दा देहातिरिक्तजीवस्वरूपयाथात्म्योपदेशपरा इति बलादभ्युपगमनीयमिति पूर्वपक्षिणोऽभिप्रायः । ननु च कर्त्तृसंस्कारमुखेन विद्यायाः क्रत्वनुप्रवेशो न शक्यते वक्तुं कर्त्तुर्लौकिकवैदिकसाधारणत्वेनाव्यभिचरितक्रतुसम्बन्धि-

त्वाभावात्, नैवं लौकिकस्य कर्मणः कर्त्तुर्देहादव्यतिरिक्तत्वेऽप्युपपत्तेर्देहातिरिक्तनित्यात्मस्वरूपस्य क्रतावेवोपयोगात्तत्स्वरूपप्रतिपादनमुखेन क्रत्वनुप्रवेशो न विरुध्यते, अतो विद्यायाः क्रतुशेषत्वान्नातः पुरुषार्थः, कानि पुनस्तानि लिङ्गानि यद्रूपहेतिसामानाधिकरण्यनिर्देशेन वेदान्तशब्दा जीवस्वरूपपरा इति निर्णीयन्ते तत्राह

## सू० आचारदर्शनात् ॥ ३ ॥

ब्रह्मविदां प्राधान्येन कर्मस्वेवाचारो दृश्यते "अश्वपतिः केकयः किलात्मवित्तमस्तान्विद्यानायोपगतांस्तानृषीन् प्रत्याह "यक्ष्यमाणोह वै भगवन्तोऽहमस्मी"ति तथा च जनकादयो ब्रह्मविदग्रेसराः कर्मनिष्ठाः स्मृतिषु दृश्यन्ते "कर्मणैव हि संसिद्धिमास्थिता जनकादयः" । "इयाज सोऽपि सुबहून् यज्ञान् ज्ञानव्यपाश्रय" इति, अतो ब्रह्मविदां कर्मप्रधानत्वदर्शनाद्विद्यायाः कर्त्तुः स्वरूपवेदनपरित्वेन कर्माङ्गत्वमेवेति न विद्यातः पुरुषार्थः । लिङ्गमिदं प्राप्तिरुच्यतामित्यत्राह–

## सू० तच्छ्रुतेः ॥ ४ ॥

श्रुतिरेव हि विद्यायाः कर्माङ्गत्वमाह "यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवती"ति, नेयं श्रुतिः प्रकरणादुद्गीथमात्रविषयेति व्यवस्थापयितुं शक्या यतः प्रकरणाच्छ्रुतिर्बलीयसी यदेव विद्यया करोतीति विद्यामात्रविषया हीयं श्रुतिः ।

टी० "तदुपबृंहिते"ति, चोदयति "ननु चे"ति, न ह्यन्यशेषमन्यशेषं भवति, तदसाधारणमेव हि तदङ्गं, कर्त्ता च लौकिकवैदिककर्मसाधारणः, अतः कर्त्तुरव्यभिचरितक्रतुसम्बन्धित्वाभावात् जुहूवत्प्रत्यभिज्ञा नास्तीति न तद्द्वारा क्रत्वङ्गत्वमित्यर्थः । परिहरति "नैव"मिति, अनन्तरसूत्रमवतारयति "ज्ञानी"ति, । सू॰ आचारदर्शनात् ॥ ३ ॥ गुणमुख्ययोर्विरोधे मुख्यानुगुणं गुणो नेयः, न तु गुणानुगुणं मुख्यो नेयः, तस्मात्कर्मणो विद्यायाश्च प्रसङ्गे कर्मणोऽनुष्ठानं तस्य प्राधान्येनैवोपपद्यते, अतो विद्या कर्माङ्गमित्यर्थः । अनन्तरसूत्रमवतारयति "लिङ्गमि"ति, प्राप्तिः प्रमाणतः सिद्धिः अनुग्राहकमुक्तमनुग्राह्यमभिधीयतामित्यर्थः । आगमप्रमाणस्य श्रुतिलिङ्गादयोऽनुग्राहकाः । सू॰ तच्छ्रुतेः ॥ ४ ॥ विद्ययेति तृतीयाश्रुत्याऽङ्गत्वं गम्यते नेयमित्यादि । ततः किमित्यत्राह "यदेवे"ति ।

## सू० समन्वारम्भणात् ॥ ५ ॥

मू० "तं विद्याकर्मणी समन्वारभेते" इति विद्याकर्मणोः साहित्यं च दृश्यते साहित्यं चोक्तेन न्यायेन विद्यायाः कर्माङ्गत्वे सत्येव भवति ॥

## सू० तद्वतो विधानात् ॥ ६ ॥

विद्यावतः कर्मविधानात् विद्या कर्माङ्गमित्यवगम्यते, आचार्यकुलाद्वेदमधीत्य यथाविधानं गुरोः कर्मातिशेषेणाभिसमावृत्त्य कुटुम्बे शुचौ देश इत्यादौ वेदमधीत्येत्यध्ययनवतः कर्माणि विदधदर्थावबोधपर्यन्ताध्ययनवत एव विदधाति । अर्थावबोधपर्यन्तं ह्यध्ययनमिति स्थापितम् । अतो ब्रह्मविद्याऽपि कर्मसु विनियुक्तेति न पृथक्फलायावकल्पते ।



### सू० नियमात्॥ ७ ॥

इतश्च न विद्यातः पुरुषार्थः कुर्वन्नेवेह कर्माणि जिजीविषेत् शतं समाः इत्यात्मविदः पुरुषायुषस्य सर्वस्य कर्मसु नियमेन विनियोगात् कर्मण एव फलमित्यवगम्यते । विद्या तु कर्माङ्गमित्येवं प्राप्ते प्रचक्ष्महे

### सू० अधिकोपदेशात्तु वादरायणस्यैवं तद्दर्शनात् ॥ ८ ॥

तु-शब्दात्पक्षो व्यावृत्तः, विद्यात एव पुरुषार्थः कुतः अधिकोपदेशात् कर्मसु कर्त्तुर्जीवाद्धेयप्रत्यनीकानवधिकातिशयासङ्ख्येयकल्याणगुणाकरत्वेनाधिकस्यार्थान्तरभूतस्य परस्य ब्रह्मणो वेद्यतयोपदेशात् भगवतो वादरायणस्य विद्यातः फलमित्येमेव मतम्,

टी० सू० समन्वारम्भणात् ॥ ५ ॥ अन्वारम्भणं स्पर्शः तेन सम्बन्धो विवक्षितः साहित्यं कर्मणो विद्याङ्गत्वेऽप्युपपद्यते इत्यत्राह "उक्तन्यायेने"ति, कर्त्तुरात्मनः कर्मशेषत्वमाचारदर्शनमित्यादिकं न्यायशब्देन विवक्षितम् । सू० तद्वतो विधानात् ॥ ६ ॥ अविशेषेण निःशेषमित्यर्थः अध्ययनवतः कर्माणि विदधीत ततः किं ज्ञानस्य कर्माङ्गत्व इत्यत्राह "अर्थावबोधपर्यन्ताध्ययनवत एवे"ति, अर्थज्ञानपर्यन्तत्वं कथमित्यत्राह "अर्थावबोधेति, स्थापितं भाट्टैः प्राभाकरैश्च श्रुतेरविवक्षितार्थत्वादिदोषपरिहारार्थमित्यर्थः, स्नात्वा जुहुयादित्युक्तेः हि होमः स्नानाङ्गकः स्यात् तथैतदपीति भावः । न हि क्रतुज्ञानस्य तदनुष्ठानमङ्गम् अपि त्वनुष्ठानस्यानुष्ठेयज्ञानमङ्गं तद्वदिहापि सू० नियमात् ॥ ७ ॥ कृत्स्नस्यायुषः क्रतुशेषत्वान्मध्ये प्राप्तमन्यत्सर्वं तच्छेषभूतमित्यर्थः । इमानि पूर्वपक्षसूत्राणि,

उत्तरसूत्रमवतारयति "एवं प्राप्त" इति, सू० अधिकोपदेशात्तु बादरायणस्यैवं तद्दर्शनात् ॥ ८ ॥ कथं विद्यातः फलं विद्यायाः कर्माङ्गत्वे लिङ्गानि दर्शितानि हीत्यत्राह—

सू० लिङ्गानि तिष्ठन्तु वेद्यतयोपदेशस्तु तावत्कर्तुः प्रत्यगात्मनोऽधिकस्यैव, कथं तद्दर्शनात प्रत्यगात्मन्यशुद्धे शुद्धेऽप्यसम्भावनीयानन्तगुणाकरस्य वेद्यस्य निरस्तनिखिलहेयगन्धस्य स्वसङ्कल्पकृतजगदुदयविभवलयलीलस्य सर्वज्ञस्य सर्वशक्तेर्वाङ्मनसापरिच्छेद्यानन्दस्य जीवाधिपस्य कृत्स्नस्य प्रशासितुः परस्य ब्रह्मणो वेदनोपदेशवाक्येषु दर्शनात्, अपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसङ्कल्पः, तदैक्षत बहु स्यां प्रजायेयेति, तत्तेजोऽसृजत, यः सर्वज्ञः सर्ववित्, पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च, स एको ब्रह्मण आनन्दः, यतो वाचो निवर्तन्ते अप्राप्य मनसा सह,। आनन्दं ब्रह्मणो विद्वान्न बिभेति कुतश्चने"ति, एष सर्वेश्वर एष भूताधिपतिरेष भूतपाल एष सेतुर्विधरणः, स कारणं करणाधिपाधिपो न चास्य कश्चिज्जनिता न चाधिपः, एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः एतस्य वा अक्षरस्य प्रशासने गार्गि द्यावापृथिव्यौ विधृते तिष्ठतः, भीषाऽस्माद्वातः पवते भीषोदेति सूर्यः भीषाऽस्मादग्निश्चेन्द्रश्च मृत्युर्धावति पञ्चमः" इत्यादिषु, तस्माद्वेदनोपदेशशब्देषु कर्तुः प्रत्यगा-

त्मनः खद्योतकल्पस्याविद्यादिहेयसम्बन्धयोग्यस्य गन्धोऽपि नास्तीति परमपुरुषविषयाया विद्यायास्तत्प्राप्तिरूपममृतत्वं तत्र तत्र श्रूयमाणं फलमिति विद्यातः पुरुषार्थ इति सुष्ठूक्तम् ॥

टी० "लिङ्गानि तिष्ठन्त्वि"ति, तद्दर्शनादिति सूत्रखण्डोपादानम् उपासनवाक्योपयोगित्वात् स्वरूपपरवाक्यानां वेदनोपदेशवाक्येष्वित्युक्तं, स्वरूपपरवाक्योक्तगुणानामुपासनापेक्षितत्वादित्यर्थः शुद्ध्यशुद्ध्युभयावस्थजीवस्यासम्भावनीयानन्तकल्याणगुणा उच्यन्ते परस्य ब्रह्मण इत्यन्तेन, उक्तगुणविशिष्टत्वे प्रमाणमाह "अपहतपाप्मे"ति, जुहूवत्कर्तुरात्मनः प्रत्यभिज्ञाने सति हि तद्द्वारा विद्यायाः कर्माङ्गत्वं वेदनोपदेशवाक्येषु जीवविलक्षणस्य प्रतिपाद्यमानत्वेन जीवप्रत्यभिज्ञानाभावान्न तद्द्वारा विद्यायाः कर्माङ्गत्वमिति श्रूयमाणं फलमपि नार्थवादरूपं, तस्माद्विद्यायाः पृथक्फलसाधनत्वेन न क्रत्वर्थत्वं किन्तु पुरुषार्थत्वमेवेत्यर्थः । उत्तरसूत्राणां कृत्यमाह—

सू० लिङ्गान्यपि निरस्यन्ते ।

## सू० तुल्यं तु दर्शनम् ॥ ९ ॥

यदुक्तम्, ब्रह्मविदां कर्मानुष्ठानदर्शनाद्विद्या कर्माङ्गमिति तन्न विद्याया अनङ्गत्वेऽपि तुल्यं दर्शनं ब्रह्मविदां कर्मानुष्ठानदर्शनमनैकान्तिकमित्यर्थः। अननुष्ठानस्यापि दर्शनात्, दृश्यते हि ब्रह्मविदां कर्मत्यागः "ऋषयः कावषेयाः किमर्था वयमध्येष्यामहे किमर्था वयं यक्ष्यामहे" इत्यादौ, अतो ब्रह्मविदां कर्मत्यागदर्शनान्न विद्या कर्माङ्गं, कथमिदमुपपद्यते ब्रह्मविदां कर्मानुष्ठानमननुष्ठानं च फलाभिसन्धिरहितस्य यज्ञादिकर्मणो ब्रह्मविद्याङ्ग-

त्वात् तथा विधस्य कर्मणोऽनुष्ठानदर्शनमुपपद्यते, वक्ष्यति च "सर्वापेक्षा च यज्ञादिश्रुतेरश्ववद्" इति, फलार्थस्य तस्यैव यज्ञादेः कर्मणो मोक्षैकफलब्रह्मविद्याविरोधित्वात्तस्यैवाननुष्ठानदर्शनमुपपन्नतरं, विद्यायाः कर्माङ्गत्वे कर्मत्यागः कथमपि नोपपद्यते, यदुक्तं श्रुत्यैव विद्यायाः कर्माङ्गत्वमवगम्यते इति तत्राह–

सू॰ असार्वत्रिकी ॥ १० ॥

न सर्वविद्याविषयेयं श्रुतिः, अपि तूद्गीथविद्याविषयैव यदेव विद्यया करोतीति यच्छब्दस्यानिर्धारितविशेषस्योद्गीथमुपासीतेति प्रस्तुतोद्गीथविशेषनिष्ठत्वात्, न हि यत्करोति तद्विद्ययेति सम्बध्यते यदेव विद्यया करोति तदेव वीर्यवत्तरमिति विद्यया क्रियमाणं यच्छब्देन निर्दिश्य तस्य हि वीर्य्यवत्तरत्वमुच्यते, यच्चेदमुक्तं तं विद्याकर्मणी समन्वारभेते इति विद्याकर्मणोः साहित्यदर्शनाद्विद्या कर्माङ्गमिति तत्राह–

सू॰ विभागः शतवत् ॥ ११ ॥

"तं विद्याकर्मणी समन्वारभेते" इत्यत्रोक्तेन न्यायेन विद्याकर्मणोर्भिन्नफलत्वाद्विद्या स्वस्मै फलाय समन्वारभते कर्म च स्वस्मै फलायेति विभागो द्रष्टव्यः, शतवत् यथा क्षेत्ररत्नविक्रयिणं शतद्वयमन्वेतीत्युक्ते क्षेत्रार्थं शतं, रत्नार्थं शतमिति विभागः प्रतीयते तथेहापि ॥

सू॰ अध्ययनमात्रवतः ॥ १२ ॥

यदुक्तं विद्यावतः कर्मविधानाद्विद्या कर्माङ्गमिति नैत-द्युक्तम्, वेदमधीत्य इति अध्ययनमात्रवतो विधानात्, न चाध्ययनविधिरेवार्थावबोधे प्रवर्त्तयति आधानवदध्ययनस्याक्षरराशिग्रहणमात्रे पर्य्यवसानात्, गृहीतस्य च स्वाध्यायस्य फलवत्कर्मावबोधित्वदर्शनात्तन्निर्णयफले तदर्थविचारे पुरुषः स्वयमेव प्रवर्त्तते, ततः कर्मार्थी कर्मज्ञाने प्रवर्त्तते, मोक्षार्थी च ब्रह्मज्ञान इति न विद्या कर्माङ्गं, यद्यप्यध्ययनविधिरेवार्थावबोधे प्रवर्त्तयति तथाऽपि न विद्या कर्माङ्गम्, अर्थज्ञानादर्थान्तरत्वाद्विद्यायाः, यथा ज्योतिष्टोमादिकर्मस्वरूपविज्ञानात्फलसाधनभूतं तत्कर्मानुष्ठानमर्थान्तरं तथाऽर्थज्ञानस्वरूपाद्ब्रह्मस्वरूपविज्ञानादर्थान्तरमेव ध्यानोपासनादिशब्दवाच्या पुरुषार्थसाधनभूता विद्येति न तस्याः कर्मसम्बन्धगन्धोऽपि विद्यते ॥

## सू० नाविशेषात् ॥ १३ ॥

यच्चोक्तं कुर्वन्नेवेह कर्माणीत्यात्मविदं ज्ञानाद्यारभ्य यावज्जीवं कर्मानुष्ठाने नियमतीति तन्नोपपद्यते, कुतः अविशेषात् न ह्ययं नियमः फलसाधनभूतस्वतन्त्रकर्मविषय इति विशेषहेतुरस्ति, विद्याङ्गभूतकर्मविषयतयाऽप्युपपत्तेः, "कर्मणैव हि संसिद्धिमास्थिता जनकादय" इति च विदुषश्चाप्रायणादुपासनस्यानुवर्त्तमानत्वात् ॥

टी० 'लिङ्गान्यपी'ति, सू० तुल्यं तु दर्शनम् ॥ ९ ॥ अनैकान्तिकशब्देनानियतत्वमुच्यते किमर्थाः किं प्रयोजनाः अङ्गित्वे ह्यनुष्ठानं नोप-

पद्यत इति भावः। अनुष्ठानाननुष्ठाने व्याहते इत्यभिप्रायेणाह "कथमि"ति, परिहरति "फलाभिसन्धी"ति, भवत्यत एवेयं व्याहतिरित्याह "विद्याया"-इति, ब्रह्मविद्याफलानामर्थवादत्वेन मोक्षाख्यफलानभ्युपगमात् मोक्षैक-फलं कर्मानुष्ठेयं त्रिवर्गफलं त्वननुष्ठेयमिति विभागानुपपत्त्या व्याहति-स्तवैवेत्यर्थः, अनन्तरसूत्रशङ्कामाह "यदुक्तमि"ति, सू० असार्वत्रिकी ॥ १० ॥ प्रकरणाच्छ्रुतिर्बलीयसीत्युक्तमिति शङ्कायामेकपदसामर्थ्यं हि श्रुतिः, अत्र च सामर्थ्यं नास्तीत्यभिप्रायेणाह "न ही"ति, यत्करोति तद्विद्ययेत्युक्ते विद्याया अङ्गत्वं विहितं स्यात्, न च तथान्वयः यदेव विद्यया करोति तदेव वीर्यवत्तरमित्यन्वयः, तथा सति यच्छब्दानूदितस्य विद्यया क्रि-यमाणस्य प्रापकप्रमाणाकाङ्क्षायां प्रकरणसन्निकृष्टोद्गीथविद्या यदेव विद्ययेति विद्या-शब्दं सङ्कोचयति, अतोऽनुवादरूपत्वात् प्रमाणान्तर-सापेक्षत्वेन स्वतोऽर्थनिश्चयसामर्थ्याभावात् विद्ययेति पदमेकपदसामर्थ्य-रूपा श्रुतिर्न भवतीत्यर्थः। अनन्तरसूत्रस्य शङ्कामाह 'यच्चेदमि"ति, सू० विभागः शतवत् ॥ ११ ॥ समन्वारम्भणश्रुतिः सांसारिकफलविद्या-कर्मविषया विद्या स्वफलप्रदानायाऽन्वेति कर्म च स्वफलप्रदानायेत्यर्थः, ब्रह्मविद्यातदङ्गकर्मविषया वा स्यादियं श्रुतिः विद्या "नेहाभिक्रमनाशो-ऽस्ती"ति न्यायात्, प्रारब्धावसाने मुक्तिदानायान्वेति, कर्म च जन्मान्तरे-ऽपि विद्योत्पादनायाऽन्वेतीत्यर्थः। सू० अध्ययनमात्रवतः ॥ १२ ॥ आधा-नवदिति अग्नीनादधीतेत्यत्राधानेनाग्निसम्पाद्यत्वमात्रमुक्तं न तूत्तरक्रतुवि-नियोगः, अग्नि-शब्दस्य तावन्मात्रे प्रसिद्धिस्वारस्यात्तथाऽत्रापीत्यर्थः, एवं शब्दस्वारस्यमुपपादितम्। अथार्थानुपपत्तिः परिह्रियते "गृहीतस्य चे"ति गृहीतस्य प्रवर्त्तकाभावान्मीमांसाया अनारम्भणीयत्वं ह्यनुपपत्तिः साऽपि रागतः प्रवृत्त्या परिह्रियत इत्यर्थः श्रुतेरविवक्षितार्थत्वमपि परिहृतं भवति अध्ययनविधेः प्रयोजनपर्यवसायित्वमपि परम्परयोपपद्यते, अर्थज्ञानपर्यन्त-त्वपक्षवादिति कर्मावबोधित्वदर्शनादित्यापातप्रतीतिरुच्यते तत्र कर्मोप-क्रमत्वात् प्रथमं कर्मविचार उपपद्यते आपातप्रतीत्या प्रवृत्तावऽप्यतथ्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवति विज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय

तान्येवानुविनश्यतीत्यादिभिर्व्याकुलतया न केवलं ब्रह्मविचार एव कर्मविचारोऽपि कर्त्तव्य एव अध्ययनविधेरर्थज्ञानपर्यन्तत्वे वेदमधीत्य स्नास्यन्नित्यध्ययनानन्तरं समावर्त्तनस्मृतेर्बाधितत्वान्मीमांसाश्रवणस्यावसरः स्यात् रागतः प्राप्तौ नावसर इति चेत् न त्वाप्रत्ययः समानकर्तृकत्वपूर्वकालत्वमात्रपरः न त्वानन्तर्यपरः, अतो न विरोधः, आनन्तर्येऽपि स्वोपयोग्यर्थज्ञानस्यावसरप्रद एव विधिः, यथा क्रतुविधिरर्थार्जनादेः, न केवलं स्मृतिसिद्धा समावृत्तिः श्रुतिसिद्धा च अधीत्याभिसमावृत्त्येति हि श्रूयते, अतो नाध्ययनविधिर्बाधते । किञ्च श्रुतिस्मृत्योर्विरोध एव नास्ति येन बाध्यबाधकभावः स्यात्, उभयत्राप्यध्ययनशब्दस्यार्थज्ञानपर्यन्तत्वे वा अक्षरराशिग्रहणपर्यन्तत्वे वा तुल्यार्थत्वात् समावृत्तस्यापि मीमांसाश्रवणावसरः श्रावयितुरिव स्यादेव यावदर्थज्ञानं हितैषिवचनादनुष्ठानमप्युपपद्यते, यथा ब्रह्मचर्यं, न च तावता मीमांसानैरपेक्ष्यं हितैषिणामाप्तत्वनिश्चयार्थं स्वयं शिष्याणामुपपादनार्थं च श्रवणोपपत्तेः, न चाध्ययनजन्यज्ञाननिरपेक्षं हितैषिवचनादनुष्ठानेऽपशूद्राधिकरणविरोधः, हितैषिवचनादनुष्ठानेऽपि मन्त्रब्राह्मणविशेषाणां कृत्स्नवेदस्य च जप्यत्वात् तस्य चाध्ययनेनैव सम्पाद्यत्वात्, अध्ययनस्य चोपनयनाङ्गकत्वादुपनयनस्य च त्रैवर्णिकाधिरत्वाच्च शूद्रादेरुपनयनानधिकारादनुष्ठानानुपपत्तेः. "न शूद्राय मतिं दद्यात् न चास्योपदिशे"दिति निषेधाच्च शूद्रादेर्नोपदिशन्ति अतोऽध्ययनविधेरर्थज्ञानपर्यन्तत्वाभावादध्ययनवतः कर्मविधानेऽप्यर्थज्ञानस्य कर्मविधिशेषत्वाभावान्न विद्या कर्माङ्गमित्यर्थः । अर्थज्ञानपर्यन्तत्वं विधेरभ्युपगम्य परिहरति "यद्यपी"ति, अर्थज्ञानादर्थान्तरत्वात् अध्ययन-शब्दवाच्यव्यतिरिक्तत्वाद्विद्याया इत्यर्थः । न ह्यर्थज्ञानस्य ज्योतिष्टोमादिकर्मशेषभूतं विपरीतं हि तत्, एवं शास्त्रजन्यज्ञानमुपासनाख्यायाः विद्यायाः शेषभूतमित्यर्थः । सू० नाविशेषात् ॥ १३ ॥ पूर्वपक्षिणोक्तस्य कर्मणैवेत्यादिवचनस्यापि विद्याङ्गभूतकर्मविषयत्वमभिप्रेत्याह "कर्मणैव ही"ति, तस्य यावज्जीवमनुवृत्तिरङ्गिन उपासनस्यानुवर्त्तमानत्वादुपपन्नेत्याह "विदुषस्त्वि"ति, उत्तरसूत्रसङ्गतिमाह—

भा० एवमर्थस्वाभाव्येन चोद्यं परिहृत्य कुर्वन्नेवेह कर्माणीत्यस्यार्थमाह—

सू० स्तुतयेऽनुमतिर्वा ॥ १४ ॥

वा—शब्दोऽवधारणार्थः, ईशा वास्यमिदं सर्वमिति विद्याप्रकरणाद्विद्यास्तुतये सर्वदा कर्मानुष्ठानानुमतिरियं विद्यामाहात्म्यात् सर्वदा कर्म कुर्वन्नपि न लिप्यते कर्मभिरिति हि विद्या स्तुता भवति, वाक्यशेषश्चैतदेव दर्शयति एवं त्वयि नान्यथेतोऽस्ति न कर्मणा लिप्यते नर" इति अतो न कर्माङ्गं विद्या ॥

सू० कामकारेण चैके ॥ १५ ॥

अपि चैवमेके शाखिनः कामकारेण ब्रह्मविद्यानिष्ठस्य गार्हस्थ्यत्यागमधीयते "किं प्रजया करिष्यामो येषां नोऽयमाऽऽत्मायं लोक" इति विदुषो विरक्तस्य कामकारेण गार्हस्थ्यत्यागं ब्रुवदिदं वचनं ब्रह्मविद्यायाः कर्मानङ्गत्वं दर्शयति, यज्ञादिकर्माङ्गत्वे हि विद्याया विद्यानिष्ठस्य कामकारेण गार्हस्थ्यत्यागो न सम्भवति, अतो न विद्या कर्माङ्गम् ॥

सू० उपमर्दं च ॥ १६ ॥

पुण्यापुण्यरूपस्य समस्तसांसारिकदुःखमूलस्य कर्मणो ब्रह्मविद्ययोपमर्दं प्रति वेदान्तमधीयते "भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः । क्षीयन्ते चास्य कर्माणि

तस्मिन् दृष्टे परावरे" इत्यादिकं तद्विद्यायाः कर्माङ्गत्वे न सङ्गच्छते ॥

सू० ऊर्द्ध्वरेतस्सु च शब्दे हि ॥ १७ ॥

ऊर्द्ध्वरेतस्स्वाश्रमेषु ब्रह्मविद्यादर्शनात्तेष्वग्निहोत्रदर्शपूर्णमासादिकर्माभावाच्च न विद्या कर्माङ्गं । ननूर्द्ध्वरेतस आश्रमा न सन्त्येव यावज्जीवमग्निहोत्रं जुहोतीत्यादिनाग्निहोत्रदर्शपूर्णमासादीनां यावज्जीवाधिकारश्रुतेः ।

टी० "एवमि"ति, अर्थस्वभाव्यं विद्याया अर्थज्ञानादर्थान्तरत्वं कर्मेति कर्त्तव्यताकत्त्वं च । सू० स्तुतयेऽनुमतिर्वा ॥ १४ ॥ ईशा वास्यमिति ईट्-शब्दस्तृतीयान्तः ईशा तेन वास्यम् । यद्वा ईशेन आवास्यम् ईश्वरपरतन्त्रमित्यर्थः । नरे-न रमत इति नरः, निःसङ्गः, तस्मिन् इतोऽन्यथा-नास्ति नरे त्वयि न कर्म लिप्यत इति ततोऽन्यथा नास्ति इदमेव तत्त्वं न स्तुतिमात्रमित्यर्थः । सू० कामकारेण चैके ॥ १५ ॥ गार्हस्थ्यत्यागमधीयत इत्यध्याहारः, यज्ञादीति न ह्यङ्गमवलम्ब्याङ्गिनस्त्याग उपपद्यते, तस्मात्त्याज्यस्य कर्मणोऽङ्गित्वं नास्तीत्यर्थः । सू० उपमर्दं च ॥ १६ ॥ तस्मिन् दृष्टे परावर इत्यादिकमिति, अर्थप्रधानो निर्देशः इत्याद्युक्तार्थकरूपमुपमर्दमित्यर्थः । तद्विद्याया इति न ह्यङ्गेनाङ्गिन उपमर्द उपपद्यते, तस्मादुपमर्दिका विद्योपमर्दनीयस्य कर्मणो नाङ्गमित्यर्थः ॥ सू० ऊर्द्ध्वरेतस्सु च शब्दे हि ॥ १७ ॥ स्मृतिष्वाश्रमाः प्रतीयन्त इत्यत्राह

सू० श्रुतिविरुद्धानां स्मृतीनां चाप्रामाण्यात् अत आह "शब्दे ही"ति, वैदिके एव हि शब्दे ते दृश्यन्ते त्रयो धर्मस्कन्धाः ये चेमेऽरण्ये श्रद्धातपः इत्युपासते एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्तीत्यादौ यावज्जीवश्रुतिस्त्वविरक्तविषया ॥

## सू० परामर्शं जैमिनिरचोदनाच्चाप- वदति हि ॥ १८ ॥

यदिदं त्रयो धर्मस्कन्धाः इत्यादौ वैदिके शब्दे ऊर्द्ध्वरेतस आश्रमा दृश्यन्ते अतस्ते सन्त्येवेति नैतदुपपद्यते यतस्त्रयो धर्मस्कन्धा इत्येवमादिषु वाक्येषु तेषामाश्रमाणां परामर्शमात्रं क्रियते अनुवादमात्रमित्यर्थः । कुत एतदचोदनात् अविधानादित्यर्थः, न ह्यत्र विधि शब्दः श्रूयते त्रयो धर्मस्कन्धा इत्यादिना हि प्रकृतं प्रणवेन ब्रह्मोपासनं स्तूयते ब्रह्मसंस्थोऽमृतत्वमेतीत्युपसंहारात्, अतोऽन्यार्थमनुवादमात्रमत्र क्रियते । तेषामाश्रमाणां ये चेमेऽरण्ये श्रद्धा तप इत्युपासते इति च देवयानविधिपरत्वात्तत्रापि नाश्रमान्तरविधिसम्भवः, अपि चापवदति हि श्रुतिराश्रमान्तरं "वीरहा वा एष देवानां योऽग्निमुद्वासयते" इत्यादिका अत ऊर्द्ध्वरेतस आश्रमा न सन्तीति जैमिनिराचार्यो मन्यते ॥

## सू० अनुष्ठेयं बादरायणस्साम्यश्रुतेः ॥ १९ ॥

गृहस्थाश्रमवदाश्रमान्तरमप्यनुष्ठेयं भगवान् बादरायणो मन्यते, कुतः साम्यश्रुतेः उपादेयतयाऽभिमतगृहस्थाश्रमसाम्यं हि तेषामप्याश्रमाणां श्रूयते त्रयो धर्मस्कन्धा इत्यारभ्य ब्रह्मसंस्थस्तुत्यर्थतया संकीर्त्तनं गृहस्थाश्रमस्येतरेषां च समानम् । अथ गृहस्थाश्रमस्यानुवादः प्राप्तौ सत्यामेव सम्भवतीति तस्य प्राप्तिरवश्याभ्युपेत्येति मतं

तदितरेषामपि समानं किमन्या[1]भिनिवेशात्, न च गार्हस्थ्यधर्म एव यज्ञोऽध्ययनं दानं तपो ब्रह्मचर्यमिति सर्वैः शब्दैरभिधीयते, ब्रह्मचर्यतपसोर्गृहस्थस्यैव सम्भवादिति युक्तम् ॥

टी० श्रुतिविरुद्धानामिति धर्मस्कन्धा धर्माश्रया आश्रमाः । सू० परामर्शं जैमिनिरचोदनाच्चापवदति हि ॥ १८ ॥ अन्यार्थं ब्रह्मोपासनस्तुत्यर्थमित्यर्थः । सू० अनुष्ठेयं बादरायणः साम्यश्रुतेः ॥ १९ ॥ आश्रम-शब्दो धर्मपरः स्तुत्यर्थतयाऽनुवादसाम्यं प्रमाणान्तरप्राप्तिसाम्यं चोभयं सूत्राभिप्रेतम् । आश्रमान्तरकीर्त्तने सति हि साम्यं वक्तव्यं तदेव नास्ति गार्हस्थ्यधर्माणामेव कीर्त्तनादित्याशङ्क्ते "न च गार्हस्थ्ये"ति, परिहरति ॥

सू० त्रयो धर्मस्कन्धा इति त्रित्वेन संगृह्य प्रथमो द्वितीयस्तृतीय इति विभागवचनानुपपत्तेः, अतो यज्ञोऽध्ययनं दानमिति गृहस्थाश्रम उच्यते, अध्ययन-शब्दो वेदाभ्यासपरः तपः-शब्देन वैखानसपारिव्राज्ययोर्ग्रहणम् । उभयोस्तपःप्रधानत्वात् तपःशब्दो हि कायक्लेशे रूढः, स च द्वयोरपि समानः ब्रह्मचारिधर्म एव ब्रह्मचर्य-शब्देनाभिधीयते, "ब्रह्मसंस्थोऽमृतत्वमेती"ति परत्र श्रूयमाणो ब्रह्मसंस्थ-शब्दो यौगिकः सर्वाश्रमसाधारणः सर्वेषामाश्रमिणां ब्रह्मसंस्थासम्भवात्, ब्रह्मणि संस्था संस्थितिर्ब्रह्मसंस्थत्वं तच्च सर्वेषां सम्भवत्येव ब्रह्मनिष्ठाविकलाः केवलाश्रमिणः पुण्यलोकभाजः तेष्वेव ब्रह्मनिष्ठोऽमृतत्वभाग्भवति तदेतद्विस्पष्टमुक्तं भगवता पराशरेण प्राजा-

[1] अन्यत्राभिनिवेशात् इति पा०

पक्ष्यं ब्राह्मणानामित्यारभ्य ब्राह्मं संन्यासिनां स्मृतमित्यन्तेन वर्णानामाश्रमाणां च केवलानां ब्रह्मलोकप्राप्त्यन्तं फलमभिधाय एकान्तिनः सदा ब्रह्मध्यायिनो योगिनो हि ये तेषां तत्परमं स्थानं यद्वै पश्यन्ति सूरय” इति तेष्वेव ब्रह्मनिष्ठानां ब्रह्मप्राप्तिमभिदधता, अतो गृहस्थाश्रमतुल्या ऊर्ध्वरेतस आश्रमा अपि दृश्यन्ते इति तेऽप्यनुष्ठेयाः, ये चेमेऽरण्ये श्रद्धातप इत्युपासत इति चारण्ये इति तपःप्रधानाश्रमप्राप्त्यपेक्षत्वाद् देवयानविधानस्य तत्रापि तत्प्राप्तिरङ्गीकरणीया, परामर्शपक्षे विधानपक्षे च गृहस्थाश्रमतुल्यमेषामप्यनुष्ठेयत्वमित्युपपाद्य विधिरेवायमाश्रमाणां सर्वेषां नानुवाद इत्युपपादयितुमाह—

टी० ‘अथ’ इति, व्याख्यानान्तरव्यावृत्त्यर्थं च व्याचष्टे “अतो यत्र” इति, ब्रह्मसंस्थ-शब्दः संन्यासाश्रमविषयः परैर्व्याख्यातः तद्व्यावृत्त्यर्थमाह “ब्रह्मसंस्थ” इति, यौगिकः यौगिकत्वात्, अनेन क्लृप्तावयवशक्त्यैवेत्याद्युक्तनयात् ब्रह्मसंस्थ–शब्दस्य चतुर्थाश्रमपरत्वानुपपत्तिरुक्ता, उक्तार्थानुपपत्त्याऽपि न तथाऽर्थो वर्णनीय इत्याह “सर्वेषामि” ति, तस्यामेव श्रुतौ पुण्यलोकभाज इत्युक्तं तद्व्याचष्टे “ब्रह्मनिष्ठा विकला इति तदेतदित्यादि अभिदधता पराशरेणेत्यन्वयः ये चेमेऽरण्ये इत्यादिवाक्यस्य देवयानविधिपरत्वादाश्रमविधिपरत्वाभाव उक्तः पूर्वपक्षिणा तत्परिहरति “ये चेमेऽरण्ये” इति, देवयानविधानार्थं कृतोऽप्यनुवादो वानप्रस्थपारिव्राज्ययोः प्रमाणान्तरप्राप्तिसापेक्ष इति तत्रापि विधिरस्त्येवेत्यर्थः । उत्तरसूत्रशङ्कामाह “परामर्शपक्ष” इति,

## विधिर्वा धारणवत् ॥ २० ॥

सू० वा—शब्दोऽवधारणार्थः विधिरेवायमाश्रमाणां धारणवत् । यथा दिष्टाग्निहोत्रे अधस्तात्समिधं धारयन्ननुद्रवेदुपरि हि देवेभ्यो धारयतीत्यत्रानुवादसरूपादपि वाक्यादुपरि धारणस्याप्राप्तत्वाद्विधिराश्रीयते तदुक्तं शेषलक्षणे "विधिस्तु धारणेऽपूर्वत्वा"दिति, तथा अत्राप्यप्राप्तत्वाद्विधिरेवाश्रयणीयः "ब्रह्मचर्यं समाप्य गृही भवेद् गृहाद् वनी भूत्वा प्रव्रजेत् यदि वेतरथा ब्रह्मचर्यादेव प्रव्रजेत् गृहाद्वा वनाद्वा यदहरेव विरजेत्तदहरेव प्रव्रजे"दिति जावालानामाश्रमविधिमसन्तमिव कृत्वा एतेष्वन्यपरेष्वपि वाक्येष्वाश्रमप्राप्तिरवश्याश्रयणीयेत्युपपादितम् । एवमाश्रमान्तरविधानादृणश्रुतिर्यावज्जीवश्रुतिरवादश्रुतिश्चाविरक्तविषया एवेति वेदितव्याः, अन्याश्च ब्रह्मविदः कर्मणामाप्रयाणादवश्यकर्त्तव्यताविधायिन्यः श्रुतयः स्मृतयश्च स्वस्वाश्रमधर्मविषयाः, अत ऊर्द्ध्वरेतस्सु च ब्रह्मविद्याविधानाद्विधानात् पुरुषार्थइति सिद्धम् ॥ पुरुषार्थाधिकरणं समाप्तम् ॥

टी० सू० विधिर्वा धारणवत् ॥ २० ॥ इयमस्मिन् सूत्रे कृत्वाचिन्तेत्याह ब्रह्मचर्यं समाप्येत्यादिना, ऋणश्रुतिः त्रिभिर्ऋणवान् जायते इत्यादिका, अपवादश्रुतिर्वीरहा वा एष देवानां योऽग्निमुद्वासयत' इत्येषा स खल्वेवं वर्त्तयन् यावदायुषमित्यादिका आश्रमविशेषधर्मानुवृत्तिपराः श्रुतयोऽपि तत्तदाश्रमिणां तत्तद्धर्मानुवृत्तिपरा न त्वाश्रमान्तरधर्माणां ब्रह्मविद्याङ्गत्वविरोधिन्य इत्याह 'अन्याश्चे'ति, । अधिकरणार्थमुपसंहरति "अत"इति, ऊर्द्ध्वरेतसां ब्रह्मविधानेन विद्याया गृहस्थाश्रमधर्मं प्रत्यङ्गत्वाभावेन पृथक्फलसाधनत्वात् विद्यातः पुरुषार्थसिद्धिरित्यर्थः । इतरेत्रयोऽपि विभागः शतवदित्येतत्पुरुषभेदेन विभागपरमाहुः आभ्यां शतं

द्वेयमित्युक्ते पञ्चाशदेकस्य पञ्चाशदन्यस्येति विभागवदिति तदयुक्तं तं विद्याकर्मणी समन्वारभेते इत्येकस्मिन्नेव पुरुषे द्वयोरन्वारम्भणप्रतीतेस्तदविरोधेन विभागस्य दर्शनीयत्वात् । परे चापरे चाध्ययनस्यार्थावबोधपर्यन्ततामिच्छन्तोमात्रशब्दस्य वेदान्तसिद्धमात्मज्ञानव्यवच्छेद्यमिति तस्य न कर्मशेषतेत्याहुः । तच्चायुक्तं सूत्रस्वारस्यादर्थावबोधपर्यन्ततायाः शब्दस्वारस्यार्थानुपपत्तिविरहविध्वस्तत्वाच्च त्रयोऽपि नाविशेषादिति सूत्रं विदुष एवायं नियम इति विशेषाभावादविद्वद्विषयोऽयं कुर्वन्नेवेति नियम इति व्याचष्टे तदप्ययुक्तं ब्रह्मविदः प्रकृतत्वात् अतः स्वतन्त्रकर्मविषयत्वे विशेषाभावाद्विद्याङ्गकर्मविषयत्वेनापि नियमोपपत्तिरूपतया व्याख्यानं युक्तम् । अन्ये तु परामर्शं जैमिनिरित्याद्यधिकरणान्तरं वर्णयन्ति तदपि तादर्थ्यनैरन्तर्याभ्यामयुक्तम् । परे त्वेकाधिकरण्यमिच्छन्त एव विधिर्वा धारणवदित्यत्र त्रयो धर्मस्कन्धा इत्यादौ विषये तपः-शब्दो वनस्थमात्रपरः ब्रह्मसंस्थ-शब्दः परिव्राजकवाची त्रयाणां पुण्यलोकभाक्त्वमुक्त्वा ब्रह्मसंस्थस्यामृतत्वप्राप्तिवचनाद्यथा देवदत्तयज्ञदत्तौ मन्दप्रज्ञौ अन्यतरो महाप्राज्ञ इत्युक्ते विष्णुमित्रो महाप्राज्ञ इत्युक्तं स्यात् न तु यज्ञदत्तस्तद्वदिति तदनुपपन्नं तपः-शब्दस्य वनस्थमात्रपरत्वेऽपि ब्रह्मसंस्थशब्दस्य यौगिकत्वसम्भवेन ब्राह्मणीन्यायात् परिव्राजके रूढिकल्पनाऽनुपपत्तेः, प्रकृताश्रमत्रयमात्रावलम्बनत्वेनास्य वचनस्य परिव्राजामृतत्वप्राप्तौ प्रमाणत्वाभावप्रसङ्गात् अतस्तेषां खल्वेषां सतां भूतानां त्रीण्येव बीजान्यण्डजं जीवजमुद्भिज्जमित्यवधारणे सत्यपि स्वेदजोद्भिज्जयोरिवानवधारणस्थले तपः-शब्देनाश्रमद्वयस्य तन्त्रेणोपादानोपपत्तेः, पुण्यलोकभाक्त्वामृतत्वयोस्त्रिष्वेवाश्रमेषु विद्वदविद्वद्विषयत्वेनोपपत्तेः, प्राजापत्यं गृहस्थानामित्यादिस्मृत्यैकार्थ्याच्चाश्रमचतुष्टयविधिः । न च कर्मावरुद्धत्वेनाश्रमान्तराणामात्मानुसन्धानानवकाशः कर्मानवरुद्धकालबाहुल्यात्, न हि सर्वस्मिन्नहोरात्रे उपासीतेति विधिः अन्यथा जनकादीनामात्मवेदनादपवर्गप्राप्तिवचनानुपपत्तेः, उभयभावनानिष्ठगोचरशास्त्रवैयर्थ्यं च स्यात् । यत्तु देवदत्तयज्ञदत्तौ मन्दप्रज्ञौ अन्यतरो महाबुद्धिरिति निदर्शनं तत्रापि कालभेदेन

यज्ञदत्तादिविषयत्वं युज्यते, दृष्टान्तवैषम्यं च तत्र धर्म्यन्तरोपस्थापका-न्यतरशब्दसमभिव्याहारात् यौगिकस्य महाबुद्धिशब्दस्य धर्म्यन्तर निष्ठत्वं युक्तम्, इह तु ब्रह्मसंस्थशब्दातिरेकेणाविशेष्यसमर्पकपदाभावात् प्रकृत-विषयत्वमेव स्यात् ॥ पुरुषार्थाधिकरणं समाप्तम् ॥

स्तुतिमात्राधिकरणम् । **सू० स्तुतिमात्रमुपादाना-दिति चेन्नापूर्वत्वात् ॥ २१ ॥**

भा० इदमिदानीं चिन्त्यते, "स एष रसानां रसतमः परमः परार्ध्योऽष्टमो य उद्गीथ" इत्येवं जातीयकानि वाक्यानि क्रत्ववयवभूतोद्गीथादिस्तुतिमात्रपराणि? आहोस्विदु-द्गीथादिषु रसतमादिदृष्टिविधानार्थानी? ति, अत्र प्र-तिपादितमुपासनपरत्वमङ्गीकृत्योपासनस्य पुरुषार्थत्वेन क्रतुषूपादानानियम उक्तः, किं युक्तं स्तुतिमात्रपराणीति, कुतः उद्गीथाद्युपादानात् क्रत्वङ्गभूतानि ह्युद्गीथादी-न्युपादाय तेषां रसतमादित्वं प्रतिपादितं, यथा जुह्वा-दीनां पृथिव्यादित्वं प्रतिपादयतो वचनस्येयमेव जुहूः स्वर्लोक आहवनीय इत्यादिकस्य तत्स्तुतिमात्रपरत्वं तथेहापि, तदिदमाशङ्कते—स्तुतिमात्रमुपादानादिति चे-दिति, उद्गीथाद्युपादानात्तत्स्तुतिमात्रमेवैषां वाक्यानां विवक्षितमिति चेत् अत्रोत्तरं नापूर्वत्वादिति, न स्तुति-मात्रत्वमुपपद्यते, कुतः अपूर्वत्वात्—अप्राप्तत्वात्, न ह्युद्गीथाद्येयोरसतमादितया प्रमाणान्तरेण प्रतिपन्नाः येन तत्प्राशस्त्यबुद्ध्युत्पत्त्यर्थं रसतमादित्वेनानूद्येरन् न

चोद्गीथादिविधिरच सन्निहितः येनेयमेव जुहूः स्वर्गो-लोकआहवनीय इत्यादिवत्तदेकवाक्यत्वेन यया कयाचि-द्विधया तत्स्तुतिपरत्वमाश्रीयेत, अतः क्रतुवीर्यवत्त्वादि-फलसिद्ध्यर्थमुद्गीथादिषु रसतमादिदृष्टिविधानमेव न्या-य्यम् ॥

## सू० भावशब्दाच्च ॥ २२ ॥

उपासीतेत्यादिभावशब्दाच्च विधिपरत्वमेव न्याय्यं, वि-धिप्रत्यययुक्तो हि क्रियाशब्दोविधेयमेव स्वार्थमवगम-यति, तस्मादुपासनविधानार्था एताः श्रुतयः । स्तुतिमा-त्राधिकरणं समाप्तम् ॥

टी० सू· स्तुतिमात्रमुपादानादिति चेन्नापूर्वत्वात् ॥ २१ ॥ अन-न्तराधिकरणद्वयं प्रासङ्गिकं ब्रह्मसंस्थस्तुत्यर्थमनूदितत्वं पूर्वपक्षीकृत्याश्र-मद्वयस्य विधानमुक्तम्, एवं स्तुतिप्रसङ्गात् रसतमत्वप्रतिपादकवाक्यानि स्तुतिपराण्युत ने? ति शङ्का जायते इति प्रासङ्गिकी सङ्गतिः, पूर्वं सप्तानां रसानां प्रतिपादितत्वादुद्गीथस्याष्टमरसत्वं स एष रसानामित्यादिवा-क्यानि किमुद्गीथादिस्तुतिमात्रपराणि? उतोद्गीथादिषु रसतमत्वा-दिदृष्टिविधिपराणि? किमेषामर्थवादत्वसमाश्रयणं न्याय्य? मुत विधिपर-त्वम्? अपूर्वत्वं किं विधित्वमवगमयति? न? चेदर्थवादत्वस्य न्याय्यत्वात् स्तुतिपराणि, अवगमयति चेद् विधिपरत्वस्य न्याय्यत्वात् रसतमत्वादि-दृष्टिविधिपराणि, उद्गीथाद्युपासनानां पुरुषार्थत्वं प्रागुक्तं तत्कथमुपा-सने संशय इत्यत्राह "अत्र प्रतिपादित"मिति, उद्गीथाद्युपासनादी-त्येतद्विवृणोति "क्रत्वङ्गे"ति । ततः किमित्यत्राह "यथे"ति, ननु क्रत्वङ्गो-पादानपूर्वकगुणप्रतिपादनं स्तुतिश्चेत् क्रत्वङ्गजुहूपादानपूर्वकपर्णताप्रति-पादकमपि स्तुतिः स्यात्, नैवं क्रत्वङ्गोपादानपूर्वकस्य पुरुषेण साधयितु-मशक्यगुणप्रतिपादानस्यैव स्तुतिरूपत्वात्, । शङ्काया अनुत्सूत्रतामाह

"तदिद"मिति, उक्तमर्थं सूत्रान्तरेषु दर्शयति "उद्गीथादी"ति, अत्रोत्त-रमित्यादि. अपूर्वत्वादित्येतद्व्याचष्टे "अप्राप्तत्वा"दिति, तदुपपादयति "न ही"ति, स्तुतिर्हि प्रमाणान्तरप्राप्तगुणानुवादेनाप्राप्तगुणविधानेन वा मुख्यवृत्त्युपस्थापितगुणासम्भवे वृत्त्यन्तरोपनीतगुणान्वयेन वा क्रियते, तत्र प्रमाणान्तरप्राप्तगुणानुवादरूपस्तुत्यनुपपत्तौ हेतुः सूत्रे कण्ठोक्तः तर्ह्य-प्राप्तगुणविधानेन स्तुतिरियं स्यात् यद्रसतमत्वादिकथनमिति चेत् न उद्गीथादे रसतमत्वादिकत्वस्यायोग्यत्वादयोग्यार्थस्य च विधातुमशक्य-त्वात् तद्विधानेन स्तुत्यनुपपत्तेरिति परिहारः सूत्रे भाष्ये चाभिप्रेतः । ननु मुख्यार्थायोग्यत्वे सतीयमेव जुहूरित्यादाविव वृत्त्यन्तरोपनीतगुणान्वयेन स्तुतिः स्यात् यदि स्वरूपेणान्वयायोग्यस्यापि रसतमत्वादेरारोपणस्य श-क्यत्वात् दृष्टिविधिः तर्हि इयमेव जुहूरित्यादिष्वपि दृष्टिविधिः स्यादि-त्यत्राह "न चोद्गीथादिविधि"रिति, आदि-शब्देन पञ्चविधसामवि-ध्यादिकं गृह्यते यथाकथाचित् विधया अमुख्यया वृत्त्येत्यर्थः । इयमेवेत्या-दिवाक्यस्य कर्मविधिप्रकरणसन्निधानात् "सम्भवत्येकवाक्यत्वे वाक्यभेद-स्तु नेष्यत" इति न्यायादेकवाक्यत्वसिद्ध्यर्थमुख्यवृत्त्या स्तुतित्वमाश्रितम्, अत्र तु तथा सन्निहितत्वाभावेनैकवाक्यत्वाभावात् स्तुतित्वानुपपत्तिरि-त्यर्थः । सूत्रव्याख्यानमधिकरणार्थेन निगमयति "अत"इति, पूर्वं पूर्वपक्ष-युक्तिः परिहृता, स्वपक्षसाधकहेतुरनन्तरसूत्रेणाभिधीयते । सू॰ भावशब्दा-च्च ॥ २२ ॥ उद्गीथादिविधेरत्राभाव उक्तः पूर्वसूत्रे, अत्र तूपासनविधेः सद्भाव उच्यते, भावः—क्रिया विधिप्रत्यययुक्तो भाव—शब्दोऽत्र विवक्षितः । स्तुतिमात्राधिकरणं समाप्तम् ॥

पारिप्लवाधिकरणम् ।

**सू॰ पारिप्लवार्था इति चेन्न विशेषितत्वात् ॥ २३ ॥**

भा॰ "प्रतर्दनो ह वै दैवोदासिरिन्द्रस्य प्रियं धामोपजगाम श्वेतकेतुर्हारुणेय आस"त्येवमादीनि वेदान्तेष्वाख्यानानि किं पारिप्लवप्रयोगार्थानि ? उत विद्याविशेषप्रतिपाद-

नार्थानी? ति चिन्तायाम् आख्यानानि शंसन्तीत्याख्यानानां पारिप्लवे विनियोगान्न विद्याप्रधानत्वं न्याय्यमिति चेन्न सर्वाण्याख्यानानि पारिप्लवप्रयोगेन विनियोगमर्हन्ति, कुतः विशेषितत्वात् विनियोगस्य, आख्यानानि शंसन्तीत्युक्त्वा तत्रैव मनुर्वैवस्वतो राजेत्यादिना मन्वादीनामख्यानानि विशेष्यन्ते, अतस्तेषामेव तत्र विनियोग इति गम्यते, तस्मान्न सर्ववेदान्तेष्वाख्यानश्रुतयः पारिप्लवप्रयोगार्थाः, अपि तु विद्याविध्यर्थाः ॥

**सू० तथा चैकवाक्योपबन्धात् ॥ २४ ॥**

आत्मा वा अरे द्रष्टव्य इत्यादिविधिनैकवाक्यतयोपबन्धाच्चाख्यानानां विद्याविध्यर्थान्येव तानीति गम्यते, यथा सोऽरोदीदित्येवमादेः कर्मविध्यर्थत्वं नपारिप्लवार्थत्वम्, ॥

पारिप्लवाधिकरणं समाप्तम् ॥

आग्नीन्धनाधिकरणम् ।

**सू० अत एव चाग्नीन्धनाद्यनपेक्षा ॥ २५ ॥**

विस्तुतिप्रसङ्गादवान्तरसङ्गतिविशेषेणार्थद्वयं चिन्तितं, यावन्त ऊर्द्ध्वरेतस आश्रमिणः सन्तीत्युक्तम्, ऊर्द्ध्वरेतस्सु च शब्दे हीत्यादिभिः सूत्रैः, इदानीमूर्द्ध्वरेतसो यज्ञाद्यभावात्तदङ्गिका विद्या न सम्भवतीत्याशङ्क्याह अत एव चाग्नीन्धनाद्यनपेक्षेति, यत ऊर्द्ध्वरेतस आश्रमिणो विद्यासम्बन्धित्वेन श्रुत्या परिगृह्यन्ते "ब्रह्मसंस्थोऽमृतत्वमेती"ति, ये चेमेऽरण्ये श्रद्धा तप इत्युपासते एतमेव

प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ति यदिच्छन्तो ब्रह्मचर्यं चरतीत्यादिकथा अत एवोर्ध्वरेतस्सु विद्याग्नीन्धनाद्यनपेक्षा, अग्नीन्धनमग्न्याधानम् आधानपूर्विकाग्निहोत्रदर्शपूर्णमासादिकर्म्मानपेक्षा तेषु विद्या केवलस्वाश्रमविहितकर्मापेक्षेत्यर्थः ॥ अग्नीन्धनाद्यधिकरणं समाप्तम् ॥

टी० सू० पारिप्लवार्था इति चेन्न विशेषितत्वात् ॥ २३ ॥ इदमपि प्रासङ्गिकमधिकरणं रमतमादिवाक्यानां स्तुत्यर्थत्वं पूर्वपक्षीकृत्योपासनपरत्वं स्थापितम्, एवं प्रातर्दनाद्याख्यानानि किं स्तुत्यर्थानि? उत पारिप्लवार्थानी? ति शङ्कया सङ्गतिः, पारिप्लवा आख्यानानि, इह पारिप्लवशब्देनाख्यानशंसनं विवक्षितं श्वेतकेतुर्हारुणेय इत्यादिवाक्यानि किं पारिप्लवप्रयोगार्थानि? उत विद्याविधानार्थानि? किं पारिप्लवे सर्वख्यानानां विनियोगः? उत मन्वाद्याख्यानानामेवे? ति किमाख्यानानि शंसन्तीत्याख्यान–शब्दः सर्वाख्यानपरः? उत मन्वाद्याख्यानपरः? किमाख्यानविशेषाम्नानमाख्यान--शब्दस्य विशेषपरतामवगमयति ने? ति न चेदाख्यानशब्दस्य सर्वाख्यानपरतया सर्वेषां तत्र विनियुक्तत्वात् सर्वाख्यानानि पारिप्लवार्थानि स्युर्विशेषपरतामवगमयति चेदाख्यान–शब्दस्य मन्वाद्याख्यानविशेषविषयतया तेषामेव पारिप्लवे विनियोगात् श्वेतकेतूपाख्यानादीनि विद्याविधानार्थानि स्युः, विद्याविशेषप्रतिपादनार्थानि स्तावकत्वेन प्रतिपादनार्थानि इत्यर्थः । विद्याविध्यर्था इति, विद्याविधेःस्तावकतया शेषभूता इत्यर्थः । प्रकरणोपात्तमात्रानभ्युपगमे आख्यानानन्त्यात् अशक्यत्वं च स्यात्, ॥ सू० तथा चैकवाक्योपबन्धात् ॥ २४ ॥ उपबन्धोऽन्वयः यथेति हिरण्यदक्षिणत्ववाक्येनैकवाक्यतयोपबन्धात्, सोऽरोदीदित्येवमादेः कर्मविध्यर्थत्वमित्यर्थः ॥ पारिप्लवार्थाधिकरणं समाप्तम् ॥ सू० अत एव चाग्नीन्धनाद्यनपेक्षा ॥ २५ ॥ व्याख्यातयोरधिकरणयोः प्रासङ्गिकत्वमाह "स्तुतिप्रसङ्गादि"ति, अस्याधिकरणस्य प्रथमाधिकरणेन सङ्गतिमाह "विद्यावन्त" इति, आशङ्क्याहेति, सूत्रे च–शब्दः शङ्काद्योतक

इति भावः। किं परिव्राजां ब्रह्मविद्याधिकारोऽस्ति? नेति किं यज्ञाङ्गिकैव विद्या? उताश्रमप्रयुक्तधर्माङ्गिका? किमूर्द्ध्वरेतसां विद्यासम्बन्धप्रतिपादक-वाक्यानि विद्याया आश्रधर्माङ्गकत्वमवगमयन्ति? ने? ति, न चेद्यज्ञाद्यङ्ग-कङ्गकत्वाद्विद्यायां परिव्राजामनधिकारः अवगमयन्ति चेदाश्रमधर्माङ्गतया परिव्राजां ब्रह्मविद्याधिकारः। अतः शब्दार्थमाह "यत"इति, परे त्विदं सूत्रमाद्याधिकरणफलनिगमनपरमाहुः। अत एव विद्यातः पुरुषार्थत्वाद्वि-द्यया फलोत्पत्तौ न कर्मापेक्षेति, इदं च निगमनमुत्पत्तावेव कर्मापेक्षे-त्यनन्तरसूत्रे वक्तुं युक्तमिति अश्ववदिति सूत्रे तदिदं मन्दफलत्वादना-दरणीयं पूर्वपक्षे युक्त्यन्तरे सम्भवति सङ्गते च सति तन्निरासपरत्वं हि सप्रयोजनम् ऊर्द्ध्वरेतसश्चाश्रमसद्भाव आसन्नत्वादतइति परामर्शोऽयश्च अग्नीन्धनाधिकरणं समाप्तम् ॥



सर्वापेक्षाऽधिकरणम् ।

## सू० सर्वापेक्षा च यज्ञादिश्रुते-रश्ववत् ॥ २६ ॥

सू० यदि विद्या यज्ञाद्यनपेक्षैवामृतत्वं साधयति तर्हि गृह-स्थेष्वपि तदनपेक्षैव साधयितुमर्हति, यज्ञादिश्रुतिरपि विविदिषन्तीति शब्दात् कर्मणो वेदानाङ्गतां न प्रतिपा-दयति अत आह "सर्वापेक्षे"ति, अग्निहोत्रादिसर्वक-र्मापेक्षैव विद्या कर्मवत्सु गृहस्थेषु, कुतः यज्ञादिश्रुतेः, "तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसा नाशकेन" इत्यादिना यज्ञादयो हि विद्याङ्गत्वेन श्रूयन्ते यज्ञादिना विविदिषन्ति वेदितुमिच्छन्ति यज्ञा-दिभिर्वेदनं प्राप्तुमिच्छन्तीत्यर्थः यज्ञादीनां ज्ञानसाधनत्वे सत्येव यज्ञादिभिर्ज्ञानं प्राप्तुमिच्छन्तीति व्यपदेश उपप-

द्यते यथाऽसेश्छेदनसाधनत्वे सत्यसिना जिघांसतीति व्यपदेशः, अतो यज्ञादीनां ज्ञानसाधनत्वमवगम्यते । ज्ञानं च वाक्यार्थज्ञानादर्थान्तरभूतं ध्यानोपासनादिशब्दवाच्यं विशदतमप्रत्यक्षताऽऽपन्नं स्मृतिरूपनिरतिशयप्रियमहरहरभ्यासाधेयातिशयमाप्रयाणादनुवर्त्तमानं मोक्षसाधनमित्युक्तमस्माभिः पूर्वमेव, वक्ष्यति च "आवृत्तिरसकृदुपदेशा"दित्यादिना, एवं रूपं ध्यानमहरहरनुष्ठीयमानैर्नित्यैर्नैमित्तिकैः कर्मभिः परमपुरुषाराधनरूपैः परमपुरुषप्रसादद्वारेण जायते इति यज्ञादिना विविदिषन्तीति शास्त्रेण प्रतिपाद्यते, अतः कर्मवत्सु गृहस्थेषु यज्ञादिनित्यनैमित्तिकसर्वकर्मापेक्षा विद्या, अश्ववत्—यथा पुरुषगमनसाधनभूतोऽश्वः स्वसपरिकरबन्धपरिकर्मापेक्षः, एवं मोक्षसाधनभूताऽपि विद्या नित्यनैमित्तिककर्मपरिकरापेक्षा, तदिदमाह स्वयमेव भगवान् "यज्ञोदानं तपः कर्म न त्याज्यं कार्यमेव तत् । यज्ञो दानं तपश्चैव पावनानि मनीषिणाम् ॥ यतः प्रवृत्तिर्भूतानां येन सर्वमिदं ततम् । स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः" इति, ॥ सर्वापेक्षाऽधिकरणं समाप्तम् ॥

टी० सू० सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत् ॥ २६ ॥ सङ्गतिः स्फुटा, किं गृहस्थस्य यज्ञादिकर्मवतो विद्यायामधिकारः? उत तद्रहितस्ये? ति, यज्ञादिकर्म विद्याङ्गं ने? ति यज्ञेनेत्यादिश्रुतिर्विद्याङ्गतया यज्ञादिकर्म विनियुङ्क्ते ने? ति किं कर्मणोविद्योत्पादकत्वं सम्भवति ने? ति, असम्भवे विनियोगाभावात् यज्ञादेर्विद्याङ्गत्वाभावात्तद्रहितस्य गृहस्थस्य

विद्याधिकारः सम्भवेत्, सम्भवति चेत् विनियोगाद् यज्ञादेर्विद्याङ्गतया तद्वतो गृहस्थस्य विद्याधिकारः, यज्ञादिश्रुतिरपीति इच्छासाधनत्वं वदतीति भावः । यज्ञादिसर्वकर्मापेक्षैवेति सूत्रे प्रतिज्ञापदानन्तरश्च–शब्दोऽवधारणार्थ इति भावः । ज्ञानसाधनत्वे सत्येवेति परमसाध्येच्छया विनाऽवान्तरसाध्येषु प्रवृत्तिर्नोऽपपद्यते यथा स्वर्गेच्छया विना स्वर्गार्थयज्ञादौ प्रवृत्त्यनुपपत्तिः, एवं ज्ञानेच्छया विना तदर्थेच्छासिद्ध्यर्थप्रवृत्त्यनुपपत्तेः, संजातज्ञानेच्छस्य चेच्छासिद्ध्यर्थप्रतिपत्तिनैरपेक्ष्याच्च यज्ञादेरिच्छासाधनत्वं नोपपद्यत इति भावः ॥ ज्ञानस्य न यज्ञाद्यपेक्षा वाक्यादेव तदुत्पत्तेरित्यत्राह "ज्ञानं चे"ति, आप्रयाणादनुवर्त्तमानं चेति अङ्गिनोऽनुवृत्त्या तदङ्गस्य कर्मणोऽप्यनुवृत्तिरपेक्षितेति भावः । यज्ञादिषु प्रवृत्तिर्मनोऽवधानविरोधिनी स्यात् प्रवृत्तिरूपत्वादित्यत्राह "एवंरूपं चे"ति, अदृष्टद्वारोपकारकत्वान्न दोष इत्यर्थः । अश्ववत् रथचर्यायोग्योऽश्वो न लाङ्गलाकर्षणे युज्यते, तथा फलोपपत्तौ न कर्मापेक्षत इति परे व्याचक्षते फलोत्पत्तावनपेक्षत्वे प्रामाणिकेऽपि उत्पत्तावपेक्षैव सूत्रप्रतिपाद्या सर्वापेक्षेति प्रतिज्ञातत्वात्, अतः परोक्तव्याख्यानं क्लिष्टम् । अपरे तु विद्यायाः फलोत्पत्तावनुग्राहकत्वेन यज्ञाद्यपेक्षाऽस्ति नेति विचार्यास्तीति सिद्धान्तयन्ति यज्ञादिवाक्ये फलसिद्धावपेक्षाप्रतीत्यभावात् वेदनसाधनत्वमात्रं हि तत्रावगम्यते तेन विद्यायाः फलसिद्धौ उपकारकत्वम् अशाब्दत्वात् निचाय्य तस्मिन् दृष्टे तमेवं विद्वानित्यादिभिरुत्पन्नस्य वेदनस्य मोक्षसाधनत्वेऽन्यानपेक्षत्वप्रतीतिस्वारस्याच्च तदनुपपन्नम् । अन्ये तु विद्याया यज्ञाद्यपेक्षत्वे परिव्राजां विद्याऽनधिकारप्रसङ्गात् गृहस्थेष्वपि यज्ञाद्यनपेक्षेति पूर्वपक्षं कृत्वा गृहिणां परिव्राजां चाचारे समानेऽपि सङ्गतिनिवृत्तिरूपपारिव्राज्यस्य गार्हस्थ्यस्यानिर्विष्टत्वात् कर्मतन्निवृत्तिरूपयोर्गार्हस्थ्यपारिव्राज्ययोर्ग्रहणाग्रहणवद्विकल्पोपपत्तेः परिव्राजकेषु विद्यायामनपेक्षितस्य यज्ञादिकर्मणो गृहिष्वपेक्षा युज्यत इति सूत्रद्वयमेकाधिकरणं वर्णयन्ति । तदयुक्तम् अधिकरणभेदस्यैव युक्तत्वात्, तथा हि किमुभयं सिद्धान्तसूत्रं तर्हि यतिष्वनपेक्षाया गृहिष्वपेक्षायाश्च परस्परतादर्थ्याभावात्साध्यद्वयं स्यात्,

तदानीमैकाधिकरण्यमयुक्तं, यद्युच्येत आद्यं सूत्रं पूर्वपक्षविषयं यतिष्वनपेक्षत्वात्, गृहिष्वप्यनपेक्षेत्येवमर्थपरमिति तच्च यतिषु यज्ञानपेक्षविद्याऽधिकारस्याधिकरणान्तरसाध्यत्वात् तस्य च तन्मूलपूर्वपक्षस्य चैकसूत्रप्रतिपाद्यत्वे वाक्यभेदप्रसङ्गाच्च, ऊर्द्ध्वरेतस्सु च शब्दे हीत्यत्रैव तत्समर्थनमाभिप्रायिकमिति, च वाच्यं विद्याऽनङ्गत्वसमर्थनोपक्षीणस्य सूत्रस्य विद्याऽधिकारसमर्थनेऽपि तात्पर्यकल्पने गौरवप्रसङ्गात्। अत आद्यसूत्रस्याधिकरणान्तरत्वं युक्तं, तथा सत्यनन्तराधिकरणपूर्वपक्षहेतुरर्थसिद्धः स्यात्, अतोऽधिकरणभेदः स्वारसिकप्राप्तः ॥ सर्वापेक्षाऽधिकरणं समाप्तम् ॥

शमदमाद्यधिकरणम् ।

## सू० शमदमाद्युपेतः स्यात्तथाऽपि तु तद्विधेस्तदङ्गतया तेषामप्यावश्यानुष्ठेयत्वात् ॥ २७ ॥

सू० गृहस्थस्य शमदमादीन्यप्यनुष्ठेयानि? उत ने? ति चिन्तायाम् आन्तरबाह्यकारणव्यापाररूपत्वात्कर्मानुष्ठानस्य शमदमादीनां तद्विपरीतरूपत्वाच्चाननुष्ठेयानीति प्राप्ते उच्यते यद्यपि गृहस्थः करणव्यापाररूपकर्मसु प्रवृत्तः तथाऽपि स विद्वान् शमदमाद्युपेतः स्यात्, कुतः तदङ्गतया तद्विधेः—विद्याङ्गतया तेषां विधेः तस्मादेवं विच्छान्तोदान्त उपरतस्तितिक्षुः समाहितो भूत्वाऽत्मन्येवात्मानं पश्येदिति, विद्योत्पत्तेश्चित्तसमाधानरूपत्वेन दृष्टपरिकरत्वाच्छमादीनां विद्यानिर्वृत्तये तेषां शमादीनामवश्यानुष्ठेयत्वाच्च तान्यप्यनुष्ठेयानि। न च करणव्यापारतद्विपर्ययरूपत्वेन कर्मणां शमदमादीनां च परस्परविरोधः, भिन्नविषयत्वात, विहितेषु करणव्यापारः अविहितेषु प्रयो-

जनशून्येषु च तदुपशम इति, न च करणव्यापाररूपकर्मसु वर्त्तमानस्य वासनावशात् शमादीनामुपादेयत्वासम्भवः विहितानां कर्मणां परमपुरुषाराधनतया तत्प्रसादद्वारेण निखिलविपरीतवासनोच्छेदहेतुत्वात्, अतो गृहस्थस्य शमदमादयोऽप्यनुष्ठेयाः ॥ शमदमाद्यधिकरणं समाप्तम् ॥

टी० सू० शमदमाद्युपेतः स्यात्तथाऽपि तु तद्विधेस्तदङ्गतया तेषामवश्यानुष्ठेयत्वात् ॥ २७ ॥ सङ्गतिः पूर्वपक्षोत्थानमुखेन स्फुटा, किं विद्यानिष्ठस्य गृहस्थस्य शमादीन्युपादेया? न्युत ने? ति किं यज्ञादीनां शमादीनां चविरोधोऽस्ति ने? ति किमत्र विधीयमाना करणव्यापारोपरतिरूपा शान्तिर्यज्ञादिव्यतिरिक्तव्यापारशान्तिः? उत सर्वव्यापारशान्तिः? सर्वशान्तिश्चेद्विरोधादनुपादेयानि, न चेदविरोधात् गृहस्थस्याप्युपादेयानि, यद्यपीत्यादि विहितत्वाद् दृष्टमुखेनोपकारकत्त्वाच्च शमाद्यनुष्ठेयमित्यर्थः । अविहितेषु प्रयोजनशून्येषु चेति शरीरधारणार्थमितभोजनादिव्यावृत्त्यर्थं प्रयोजनशून्येष्वित्युक्तम् ॥ यद्वा अविहितेषु अविहिताप्रतिषिद्धेषु प्रयोजनशून्येषु मुमुक्षोः प्रयोजनशून्यानि काम्यकर्माणि तेष्वित्यर्थः ॥ परे त्विदं सूत्रं पूर्वाधिकरणेऽन्तर्भाव्य व्याचक्षते यज्ञेन विविदिषन्ति इति वर्त्तमानापदेशतया न यज्ञादिविधिः किन्तु यज्ञादिपरिकरवती महाभागा विद्येति विद्यास्तुतिरित्याशङ्क्य एवं यज्ञाद्यनपेक्षायामपि शमाद्युपेतः स्यात् शमादीनां विधानाद्विहितानामवश्यानुष्ठेयत्वात्, यज्ञादीनि चानुष्ठेयानि विविदिषासंयोगस्याप्राप्तत्वेन विहितत्वात्तानि बाह्यतराणि, शमादीनि तु प्रत्यासन्नसाधनानि इति शङ्का तावदयुक्ता यज्ञाद्यपेक्षया शमादेर्विरोधाभावात्ततश्च तथाऽपीति वैयर्थ्यं विविदिषासंयोगस्याप्राप्ततया यज्ञादेरप्यनुष्ठेयत्वमविवक्षितमशाब्दं च, पूर्वसूत्रविवक्षितस्यात्र कथनमिति चेत् ततोऽपि वरं पूर्वसूत्रस्य स्तुत्यर्थतापरत्वं विहाय विविदिषा संयोगसमर्थनपरतया व्यानं विविदिषार्थत्वं चायुक्तमित्युक्तं तदभ्युपगमेऽपि यज्ञा-

दीनां शमादीनां च चोपादेयतासमर्थनस्य मिथस्तादर्थ्याभावात्सूत्रद्वयस्यैकाधिकरण्यमयुक्तम् ॥ शमदमाद्यधिकरणं समाप्तम् ॥

सर्वान्नानुमत्यधिकरणम् ।

**सू० सर्वान्नानुमतिश्च प्राणात्यये तद्दर्शनात् ॥ २८ ॥**

सू० वाजिनां छन्दोगानां च प्राणविद्यायाम् "न ह वा अस्यानन्नं जग्धं भवति नानन्नं परिगृहीतं भवति न ह वा एवंविदि किञ्चनानन्नं भवती"ति प्राणविदः सर्वान्नानुमतिः संकीर्त्यते, किमियं सर्वान्नानुमतिः प्राणविद्यानिष्ठस्य सर्वदा? उत प्राणात्ययापत्ताविति विशये विशेषानुपादानात्सर्वदेति प्राप्त उच्यते प्राणात्यय इति, च-शब्दोऽवधारणे प्राणात्ययापत्तावेवेत्यर्थः, कुतः तद्दर्शनात्, दृश्यते ह्यन्यत्र ब्रह्मविदामपि प्राणात्ययापत्तावेव सर्वान्नाभ्यनुज्ञा, किं पुनः प्राणविदः "उषस्तः किल चाक्रायणो ब्रह्मविदग्रेसरो मटचीहतेषु कुरुषु दुर्भिक्षदूषितेष्विभ्यग्रामे वसन्ननशनेन प्राणसंशयमापन्नो ब्रह्मविद्यानिष्पत्तये प्राणानामनवसादमाकाङ्क्षमाण इभ्यं कुल्माषान् खादन्तं भिक्षमाणस्तेन चोच्छिष्टेभ्योऽन्ये न विद्यन्त इति प्रत्युक्तः पुनरप्येतेषां मे देहीत्युक्त्वा तेन चेभ्येनोच्छिष्टेभ्य आदाय दत्तान्कुल्माषान्परिगृह्यानुपानप्रतिग्रहमिभ्येनार्थित उच्छिष्टमेव मे पीतं स्यादिति वदंश्चाक्रायणः किमेते कुल्माषा अनुच्छिष्टा इतीभ्येन पर्यनुयुक्तो न वा अजीविष्यमिमानखादन् कामो म उदपानमिति कुल्माषखा-

दने स्वस्य प्राणसंशयापत्तेस्तावन्मात्रखादनेन धृतप्राणस्य स्वस्योच्छिष्टोदकपानं कामकारितं निषिद्धं स्यादित्युक्त्वा स्वखादितशेषं जायायै दत्त्वा तया च रक्षितानपरेद्युर्धनाज-नेनार्जिजीविषया जिगमिषुः पुनरपि प्राणसंशयमापन्नस्ता-नेवेभ्याच्छिष्टान् स्वोच्छिष्टभूतान् पर्युषितांश्चखाद, अतो ब्रह्मविदामपि प्राणसंशय एव सर्वान्नानुमतिदर्शनाद्वचा-विशेषेण कीर्तितमपि प्राणविदः सर्वान्नीनत्वं प्राणात्यया-पत्तावेवेति निश्चीयते ॥

टी० सू० सर्वान्नानुमतिश्च प्राणात्यये तद्दर्शनात् ॥ २८ ॥ ब्रह्म-विदां शमादयोऽनुष्ठेया इत्युक्तं, तत्र भोजननियमरूपः शमविशेषोऽस्ति नेति विचार्यत इति सङ्गतिः, प्राणविदः सर्वान्नानुमतिः किं सर्वदा ? उत प्राणसंशयापत्तौ ? किं ब्रह्मविद उषस्तस्य प्राणसंशये सत्युच्छिष्टानुमतिद-र्शनं प्राणविदः सर्वान्नानुमतेरापद्विषयत्वमवगमयति नेति न चेत्सर्व-दानुमतिः स्यात्, ब्रह्मविदोऽपि प्राणसंशयेऽनुमतिमवगमयति चेत्कैमुत्य-नीत्या प्राणविदः सर्वान्नानुमतिः प्राणसंशयापत्तावेव स्यात् प्राणविद्या-निष्ठस्यापि सर्वान्नानुमतेर्दर्शनात् ब्रह्मविदः किं पुनर्न्यायसिद्धा सर्वान्ना-नुमतिरिति पूर्वपक्षसूत्रं प्राणविद्यामात्रविषयं तथाऽपि ब्रह्मविदां सर्वा-न्नानुमतिः पूर्वपक्षेऽभिप्रेता । मटची—अश्मवृष्टिः, इभमर्हतीति इभ्यो ह-स्तिपः, कुल्माषो माषविशेषः, ब्रह्मविदामपि सर्वान्नानुमतिः प्राणात्यये किं पुनर्दुर्बलप्राणविद्यानिष्ठस्येति कैमुत्यन्यायात् सिद्धान्तः ॥

## सू० अबाधाच्च ॥ २९ ॥

भू० "आहारशुद्धौ सत्त्वशुद्धिः सत्त्वशुद्धौ ध्रुवा स्मृति"रिति ब्रह्मविद्योत्पत्तावाहारशुद्धिविधानाबाधादपि ब्रह्मविदां सर्वान्नीनत्वमापद्विषयमवगम्यते । एवं ब्रह्मविदामतिशयि-

तशक्तीनामपि सर्वान्नीनत्वस्यापद्विषयत्वात् प्राणविदोऽल्पशक्तेः सर्वान्नानुमतिरापद्विषयैव ॥

## सू० अपि स्मर्यते ॥ ३० ॥

अपि चापद्विषयमेव सर्वान्नीनत्वं ब्रह्मविदामन्येषां च स्मर्यते "प्राणसंशयमापन्नो योऽन्नमत्ति यतस्ततः । लिप्यते न स पापेन पद्मपत्रमिवाम्भसे"ति ॥

## सू० शब्दश्चातोऽकामकारे ॥ ३१ ॥

यतो ब्रह्मविदामन्येषां च सर्वान्नीनत्वमापद्विषयमेव अत एव सर्वेषामकामकारेशब्दः कामकारस्य प्रतिषेधकः शब्दो वर्त्तते, अस्ति हि कठानां संहितायां कामकारस्य प्रतिषेधकः शब्दः, "तस्माद्ब्राह्मणः सुरां न पिबति पाप्मना नोत्सृजा" इतीति, पाप्मना [1]स्रष्टो न भवानी"ति मत्वा ब्राह्मणः सुरां न पिबतीत्यर्थः ॥ सर्वान्नानुमत्यधिकरणं समाप्तम् ॥

टी० सू० अबाधाच्च ॥ २९ ॥ पूर्वसूत्रे ब्रह्मविदनुष्ठानदर्शनात्कैमुतिकन्याय उपपादितः, अत्र ब्रह्मविद्विषयवचनेन स एव कैमुतिकन्याय उपपादितः, । सू० अपि स्मर्यते ॥ ३० ॥ न केवलं सर्वान्नानुमतेर्ब्रह्मविद आपद्विषयत्वात् प्राणविद आपद्विषयत्वं कल्प्यं सर्वेषामपि स्मृतौ कण्ठोक्तमेवेति भावः । सू० शब्दश्चातोऽकामकारे ॥ ३१ ॥ ब्राह्मण—शब्दस्यासंकुचितवृत्तित्वात् ब्रह्मविदामपि इदं वाक्यं साधारणं, किं पुनः प्राणविद इतिभावः परे चापरे च सर्वान्नानुज्ञानं किं शमादिवद्विद्याङ्गं विधीयते? उत स्तुत्यर्थं संकीर्त्यत? इति विचार्य उपदेशस्य प्रवृत्तिकरत्वोपपत्ते

१ संसृष्टोन भवानीति पा० ।

प्राणविद्यासन्निधानादङ्गविधिः भक्ष्याभक्ष्यशास्त्रं न हिंस्यादितिवद्विशेषशास्त्रबाध्यमिति पूर्वपक्षं कृत्वा विधायकाभावान्न सर्वान्नानुज्ञाविधिः किन्तु सर्वं प्राणस्यान्नमिति विज्ञानप्रशंसार्थोऽर्थवादः, प्राणात्यये हि सर्वान्नानुज्ञा दृश्यते न सर्वदेति व्याचक्षते, तदयुक्तं सूत्रेऽर्थवादशब्दाध्याहारेण प्रतिज्ञाया वर्णनीयत्वात्, भाष्योक्तयोजनायां हि प्राणात्यय–शब्देनैव हि प्रतिज्ञा पूर्णा । अन्ये तु किं सर्वान्नानुमतिः क्रियते? उतार्थवाद? इत्युपोद्घातविचारं कृत्वा ज्यैष्ठ्यश्रैष्ठ्यगुणकप्राणविद्याङ्गभूतस्य सर्वं प्राणस्यान्नमिति ज्ञानस्य फलत्वात्तदुक्तिरर्थवादमात्रमिति पूर्वपक्षं कृत्वा सर्वस्यान्नमिति वाक्यसामर्थ्याद्विधेः कल्प्यत्वात् अप्रतीतविज्ञानमिदं प्राणस्यान्नमिति वाक्यसामर्थ्याद्विधेः कल्प्यत्वात् अप्रतीतविज्ञानतद्विधिकल्पनायोगात् येन केन चिदन्नेन प्राणो रक्षितव्य इति विधिरिति निश्चित्य पश्चात्साक्षाद्विचारमाहुः किमियं सर्वान्नानुमतिः सर्वदा? उत प्राणात्यय? इति, अविशेषात् सर्वदेति पूर्वपक्षः, अप्रतिषिद्धान्नेनान्यदा रक्षणसिद्धेः प्राणात्यय इति सिद्धान्तः कृतः, तत्रोपोद्घातचिन्तायाम् अप्रतीतविज्ञानतद्विधिकल्पनगौरवं तदुक्तमयुक्तं स होवाच किं मेऽन्नं भविष्यतीत्युक्ते यत्किञ्चिदिदमाश्वभ्य आशकुनिभ्यस्तत्तेऽन्नमित्युक्त्वा न ह वा एवंविदि किञ्चनानन्नमित्येवंविच्छब्देन वेदनस्याभिहितत्वात् अत एवास्तु तस्य प्राणरक्षणस्य तद्विधेश्च कल्पनमप्ययुक्तम् ॥ सर्वान्नानुमत्यधिकरणं समप्तम् ॥

विहितत्वाधिकरणम् ।

## सू० विहितत्वाच्चाश्रमकर्मापि ॥ ३२ ॥

भा० यज्ञादिकर्माङ्गिका ब्रह्मविद्येत्युक्तं, तानि च यज्ञादीनि कर्माण्यमुमुक्षुणा केवलाश्रमिणाऽप्यनुष्ठेयानि? उत ने? ति चिन्तायां विद्याङ्गानां सतां केवलाश्र[1]मिशेषत्वे नित्यानित्यसंयोगविरोधः प्रसज्यते इति यज्ञादीनां केवला-

१ केवलाश्रमशेषत्वे इति पा० ।

श्रमधर्मत्वं न सम्भवतीति प्राप्त उच्यते "आश्रमकर्मापी"ति, आश्रमस्य कर्मापि भवति केवलाश्रमिणामप्यनुष्ठेयानीत्यर्थः, कुतः, यावज्जीवमग्निहोत्रं जुहोति इत्यादिना विहितत्वात्, जीवननिमित्ततया नित्यवद्विहितत्वादित्यर्थः । तथा विद्याङ्गतया च तमेतं वेदानुवचनेनेत्यादिना विहितत्वाद्विद्याशेषतयाऽप्यनुष्ठेयानीत्याह—

**सू० सहकारित्वेन च ॥ ३३ ॥**

विद्योत्पत्तिद्वारेण विद्यासहकारितयाऽप्यनुष्ठेयानि अग्निहोत्रादीनामिव जीवनाधिकारस्वर्गाधिकारवद्विनियोगपृथक्त्वेनोभयार्थत्वं न विरुध्यत इत्यर्थः । तदेव कर्मान्तरत्वमपि नास्तीत्याह—

टी० सू० विहितत्वाच्चाश्रमकर्मापि ॥ ३२ ॥ अवान्तरसङ्गतिमाह "यज्ञादी"ति, परमप्रकृतेन सङ्गतिरित्यर्थः । किं विद्याङ्गभूतान्याश्रमकर्माणि केवलाश्रमिणोऽप्यनुष्ठेयानि? ने? ति, किमेषां विद्याङ्गत्वे केवलाश्रमाङ्गत्वं सम्भवति नेति?, किं केवलाश्रमाङ्गत्वे नित्यानित्यसंयोगविरोधः प्रसज्यते नेति?, आश्रमाङ्गत्वे विद्याङ्गत्वे च कर्मान्तरत्वमस्ति नेति च? कर्मान्तरत्वे सत्यकस्य कर्मणो विनियोगपृथक्त्वाभावेन नित्यानित्यसंयोगविरोधप्रसङ्गेन केवलाश्रमाङ्गत्वासम्भवादमुमुक्षोरननुष्ठेयानि कर्मान्तरत्वं नास्ति चेद्विनियोगपृथक्त्वेन नित्यानित्यसंयोगविरोधाभावात् केवलाश्रमाङ्गत्वसंम्भवात् केवलाश्रमिणोऽप्यनुष्ठेयानीति, नित्यानित्यसंयोगविरोध इति यावज्जीवमनुष्ठानं मोक्षेच्छानुगुणमनुष्ठानं च विरुद्धमित्यर्थः । केवलाश्रमधर्म्मत्वं—मुमुक्षारहिताश्रमधर्मत्वम् । आश्रमीति पाठो दृष्टश्चेत् केवलशब्दोऽमुमुक्षुपरः अनुष्ठेयानीत्यर्थ इति, यज्ञादीनि कर्माणि इत्यध्याहारः । अनेन सङ्गतमुत्तरसूत्रार्थमाह "तथा चे"ति, सू० । सहकारि-

त्वेन च ॥ ३३ ॥ समुच्चयव्यावृत्त्यर्थं विद्योत्पत्तिद्वारेणेत्युक्तं, नित्यानित्यसंयोगविरोधमाशङ्क्याह "अग्निहोत्रादीनामेवे"ति, विनियोगपृथक्त्वेन विनियोगः—शेषत्वज्ञापकविधिः, विनियोगपृथक्त्वदर्शनेन नित्यानित्यसंयोगविरोधपरिहारः सूत्रद्वयफलं, न त्वेकस्य विनियोगद्वैविध्यस्यैकेनादर्शितत्वात् ॥ उत्तरसूत्रकृत्यमाह "तद्वदि"ति,

## सू० सर्वथाऽपि त एवोभयलिङ्गात् ॥ ३४ ॥

स्रू० सर्वथा विद्यार्थत्वे आश्रमार्थत्वेऽपि त एव यज्ञादय इति प्रतिपत्तव्यं न कर्मस्वरूपभेद इत्यर्थः कुतः उभयलिङ्गात् उभयत्र श्रुतौ यज्ञादिशब्दैः प्रत्यभिज्ञाप्यविनियोगात् कर्मस्वरूपभेदे प्रमाणाभावाच्च ॥

## सू० अनभिभवं च दर्शयति ॥ ३५ ॥

"धर्मेण पापमपनुदतीत्यादिभिश्च तानेव यज्ञादिधर्मान्निर्दिश्य तैर्विद्याया अनभिभवं पापकर्मभिरुत्पत्तिप्रतिबन्धाभावं दर्शयति अहरहरनुष्ठीयमानैर्हि यज्ञादिभिर्विशुद्धेऽन्तःकरणे प्रत्यहं प्रकृष्यमाणा विद्योत्पद्यते, अतस्त एवोभयत्र यज्ञादयः ॥ विहितत्वाधिकरणं समाप्तम् ॥

विधुराधिकरणम्। **सू० अन्तरा चापि तु तद्दृष्टेः ॥ ३६ ॥**

चतुर्णामाश्रमिणां ब्रह्मविद्यायामधिकारोऽस्ति विद्यासहकारिण आश्रमधर्मा इति चोक्तम् । ये पुनराश्रमानन्तरा वर्त्तन्ते विधुरादयः तेषां ब्रह्मविद्याऽधिकारोऽस्ति नेति विशये आश्रमधर्मैतिकर्त्तव्यताकत्त्वाद्विद्याया अना-

श्रमिणां चाश्रमधर्माभावान्नास्त्यधिकार इति प्राप्ते उच्यते "अन्तरा चापि त्वि"ति, तु-शब्दः पक्षव्यावृत्त्यर्थः, च-शब्दोऽवधारणार्थः अन्तरा वर्त्तमानानामनाश्रमिणामपि विद्यायामधिकारोऽस्त्येव कुतः तद्दृष्टेः, दृश्यते हि रैक्वभीष्मसंवर्त्तादीनामनाश्रमिणामपि ब्रह्मविद्यानिष्ठत्वं, न चाश्रमधर्मैरेव विद्याऽनुग्रह इति शक्यं वक्तुं "यज्ञेन दानेन तपसा नाशकेने"ति दानादीनामाश्रमेष्वनैकान्तानामप्यनुग्राहकत्वश्रवणात्, यथोर्द्ध्वरेतस्सु विद्यानिष्ठत्वदर्शनादग्निहोत्रादिव्यतिरिक्तैरेव विद्यानुग्रहः क्रियते तथाऽनाश्रमिष्वपि विद्यादर्शनादाश्रमानियतैर्जपोपवासदानदेवताऽऽराधनादिभिर्विद्याऽनुग्रहः शक्यते कर्त्तुम् ॥

## सू० अपि स्मर्य्यते ॥ ३७ ॥

अपि चानाश्रमिणामपि जपादिभिरेव विद्यानुग्रहः स्मर्यते "जप्येनापि च संसिद्ध्येद्ब्राह्मणो नात्र संशयः ॥ कुर्यादन्यन्न वा कुर्यान्मैत्रो ब्राह्मण उच्यते" ॥ इति संसिद्ध्येज्जपाद्यनुगृहीतया विद्यया सिद्धो भवतीत्यर्थः, ॥

## सू० विशेषानुग्रहश्च ॥ ३७ ॥

न केवलं न्यायस्मृतिभ्यामयमर्थः साधनीयः श्रूयते चानाश्रमनियतैर्धर्म्मविशेषैर्विद्यानुग्रहः, "तपसा ब्रह्मचर्येण श्रद्धया विद्ययाऽऽत्मानमन्विष्येदिति, ॥

## सू० अतस्त्वितरज्ज्यायोलिङ्गाच्च ॥ ३९ ॥

तु-शब्दोऽवधारणे, अतोऽनाश्रमित्वादितरदाश्रमित्वमेव ज्यायः, अनाश्रमित्वमापद्विषयं शक्तस्य चाश्रमित्वमेवोपादेयमित्यर्थः । भूयोधर्म्मकाल्पधर्म्मकयोरतुल्यकार्य्यत्वात्, लिङ्गाच्च स्मृतेरित्यर्थः, स्मर्य्यते च शक्तं प्रत्याश्रमस्योपादेयत्वम् "अनाश्रमी न तिष्ठेत्तु दिनमेकमपि द्विजः" इत्यादिना निवृत्तब्रह्मचर्य्यस्य मृतभार्य्यस्य चावैराग्ये सति दारालाभ आपत् ॥ विधुराधिकरणं समाप्तम् ॥

टी सू० सर्वथाऽपित एवोभयलिङ्गात् ॥ ३४ ॥ अग्निहोत्र-शब्दस्य तुल्यत्वेऽपि कुण्डपायिनामयनाग्निहोत्रे मासमग्निहोत्रं जुहोतीति विहिते स्वरूपभेदो दृश्यत इत्यत्राह "कर्मस्वरूपभेदे प्रमाणाभावाच्चे"ति, कर्मान्तरत्वव्युदासस्य तन्त्रेणानुष्ठानं फलम् । सू० अनभिभवं च दर्शयति ॥ ३५ ॥ आदि-शब्दो यज्ञादिवाक्यपरः अङ्गत्वं वदता यज्ञेन दानेनेत्यादिना यज्ञादिधर्मा निर्दिष्टाः, अङ्गत्वेन किञ्चित्कारं वदद्वाक्यमपि यज्ञादिपर्याय-शब्देन निर्दिशतीत्यर्थः । दर्शयति श्रुतिरिति शेषः किञ्चित्कारं विवृणोति "अहरह"रिति, सर्वापेक्षेति विद्याङ्गत्वमुक्तं सहकारित्वेन चेति फलविरोधिनिरसनेन समसमुच्चय उक्त इत्यन्ये । विद्याया एव प्रतिबन्धकनिवर्त्तनशास्त्रवशात् ब्रह्मप्राप्तेर्नित्यतया साध्यत्वानुपपत्तेः सहभावश्रवणस्याङ्गभावविषयतया अन्यथासिद्धत्वात्तथा विभागकल्पनमयुक्तं, सूत्रभेदस्तु शङ्काभेदनिबन्धनः, उभयलिङ्गादिति तमेतं वेदानुवचनेन, अनाश्रितः कर्मफलमित्यादि श्रुतिलिङ्गात् स्मृतिलिङ्गाच्च सिद्धवज्ज्ञानरूपादित्याहुः । ततोऽपि श्रुतावेव वाक्यद्वये प्रत्यभिज्ञापनपरत्वमुक्तम् । अनन्यत्वस्य साध्यत्वात् । विहितत्वाधिकरणं समाप्तम् ॥ सू० अन्तरा चापि तद्दृष्टेः ॥ ३६ ॥ अवान्तरसङ्गतिमाह "चतुर्था"मिति, किं विधुरादीनां ब्रह्मविद्याधिकारोऽस्ति न? ति किं तेषां साङ्गब्रह्मविद्योपसंहारसा-

मर्थ्यमस्ति ने ? ति, किमाश्रमाणां साधारणधर्माङ्गिका विद्या भवति नेति ?,
तपसा ब्रह्मचर्येणेत्यादिविनियोगोपबृंहितं रैक्वादीनां विद्यानिष्ठत्वदर्शनं
विद्यायाः साधारणकर्माङ्गकत्वमवगमयति ने ? ति, न चेत्साधारणधर्माङ्गक-
त्वासम्भवात्साङ्गविद्योपसंहारासामर्थ्येन विधुरादीनामनधिकारः, अवगां
मयति चेत्साधारणधर्माङ्गकत्वेन विद्यायास्तदुपसंहारसामर्थ्याद्विधुरादीन-
ब्रह्मविद्याधिकारः, विधुरोमृतदारः, आदि–शब्दोपात्तोऽकृतदारः । न चेति
आश्रमधर्मानुपपत्तौ वर्णधर्मैरनुग्रह उपपद्यत इत्यर्थः ॥ अनैकान्तिकानाम्
अनियतानाम् ॥ सू० अपि स्मर्यते ॥ ३७ ॥ ब्राह्मणः–ब्रह्मविद्यानिष्ठः, अत्र
जपादिना विद्यानुग्रहः कथं ज्ञायत इत्यत्राह जपाद्यनुगृहीतयेति । सू०
विशेषानुग्रहश्च ॥ ३८ ॥ विशेष–शब्दं समासं च व्याचष्टे "धर्मविशेषैर्विद्या-
नुग्रह"इति, आश्रमानियतधर्मैरेवानुग्रह उपपद्यते चेदाश्रमप्राप्तिश्रमैरण्या-
श्रमा उपेक्ष्येरन्, ततश्च यज्ञादिश्रुतिवैयर्थ्यं स्यादित्यत्राह–सू० अतस्त्वितरज्
ज्यायोलिङ्गाच्च ॥ ३९ ॥ भूयोधर्मकाल्पधर्मकयोरतुल्यकार्यत्वादिति, शक्तं
प्रत्यतुल्यकार्यत्वादित्यर्थः । श्रुतेरनुमापकत्वात् स्मृतिर्लिङ्ग–शब्देनोच्यते,
आपच्छब्दार्थमाह "निवृत्तब्रह्मचर्यस्ये"ति, पारिव्राज्यव्यावृत्त्यर्थमाह "अ-
वैराग्ये सती"ति, ब्रह्मनिष्ठेष्वनुगायिवैराग्यं नाम लोकान्तरजन्मान्तरभो-
गनैरपेक्ष्यम्, अतः इदमवैराग्यमविरुद्धम् । यद्वा गार्हस्थ्यधर्मश्रद्धा अवैराग्यं,
परे चापरे च अपि स्मर्यते इत्येत् संवर्त्तादीनामाश्रमवहिष्ठब्रह्मचर्यास्मरण-
परं व्याचक्षते विशेषानुग्रहश्चेत्येतज्जप्येनैव तु संसिध्येदित्यनेन साधारण-
धर्मविशेषैर्विद्यानुग्रहसम्भवपरमनेकजन्मसंसिद्ध इति पूर्वकृतसुकृतैर्विद्यानु-
ग्रहपरं च व्याचक्षते, तदयुक्तं विद्यायाः साधारणधर्मानुग्राह्यत्वे नग्नचरणस्य
विरुद्धत्वात्, न हि नग्नचर्या नाम सर्वाश्रमसाधारणो धर्मः क्वचिच्चोदितः
अतः सूत्रद्वयस्य साधारणधर्मानुग्रहपरश्रुतिस्मृतिविषयत्वं युक्तम् उन्मत्तच-
र्यास्मरणेनाश्रमानपेक्षत्वं सिध्यतीति चेत् न, उन्मत्तचर्याया । जनेनावमतो
योगी योगसिद्धिं च विन्दतीति जनावमानजनितयोगसिद्धये स्वप्रकर्षाच्छा-
दनार्थत्वाद् दृष्टे सम्भवत्यदृष्टकल्पनस्यान्याय्यत्वाद्विध्यन्तरादर्शनाच्छा-
दनार्थतयाऽप्युपपन्नेनोन्मत्ताचरणेन विद्याया आश्रमनैरपेक्ष्यकल्पनायोगात्

तत्कल्पनस्यात्स्वितरज्ज्याय इत्यनन्तरसूत्रविरोधादनाश्रमित्वनिषेधक-वचनान्तरविरोधाच्च लिङ्गाच्चेत्येतस्य अग्ने गृहपते सुगृहपतिः तेनेति ब्रह्म-वित्पुण्यकृत्तैजसश्चेति गार्हस्थ्यस्य प्राशस्त्यगमकश्रौतलिङ्गादनाश्रमनि-न्दापरस्मृतिलिङ्गाच्चेत्यर्थमाहुः । तत्र ज्यायस्त्वप्रतीतेरस्फुटत्वाच्छ्रौतलि-ङ्गानादरः ॥ विधुराधिकरणं समाप्तम् ॥

तद्भूताधिकरणम् । **सू० तद्भूतस्य तु नातद्भावो जैमि-नेरपि नियमात्तद्रूपाभावेभ्यः ॥ ४० ॥**

भा० नैष्ठिकवैखानसपरिव्राजकाश्रमेभ्यः प्रच्युतानामपि ब्रह्म-विद्यायामधिकारोऽस्ति नेति चिन्तायां विधुरादिवदनाश्र-मैकान्तैर्दानाभिर्विद्यानुग्रहसम्भावदस्त्यधिकार इति प्राप्ते उच्यते "तद्भूतस्य तु नातद्भाव" इति, तु-शब्दः पक्ष-व्यावृत्त्यर्थः, तद्भूतस्य नैष्ठिकाद्याश्रमनिष्ठस्य नातद्भावः—अनथाभावोऽनाश्रमित्वेनावस्थानं न सम्भवति, कुतस्तद्रूपा-भावेभ्यो नियमात् तद्रूपाणि तेषां नैष्ठिकादीनां रूपाणि वेषाः धर्मा इत्यर्थः, तेषामभावास्तद्रूपाभावाः तेभ्यः शास्त्रै-र्नियमात् नैष्ठिकाद्याश्रमं प्रविष्टान्स्वाश्रमधर्मनिवृत्ति-भ्योनियच्छन्ति हि शास्त्राणि, ब्रह्मचार्याचार्यकुल-वासी तृतीयोऽत्यन्तमात्मानमाचार्यकुलेऽवसादयन्निति, अरण्यमियात्ततो न पुनरेयादिति च संन्यस्याग्निं न पुन-रावर्त्तयेदिति च, अतोविधुरादिवन्नैष्ठिकादीनामनाश्रमि-त्वेनावस्थानासम्भवान्न तानधिकरोति ब्रह्मविद्या, जैमि-नेरपीत्यविगानं दर्शयन्नुक्तं स्वाभिमतं द्रढयति । अथ स्यान्नैष्ठकादीनां ब्रह्मचर्य्यात् प्रच्युतानां प्रायश्चित्ताद-

धिकारः सम्भवति अस्ति च प्रायश्चित्तमधिकारलक्षणे निरूपितम् । अवकीर्णिपशुश्च तद्वदिति अतः प्रच्युतब्रह्मचर्य्यस्य प्रायश्चित्तसम्भवात् कृतप्रायश्चित्तो ब्रह्मविद्यायामधिकरिष्यतीति तत्राह—

**सू० न चाधिकारिकमपि पतनानुमानात्तदयोगात् ॥ ४१ ॥**

अधिकारलक्षणोक्तमपि प्रायश्चित्तं नैष्ठिकादीनां ततो भ्रष्टानां न सम्भवति कुतः पतनानुमानात् तदयोगात् नैष्ठिकादीनां प्रच्युतानां पतनस्मृतेस्तस्य प्रायश्चित्तस्यासम्भवात् "आरूढो नैष्ठिकं धर्मं यस्तु प्रच्यवते द्विजः । प्रायश्चित्तं न पश्यामि येन शुध्येत्स आत्महे"ति, अतोऽधिकारलक्षणोक्तं प्रायश्चित्तमितरब्रह्मचारिविषयम् ॥

टी० सू० तद्भूतस्य तु नातद्भावो जैमिनेरपि नियमात्तद्रूपाभावेभ्यः ॥ ४० ॥ विधुरादेर्विद्याधिकार उक्तः, अनाश्रमित्वसाम्यादाश्रमभ्रष्टानामपि विद्याधिकार इति शङ्कया सङ्गतिः, वैखानसः—वानप्रस्थः किं नैष्ठिकाद्याश्रमभ्रष्टानां ब्रह्मविद्याधिकारोऽस्ति? ने? ति किमेषां साङ्गविद्योपसंहारसामर्थ्यमस्ति ने? ति, किमेषां प्रायश्चित्तत्वाच्छुचित्वं सम्भवति ने? ति, किं "योब्रह्मचारी स्त्रियमुपेया" दिति विहितं प्रायश्चित्तं सर्वब्रह्मचारिविषयम्? उत नैष्ठिकादिव्यतिरिक्तविषयं? प्रायश्चित्तं न पश्यामीति प्रायश्चित्ताभावस्मरणं किं प्रायश्चित्तस्य व्यतिरिक्तब्रह्मचारिविषयतामवगमयति ने? ति, न चेत् प्रायश्चित्तस्य सर्वविषयतया शुद्धिसम्भवेन सामर्थ्याद्धिकारः । अवगमयति चेत् प्रायश्चित्तस्य उपकुर्वाणविषयतया शुद्धेरसम्भवेनासामर्थ्यात् ब्रह्मविद्याऽनधिकारः, ब्रह्मचारीत्यादिश्रुतिर्नैष्ठिकविषया । अनन्तरसूत्रमवतारयति "अथ स्या" दिति अधिकारलक्षणे

षष्ठेऽध्याये अवकीर्णिपशुर्गर्दभः "ब्रह्मचार्यवकीर्णी नैर्ऋतं गर्दभमालभेते"त्युक्तं, ब्रह्मचर्यभ्रष्टोऽवकीर्णी, ब्रह्मचर्यं-स्त्रीनिवृत्तिः सा गृहस्थव्यतिरिक्तानां त्रयाणामपि तुल्या, तस्मात्तेषामवकीर्णिप्रायश्चित्तं कर्तव्यमिति पूर्वपक्षिणोऽभिप्रायः । सू० न चाधिकारिकमपि पतनानुमानात्तदयोगात् ॥ ४१ ॥ तर्हि आधिकारिकप्रायश्चित्तं किंविषयमित्यत्राह "अत" इति, य उपकुर्वाणो ब्रह्मचारी भ्रष्टः तद्विषयमवकीर्णिप्रायश्चित्तमित्यर्थः ।

## सू० उपपूर्वमपीत्येके भावमशनवत्तदुक्तम् ॥ ४२ ॥

नू० नैष्ठिकादीनां ब्रह्मचर्य्यप्रच्यवनमुपपूर्वमुपपातकं महापातकेष्वपरिगणितत्वादिति तच्च प्रायश्चित्तस्य भावं विद्यमानतामप्येके आचार्या मन्यन्ते, अशनवत् यथा मध्वशनादिनिषेधस्तत्प्रायश्चित्तं चोपकुर्वाणस्य नैष्ठिकादीनां च समानं, तदुक्तं स्मृतिकारैः "उत्तरेषां चैतदविरोधी"ति, गुरुकुलवासिनो यदुक्तं तत्स्वाश्रमाविरोध्युत्तरेषामप्याश्रमिणां सम्भवतीत्यर्थः, तद्वदिहापीति ब्रह्मचर्य्यप्रच्यवने प्रायश्चित्तसम्भवाद्ब्रह्मविद्यायोग्यताऽप्यस्ति ॥

## सू० बहिस्तूभयथाऽपि स्मृतेराचाराच्च ॥ ४३ ॥

तु-शब्दोमतान्तरव्यावृत्त्यर्थः, उपपातकत्वे महापातकत्वेऽप्येते बहिर्भूता एव ब्रह्मविद्याऽधिकारिभ्यः, ब्रह्मविद्यायामनधिकृता इत्यर्थः, कुतः स्मृतेः पूर्वोक्तात् पतनस्मरणात्, यद्यपि कलुषनिर्हरणाय[1] कैश्चिद्वचनैः प्रायश्चित्ता-

१ कल्मषेति पा० ।

धिकारो विद्यते तथाऽपि कर्माधिकारानुगुणशुद्धिहेतु-प्रायश्चित्तं न सम्भवति "प्रायश्चित्तं न पश्यामि येन शुध्येत्स आत्महे"ति स्मृतेरित्यर्थः ॥

टी० सू० उपपूर्वमपीत्येके भावमशनवत्तदुक्तम् ॥ ४२ ॥ इदं चोद्य-सूत्रं ब्रह्मचर्यप्रच्यवनस्य महापातकेष्वपरिगणितत्वादुपकुर्वाणब्रह्मचारिणः स्त्रीनियमातिक्रमस्योपपातकान्तर्भूतस्य प्रायश्चित्तकथनात्तस्य च नैष्ठिकादिष्वतिदेशाच्च प्रायश्चित्तं प्राप्तमित्यर्थः, उत्तरेषां चैतदविरोधीत्यत्रैत-च्छब्दः पूर्वोक्तधर्मान् प्रायश्चित्तं च परामृशति स्वाश्रमाविरोधिशब्दः स्त्रीसंसर्गादिनिमित्तप्रायश्चित्तादेर्गृहस्थादिष्वनापातार्थः । सिद्धान्तसूत्र-माह । सू० बहिस्तूभयथाऽपि स्मृतेराचाराच्च ॥ ४३ ॥ उभयथेति पदं व्याचष्टे "उपे"ति, अतिदेशवचनेन प्रायश्चित्तं प्राप्तं, पतनस्मृतिश्चास्ति तयोः कथं विरोधः परिह्रियते इत्यत्राह "यद्यपी"ति, कर्मशक्तिस्त्रिधा प्रत्यवायकरी, वैदिककर्माधिकारप्रतिबन्धकरी, सजातीयकर्मरुचिकरी चेति, तत्र कानिचित्प्रायश्चित्तानि शक्तित्रयविनाशकानि, कानिचिदन्यतम-शक्तिविनाशकानि, अत्रातिदेशपतनस्मृतिविरोधेऽतिदेशस्मृतिः प्रत्यवाय-जननशक्तिविनाशकं प्रायश्चित्तमाह पतनस्मृतिस्तु वैदिककर्मानधिकार-शक्तिविनाशकप्रायश्चित्ताभावमाह, येन शुध्येदित्युक्तत्वात्तस्मादविरोधः । अतोऽतिदेशसिद्धप्रायश्चित्तेन नरकानुभवलाघवे सत्यपि पतनस्मृतिवच-नान्न ब्रह्मविद्याधिकार इत्यर्थः ॥

सू० आचाराच्च—विशिष्टा हि नैष्ठिकादीन्भ्रष्टान् कृतप्राय-श्चित्तानपि वर्ज्जयन्ति तेभ्यो ब्रह्मविद्यादिकं नोपदिशन्ति, अतस्तेषां नास्ति ब्रह्मविद्यायामधिकारः ॥ तद्भूताधिकरणं समाप्तम् ॥

स्वाम्यधिकरणम् ।

**सू० स्वामिनः फलश्रुतेरित्यात्रेयः ॥ ४४ ॥**

कर्माङ्गाश्रयाण्युद्गीथाद्युपासनानि किं यजमानकर्तृकाणि ? उतर्त्विक्कर्तृकाणी ? ति चिन्तायां यजमानकर्तृकाणीत्याचेयो मन्यते, कुतः फलश्रुतेः, वेदान्तविहितेषु दहराद्युपासनेषु फलोपासनयोरेकाश्रयत्वदर्शनादिह च क्रतुफलाप्रतिबन्धरूपस्योद्गीथोपासनफलस्य यजमानाश्रयत्वश्रवणादित्यर्थः ॥

टी० आचाराच्चेति सूत्रखण्डोपादानं, वर्जनफलमाह "नोपदिशन्ती"ति, अनाश्रमी न तिष्ठेदित्यनाश्रमित्वं निषिद्धम्, आश्रमभ्रंशोऽपि निषिद्धः, एवं निषेधे समाने कथमेकत्र विद्याधिकारोऽन्यत्रानधिकारः? उच्यते अनाश्रमिणामपि विद्याधिकारः श्लाघ्यत्वं च श्रुतम्, आश्रमप्रच्युतानां तु न तथेति विशेष इति । परे तु तद्भूतस्येत्येकं सूत्रं पृथगधिकरणं वदन्ति तत्र ऊर्द्ध्वरेतसामाश्रमप्रत्यवरोहः प्रामाणिको न वेति संशेरते ब्रह्मविद्याधिकारसिद्ध्यर्थं पूर्वाश्रमकर्मानुष्ठानचिकीर्षया रागादिना वा सम्भवतीत्युक्त्वा नियमश्रुत्या ते तदप्रामाणिकत्वं सिद्धान्तयन्ति, न चाधिकारिकमपि इत्यधिकरणान्तरं नैष्ठिकादीनामाश्रमभ्रष्टानां प्रायश्चित्तसम्भवासम्भवविषयं वदन्तोऽसम्भव इति सिद्धान्तयन्ति यदा आश्रमभ्रष्टानां प्रत्यवायवचनानि दृश्यन्ते प्रायश्चित्तासम्भवोऽपि संशयास्पदं भवति तदा कथं भ्रंशस्य सद्भावे प्रमाणविरुद्धत्वे च संदेहः, अतः, सन्देहाभावाद्विचारोऽनुपपन्नः, अतो नातद्भाव इति सूत्रमपि मूलविचारे हेतुगर्भमेकाधिकरणमिच्छतामपरेषामपि प्रच्युतिरस्ति नेति विचार उक्तन्यायादनुपपन्नः । अन्येषामपि तद्भूतसूत्रस्य पृथगधिकरणत्वं संशयाभावादयुक्तम् । आश्रमादाश्रमं गच्छेदित्यविशेषवचनात् पतनवचनस्यानाश्रमित्वरूपेण प्रच्यवनविषयत्वसम्भवाच्च विचार इति चेत् न संन्यस्याग्नीन्न पुनरावर्त्तयेदित्याश्रमप्रत्यवरोहनिषेधश्रुतेः स्फुटार्थतया सम्भावितार्थान्तरस्मृतिवचनेन सन्देहानुदयात्, अविदितनिषेधवाक्यस्य सन्देहोदय इति चेत् अविदि-

तत्स्मृति वचनस्य सन्देहाभावादनारम्भः स्यात्, विदितस्मृतिवचनस्याऽवि-
दितनिषेधवाक्यस्य सन्देह इति चेत् तर्हि तत्तदेकदेशाज्ञाननिमित्तस-
न्देहानन्त्यादनन्ताधिकरणकल्पनप्रसङ्गः, न चाधिकारिकमिति ऊर्ध्वरेत-
सामाश्रमभ्रष्टानां प्रायश्चित्ताभावस्मरणाद्विद्याऽनधिकार इति पूर्वपक्ष-
सूत्रं कृत्वा वार्धुषिकत्वं व्रतात् च्युतिरिति व्रतच्युतेरुपपातकत्वात्, मध्य-
शनोपपातकप्रायश्चित्तस्यात्रापि प्राप्तिस्मरणात् श्रौतस्याप्यवकीर्णिप्राय-
श्चित्तस्य ब्रह्मचारित्वेन सामान्येन नैष्ठिकेऽपि प्राप्तत्वाद्वानप्रस्थोऽदी
क्षाभेदे कृच्छ्रं द्वादशरात्रं वर्द्धयेदित्यादिवचनात् प्रायश्चित्ताभावस्मृतेः
प्रायश्चित्तगौरवाभिप्रायत्वसम्भवाच्च प्रायश्चित्ताभावस्मरणस्य मूलादर्श-
नात्तत्सद्भावस्मरणस्य ब्रह्मचारित्वादिरूपसामान्यन्यायमूलत्वेन शास्त्रसं-
स्पर्शसम्भवा"च्छास्त्रस्था वा तन्निमित्तत्वा"दिति न्यायेन शास्त्रसंस्पर्शवतः
प्राबल्यात् प्रायश्चित्तेन ब्रह्मविद्याधिकार इत्युपपूर्वमिति सूत्रेण सिद्धा-
न्तयन्त्यन्ये उपपूर्वमपि त्वेके बहिस्तूभयथाऽपीति सूत्रस्वारस्यविरोधात्त-
दयुक्तम्, एक इति पदेन पूर्वपक्षत्वं तु-शब्देन तद्व्यावृत्तिरुभयथा-शब्देन
पतनीयत्वे अपतनीयत्वे च बहिष्कार्यत्वं हि प्रतीयते, प्रायश्चित्ताभाव-
स्मरणस्य न शास्त्रसंस्पर्श इत्यप्ययुक्तं बाधकाभावे श्रुतिमूलत्वसिद्धेः शास्त्र-
संस्पृष्टं प्रायश्चित्तस्मरणं बाधकमिति चेत् न येन शुद्ध्येदिति प्रायश्चि-
त्ताभाववचनस्य शुद्धिहेत्वभावविषयत्वात्, प्रायश्चित्तसद्भाववचनस्य तु
कल्मषनिर्हरणविषयत्वेनाप्युपपत्तेः, अधिकारापादकप्रायश्चित्तसद्भावान-
वगमकतया च विरोधाभावात् बाधकत्वानुपपत्तेः, अनन्यथासिद्धं हि
बाधकं बहिस्तूभयथाऽपीति सूत्रमकृतप्रायश्चित्तानामाश्रमभ्रष्टानामन-
धिकारसमर्थनपरमधिकरणान्तरं वर्णयन्ति तदप्ययुक्तं संशयाभावात् प्राय-
श्चित्ततोऽपि शुद्धौ संदिग्धायामकृतप्रायश्चित्ततया निर्णीताशुद्धीनां कथं
ब्रह्मविद्याधिकारसम्भावना । ननु इन्धनार्थमशुष्काणां द्रुमाणामवशातन-
मित्यादेरुपपातकत्वात्तादृशं कुर्वतामितरैः संव्यवहारादिशास्त्रीयानुष्ठा-
नादिदर्शनादाश्रमभ्रंशस्याप्युपपातकत्वाविशेषात् संशय इति चेत् तर्ह्य-
नधिकार इति सिद्धान्तोऽनुपपन्नः अशुष्कद्रुमशातनादिकारिषु कर्मान-

धिकारासंव्यवहाररूपहेत्वभावस्य भवद्भिरेवोक्तत्वात् उपपातकेष्वपि गुरुतरपापकारिषु हेतुसद्भाव इति चेत्तर्हि तेषु पूर्वोक्तन्यायेन संशयाभावादेवाना[1]दरणीयता ॥ तद्भूताधिकरणं समाप्तम् ॥ सू० स्वामिनः फलश्रुतेरित्यात्रेयः ॥ ४४ ॥ इदमधिकरणं प्रासङ्गिकम् उपासनानुष्ठात्रनुष्ठातृविभागप्रसङ्गेनोद्गीथोपासनादेरनुष्ठात्रनुष्ठातृविभागचिन्ता क्रियत इति सङ्गतिः, क्रत्वङ्गाश्रयाण्युपासनानि किं यजमानकर्तृकाणि? उत ऋत्विक्कर्तृकाणि? किं दहराद्युपासनानामिव फलिकर्तृकत्वं न्याय्य? मुत गोदोहनादेरिव ऋत्विक्कर्तृकत्वं · किं गोदोहनादिषु ऋत्विक्कर्तृकत्वं यजमानेनाशक्योपादनतया? उत साङ्गप्रधानानुष्ठनाय ऋत्विक्परिक्रयश्रवणात्,? अशक्यतया चेत् तदभावात् फलिकर्तृकत्वोपपत्तेः, यजमानकर्तृकत्वं, परिक्रयश्रवणाच्चेत् गोदोहनादाविव ऋत्विक्कर्तृकत्वस्य न्याय्यत्वादृत्विक्कर्तृत्वम्, उद्गीथाद्युपासनानीत्युक्ते उपासनस्य कर्माङ्गत्वं माभूदिति कर्माङ्गाश्रयाणीत्युक्तम् ॥

सू० न च गोदोहनादिवदङ्गाश्रयत्वेन यजमानकर्तृकत्वासम्भवः, गोदोहनादिषु ह्यध्वर्युकर्तृकप्रणयनाश्रयगोदोहनोपादानमन्यनाशक्यम्, इह तूद्गातृकर्तृकेऽप्युद्गीथे तस्योद्गीथादेरसतमत्वानुसन्धानं यजमानेनैव कर्तुं शक्यत इति प्राप्तेऽभिधीयते ।

## सू० आर्त्विज्यमित्यौडुलोमिस्तस्मै हि परिक्रियते ॥ ४५ ॥

आर्त्विज्यमृत्विजः कर्मोद्गीथाद्युपासनमित्यौडुलोमिराचार्यो मन्यते, कुतः तस्मै हि प्रयोजनायर्त्विक् परिक्रियते फलसाधनभूतस्य साङ्गस्य क्रतोरुपादानायेत्यर्थः, कर्मविधिष्वृत्विजो वृणीते ऋत्विग्भ्यो दक्षिणां ददाती”ति

१ अनारम्भणीयतेति पा० ।

ऋत्विक्कर्तृकत्वशास्त्रेण फलसाधनभूतं साङ्गं कर्म ऋत्विग्भिरनुष्ठेयमित्यवगम्यते, तदन्तर्गतानि कायिकानि मानसानि च कर्माणि ऋत्विक्कर्तृकाण्येव, न च शक्त्यशक्ती तस्य निबन्धनं यद्यप्युद्गीथाद्युपासनं पुरुषार्थं तथाऽपि क्रत्वधिकृताधिकारत्वात् अतोऽस्य साङ्गस्य ऋत्विक्कर्तृकत्वात् यदेव विद्यया करोति तदेव वीर्य्यवत्तरमित्यृत्विक्कर्तृकक्रियोपयोगित्वेन विद्यायास्तदेककर्तृकत्वश्रवणादृत्विक्कर्तृकाण्येतानि दहरादिषूपासनेषु ऋत्विक्कर्तृकत्वाश्रवणा"च्छास्त्रफलं प्रयोक्तरि"ति न्यायाच्च फलिकर्तृकत्वमेव ॥ स्वाम्यधिकरणं समाप्तम् ॥

सहकार्यन्तरविध्यधिकरणम् ।

**सू० सहकार्य्यन्तरविधिः पक्षेण तृतीयं तद्वतो विध्यादिवत् ॥ ४६ ॥**

"तस्माद्ब्राह्मणः पाण्डित्यं निर्विद्य बाल्येन तिष्ठासेद् बाल्यं च पाण्डित्यं च निर्विद्याथ मुनि"रित्यत्र बाल्यपाण्डित्यवन्मौनमपि विधीयते? उतानूद्यत? इति विषये, मौनपाण्डित्यशब्दयोर्ज्ञानार्थत्वात्पाण्डित्यं निर्विद्येति विहितमेव ज्ञानमथ मुनिरित्यनूद्यते । विधि-शब्दो न ह्यत्र श्रूयते इत्येवं प्राप्ते ब्रूमः—सहकार्यन्तरविधिरिति, ।

टी० न चेत्यादि प्रणयनस्याध्वर्युकर्तृकत्वात् तदाश्रयस्य गोदोहनस्योपादानं यजमानेन फलाश्रयभूतेनापि कर्त्तुमशक्यम्, अत्र तु शक्यत्वात् फलाश्रय एव कर्तेत्यर्थः । सिद्धान्तसूत्रमाह सू० आर्त्विज्यमित्यौडुलोमिस्तस्मै हि परिक्रियते ॥ ४५ ॥ तस्मै हि प्रयोजनायेति चतुर्थीव्याख्यानं, फलसाधनेत्यादिना तच्छब्दव्याख्यानं, परिक्रियत इत्येतद्विवृणोति "कर्म-

विधिष्वि"ति, ततः किमित्यत्राह "तदन्तर्गतानी"ति, न च शक्त्यशक्ती तस्य निबन्धनमिति, न ह्यृत्विजाऽन्येन क्रियमाणमन्येन कर्तुमशक्यं, तस्माद्वचननिबन्धनं गोदोहने एककर्तृकत्वमित्यर्थः । अङ्गत्वे सति हि ऋत्विक्कर्तृकत्वं नेदमङ्गमित्याह "यद्यपी"ति, परिहरति "तथाऽपी"ति, ऋत्विक्कर्तृककर्मोपयोगित्वेन प्रोक्षणादिवदिदमपि ऋत्विक्कर्तृकम् आन्यप्रापन्यायादित्यभिप्रेत्यभिप्रेत्याह "क्रत्वधिकृते"ति यदेव विद्ययेति ऋत्विक्कर्तृककर्मणो वीर्यवत्तरत्वसाधनभूताया विद्यायाः कर्मपेक्षाया मन्तरङ्गबहिरङ्गन्यायेनासन्नर्त्विक्कर्तृकत्वं युक्तमिति न्याय्यमिति न्यायोपेता विद्यया करोतीति वाक्यस्वारस्याच्चोद्गीथाद्युपासनानि ऋत्विक्कर्तृकाणीत्यर्थः । एवं विद्ध वै ब्रह्मा यज्ञं यजमानं सर्वांश्च ऋत्विजोऽभिरक्षति तस्मादुह वैवं विदुद्गाता ब्रूयात् कं ते काममागायानीत्यादिवाक्यैऋत्विक्कर्तृकवेदनफलस्य यजमानगामित्वप्रतिपादनं च हेतुतयाऽनुसन्धेयं तस्य न्यायसिद्धार्थानुवादरूपत्वात्तन्मूलयुक्तिमात्रमेवोक्तं भाष्ये, दहरादिषु फलिकर्तृकत्वे कोविशेष इत्यत्राह "दहरादि"ष्विति, ऋत्विक्कर्तृकत्वाश्रवणं वैषम्यमित्यर्थः । तच्छ्रवणमन्यत्र फलिकर्तृकत्वस्यापवादकम् ॥ स्वाम्यधिकरणं समाप्तम् ॥ सू० सहकार्यन्तरविधिः पक्षेण तृतीयं तद्वतो विध्यादिवत् ॥ ४६ ॥ पूर्वं यज्ञादिः शमादिश्च विद्यासहकारी निरूपितः, इदानीं सहकार्यन्तरं निरूप्यत इति सङ्गतिः, अधिकरणान्तराणि तु सङ्गतिविशेषप्राप्तानि मननस्य प्रवृत्तिरूपत्वेऽपि ध्यानालम्बनशुभाश्रयगोचरत्वेनातद्गोचरेभ्योयज्ञादिभ्यः शमादिभ्यश्च विलक्षणत्वादतद्गोचरत्वसाधर्म्येण यज्ञादीन् शमादींश्च निरूप्य पश्चान्मननं निरूप्यते शुभाश्रयगोचरत्ववैलक्षण्याद् यज्ञादेः शमादेश्च मध्ये निरूपणाभावः विद्यासहकारित्वसाम्यात् तदुभयतदनुबन्धिचिन्तानन्तरं निरूपणं प्राप्तमित्युक्तं भवति, किमस्मिन् वाक्ये मौनं विधीयते? उतानूद्यत इति? किं पाण्डित्यमेव मौनम्? उतार्थान्तरं मननरूपमिति, किं मननं विधातुं योग्यम्? उत नेति? किं मननस्य यज्ञादिश्रुतिविरोधोऽस्ति? उत नेति? किं मननं कर्मानुष्ठानप्रतिक्षेपकम्? उत नेति? स्वप्रकरणे प्रकरणान्तरे च कतिप-

याश्रमधर्मानुक्तिर्मननस्य कर्मानुष्ठानप्रतिक्षेपकत्वमुपोद्बलयति? उत ने? ति, किं कतिपयोक्तिरनुक्तानादरमूलैव स्यात्? उतानुक्तप्रदर्शनार्था च स्यादिति, यदा कतिपयोक्तिरनुक्तानादरमूलैव स्यात् तदानीं तत्तत्प्रकरणभेदेन सर्वाश्रमधर्माणामनुक्तत्वाविशेषादनादरगर्भा तदनुक्तिर्मननस्याश्रमधर्मप्रतिक्षेपकत्वमुपोद्बलयतीति तत्प्रतिपेक्षकत्वे मननस्य यज्ञादिश्रुतिविरुद्धतया विधातुमयोग्यत्वान्मौन-शब्दो मननपरत्वायोगेन प्राप्तपाण्डित्यानुवादीति मौनमनूद्यत इति फलं स्यात्, यदा कतिपयोक्तिरनुक्तप्रदर्शनार्थाऽपि भवेत् तदानीं तत्तत्प्रकरणभेदेनाश्रमधर्माणामनुक्तत्वाविशेषेऽप्यनुक्तेरनादरगर्भत्वाभावात् तदुक्तेर्मननस्याश्रमधर्मप्रतिक्षेपकत्वं नोपोद्बलयतीति मननस्य तदप्रतिक्षेपकतया यज्ञादिश्रुतिविरोधाभावेन विधातुं योग्यत्वान्मौन-शब्दो न वाक्यान्तरप्राप्तपाण्डित्यानुवादीति मौनस्य विधेयत्वं फलं स्यात् ॥

सू० तद्वतो-विद्यावतः विध्यादिवद्विधीयत इति विधिर्यज्ञादिः सर्वाश्रमधर्मः शमदमादयश्च विधि-शब्देनोच्यन्ते, आदि-शब्देन श्रवणमनने गृह्येते, सहकार्यन्तरविधिरित्यत्रापि विधीयत इति विधिः सहकार्यन्तरं विधिश्चेतिसहकार्यन्तरविधिः, एतदुक्तंयथा भवति तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेनेत्यादिना शान्तो दान्त इत्यादिना च सहकारी यज्ञादिः शमदमादिश्च विधीयते, यथा च श्रोतव्यो मन्तव्य इति श्रवणमनने चार्थप्राप्ते विद्यासहकारित्वेन गृह्येते, तथा तस्माद्ब्राह्मणः पाण्डित्यं निर्विद्येत्यादिना पाण्डित्यं बाल्यं मौनमिति त्रितयं विद्यायाः सहकार्यन्तरं विधीयत इति, मौनं च पाण्डित्यादर्थान्तरमित्याह-

टी० तद्वतो-विद्यावतः तृतीयं मौनं सहकार्यन्तररूपोविधिः सहकारित्वेन विधेयं यज्ञदानशमदमादिवत् पक्षेण प्रकृष्टमननशीले व्यासादौ

प्रयोगदर्शनादिति सूत्रार्थः । मौनपाण्डित्यशब्दयोर्ज्ञानार्थत्वादिति मौन-शब्दस्य मननार्थत्वान्मननस्य श्रवणप्रतिष्ठार्थज्ञानविशेषरूपत्वात् पाण्डि-त-शब्दस्य तद्विषयतया प्रसिद्धेश्च मौनपाण्डित्यशब्दयोर्ज्ञानार्थत्वं तद्वत इति व्याख्येयं पदं, विधि-शब्दं व्याचष्टे "विधीयत"इति, पदार्था उक्ताः । अथ सूत्रस्य वाक्यार्थमाह "एतदि"ति, सू० कृत्स्नभावात्तु गृहिणोपसंहारः ॥ ४७ ॥ मौनवदितरेषामप्युपदेशात् ॥ ४८ ॥ एवंविधमौनोपदेशात् सर्वैषणाविनिर्मुक्तस्य भिक्षाचरणपूर्वकमौनोपदेशवदित्यर्थः । परे तु विद्या-सहकारिणोमौनस्य बाल्यपाण्डित्यवद्विधिः गार्हस्थ्यम् आचार्यकुलं मौनं वानप्रस्थमिति प्रयोगात्, मुनि-शब्दस्य चतुर्थाश्रमपरत्वव्यवच्छेदायाह "तृतीय"मिति, तृतीयमिदं मौनं ज्ञानातिशयरूपमित्यर्थः, विद्यावत्त्वे प्राप्तेऽप्येवातिशयः किं विधिनेत्यत्राह-

सू० पक्षेणेति मुनि-शब्दस्य पक्षेण प्रकृष्टमननशीले व्यासादौ प्रयोगदर्शनान्मौनं पाण्डित्यबाल्ययोर्द्वयोस्तृतीयं यद्यप्यथ मुनिरित्यत्र विधिप्रत्ययो न श्रूयते तथाऽपि मौन-स्याप्राप्तत्वात विधेयत्वमङ्गीकरणीयम्, अथ मुनिः स्या-दिति इदं च मौनं श्रवणप्रतिष्ठार्थान्मननादर्थान्तरभूतमु-पासनालम्बनस्य पुनःपुनः संशीलनं तद्भावनारूपं, तदेवं वाक्यार्थः ब्राह्मणो विद्यावान् पाण्डित्यं निर्विद्योपास्यं ब्रह्मतत्त्वं परिशुद्धं परिपूर्णं च विदित्वा श्रवणमननाभ्यां प्राप्तं वेदनं प्रतिलभ्येत्यर्थः, तच्च भगवद्भक्तिकृतसत्त्ववि-शुद्धिकृतं यथोक्तं नाहं वेदैरित्यारभ्य भक्त्या त्वनन्यया शक्यो ज्ञातुमिति, श्रुतिश्च "यस्य देवे परा भक्तिः, नाय-मात्मा प्रवचनेन लभ्य इत्यादिका, बाल्येन तिष्ठासेत् बाल्यस्वरूपं चानन्तरमेव वक्ष्यते, बाल्यं च पाण्डित्यं च

निर्विद्याथ मुनिः स्यात् बाल्यपाण्डित्ये यथावदुपादाय परिशुद्धे परिपूर्णे ब्रह्मणि मननशीलो भवेन्निदिध्यासनरूपविद्याऽऽवाप्तये एवं चिन्तयोपादानेनलब्धविद्यो भवतीत्याह अमौनं मौनं च निर्विद्याथ ब्राह्मण इति, अमौनं मौनेतरसहकारिकलापः तं च मौनं च यथावदुपाददानो विद्याकाष्ठां तदेकनिष्ठायां लभतेत्यर्थः, स ब्राह्मणः केन स्यादित्युक्तादुपायात्किमन्योऽप्युपायोऽस्तीति पृष्टे येन स्यात्तेनेदृश एवेति येन मौनपर्यन्तेन ब्राह्मणः स्यादित्युक्तं तेनैवेदृशः स्यात् न केनाप्यन्येनोपायेनेति परिहृतम्, अतः सर्वेष्वाश्रमेषु स्थितस्य विदुषो यज्ञादिस्वाश्रमधर्मवत् पाण्डित्यादिकं मौनतृतीयं विद्यायाः सहकार्यन्तरं विधीयते। अथ स्यात् यदि सर्वेष्वाश्रमेषु स्थितानां विदुषां तत्तदाश्रमधर्मसहकारिणी मौनतृतीयसचिवा विद्या ब्रह्मप्राप्तिसाधनमुच्यते कथं तर्हि छान्दोग्ये अभिसमावृत्य कुटुम्बे शुचौ देश इत्यारभ्य स खल्वेवं वर्त्तयन् यावदायुषं ब्रह्मलोकमभिसंपद्यते न च पुनरावर्त्तत इति यावदायुषं गार्हस्थ्यधर्मेण स्थितिदर्शनमुपपद्यत इत्यत आह—

**सू० कृत्स्नभावात्तु गृहिणोपसंहारः ॥ ४७ ॥**

तु-शब्दश्चोद्यं व्यावर्त्तयति ।

टी० "पक्षेणे"ति, यस्मिन् पक्षे भेदर्शनप्राबल्यात् विद्योपक्रमदशायामेकत्वज्ञानस्य नातिशयः तस्मिन्नेव विधिः दर्शपौर्णमासविध्यादावङ्गविधिवत् मोक्षाश्रमे बाल्यादिप्रधाने ऽपि छान्दोग्ये गृहिणोपसंहारः कथमित्यत्राह—

भा० कृत्स्नभावात्—कृत्स्नेषु भावात् कृत्स्नेष्वाश्रमिषु विद्यायाः सद्भावात् गृहिणोऽप्यस्तीति तेनोपसंहारः, तस्मात्सर्वाश्रमधर्म्मप्रदर्शनार्थागृहिणोपसंहार इत्यभिप्रायः, तथैतस्मिन्नपि वाक्ये ब्राह्मणः पुत्रेषणायाश्च वित्तेषणायाश्च लोकैषणायाश्च व्युत्थायाथभिक्षाचर्य्यं चरतीति पारिव्रज्यैकान्तधर्म्मं प्रतिपाद्य तस्माद्ब्राह्मणः पाण्डित्यं निर्विद्येत्यादिना पारिव्राज्यधर्म्मस्थितिहेतुकमौनतृतीयसहकारिविधानं प्रदर्शनार्थमित्याह—

सू० मौनवदितरेषामप्युपदेशात् ॥ ४८ ॥

सर्वैषणाविनिर्मुक्तस्य भिक्षाचरणपूर्वकमौनोपदेशः सर्वेषामाश्रमधर्म्माणां प्रदर्शनार्थः, कुतः एवं विधमौनोपदेशवदितरेषामाश्रमिधर्म्माणामपि त्रयोधर्म्मस्कन्धा इत्यारभ्य "ब्रह्मसंस्थोऽमृतत्वमेती"ति ब्रह्मप्राप्त्युपदेशादुपपादितश्च पूर्वमेव ब्रह्मसंस्थ-शब्दः सर्वाश्रमिसाधारण इति, अतः सुष्ठूक्तं यज्ञादिसर्वाश्रमधर्म्मवन्मौनतृतीयः पाण्डित्यादिविद्यासहकारित्वेन विधीयत इति, । सहकार्यन्तरविध्यधिकरणं समाप्तम् ॥

अनाविष्काराधिकरणम् ।

सू० अनाविष्कुर्वन्नन्वयात् ॥ ४९ ॥

तस्माद्ब्राह्मणः पाण्डित्यं निर्विद्य बाल्येन तिष्ठासेदित्यत्र विदुषोबाल्यमुपादेयतया श्रुतं बालस्य भावः कर्म्म वा बाल्यं, बालभावस्य वयोऽवस्थादिविशेषस्यानुपादेयत्वात

कर्म्मैवेह गृह्यते, तत्र किं बालस्य कर्म्म कामचारादि सर्वं विदुषोपादेयम्? उत दम्भादिरहितत्वमेवेति? विषये विशेषाभावात्सर्वमुपादेयं, नियमशास्त्राणि च विशेषविधिनाऽनेन बाध्यन्त इत्येवं प्राप्तेऽभिधीयते–

टी० ''कृत्स्नभावात्तु गृहिणोपसंहार''इति, गृहिषु यज्ञादिकर्माणि अहिंसेन्द्रियसंयमनादि च यथासम्भवं विद्यन्ते अतस्तेनोपसंहारः, न तु गार्हस्थ्यमात्रपर्यवसानादिति मौनगार्हस्थ्याश्रमद्वयोपन्यासादितराश्रमाभावशङ्कां व्युदस्यति ''मौनवदितरेषामप्युपदेशादि''ति, यथा मौनगार्हस्थ्याश्रमौ प्रामाणिकौ तथा वानप्रस्थगुरुकुलवासावपि उपदेशाविशेषात्, बहुवचनं तत्तदवान्तरवृत्तिभेदापेक्षयेति वर्णयन्ति, तत्र तावत् षष्ठीसमासादपि सहकार्यन्तरं विधेयमिति युक्तं विध्यादिवदिति विधि–शब्दस्य विधेयवाचित्वात्तदैकरूप्यस्य उचितत्वाच्च तस्याऽपि विधानवाचित्वे षष्ठ्यन्ताध्याहारप्रसङ्गः तृतीयशब्दविधिशब्दयोः सामानाधिकरण्ये सत्येकवाक्यत्वं स्यात्, त्वत्पक्षे तु तस्मात्तृतीयं मौनं विधीयते इति वाक्यभेदकल्पनं स्यात्, तच्च निष्प्रयोजनम् । किञ्च विध्यादिवदिति विधि–शब्दस्य विद्याङ्गभूतयज्ञादिशमादिपरत्वं युक्तम् अङ्गमात्रे दृष्टान्तसमर्पणादपि विद्याङ्गत्वे दृष्टान्तसमर्पणौचित्यात् पक्षेणान्यत्राभेददर्शनप्राबल्यात् अतिशयो विधेय इत्यध्याहारादपि व्यासादौ प्रयोगादित्यध्याहारौचित्यात् ज्ञानार्थस्य मुनि–शब्दस्य तद्विशेषविषयत्वे हेतोर्वक्तव्यात् विद्यावतोऽतिशयप्राप्तेरविधेयत्वशङ्का चापाकरणीयेति चेत् न अतिशयमात्रवाचित्वाभावात् मुनि–शब्दस्य शुभाश्रयं मननं हि विधेयं तत्कारिषु प्रयोगात्, मौन–शब्दस्य ध्यानसमाधिपर्यायत्वाभावात् तत्तद्विषयविशेषसंशीलनं हि मननं, न तु निरन्तरस्मृतिः, न च समाधिः, तच्च विद्यावतः सिद्धमिति चेत् न तद्वत इति पदस्य प्रारब्धविद्याविषयत्वात्, तच्च अनुक्तसहकारिसापेक्षत्वादवगम्यते ब्राह्मण–शब्दश्च न जातिवाची अथ ब्राह्मणः इत्युक्तेः जातिर्हि प्रागेव सिद्धा कृत्स्नभावादित्यनन्तरसूत्रस्य इतराश्रमसद्भावपरत्वमयुक्तं विधिर्वा

धारणवदित्यत्र आश्रमविधीनामुपपादितत्वात्, यदाऽऽश्रमान्तरस्य विद्याङ्गत्वे विरोधपरिहारपरं कृत्स्नभावादिति सूत्रे तदा प्रदर्शनार्थतया व्याख्याने समीचीनमुत्तरं स्यात्, न तु गृहस्थे कृत्स्नश्रौतस्मार्त्तब्रह्मचर्यमौनादिसद्भावपरत्वेनापि व्याख्याने, अत एव कथं गृहिणः कृत्स्नमित्याशङ्क्य मौनवत् शमादीनामपि गृहमेधिनि उपदेशादिति कार्त्स्न्योपपादकत्वेन तृतीयसूत्रव्याख्यानमप्ययुक्तं पूर्वसूत्रस्य गृहस्थे कृत्स्नधर्मपरत्वाभावात् । अन्ये तु एतमेव विदित्वा मुनिर्भवति इति वाक्यान्तरैक्यार्थ्यात् फलार्थवादः स्यात् ब्राह्मण्यसाहचर्याच्च अथ मुनिरिति विद्याफलकीर्त्तनमिति पूर्वपक्षं कृत्वा मौनं नाम पारिव्राज्यं विधीयते गार्हस्थ्यम् आचार्यकुलं मौनं वानप्रस्थमिति प्रयोगाद्भवतीत्यध्याहारादपि अपूर्वतया भवेत् इत्यध्याहारस्य युक्तत्वात् पूर्वत्रापि व्युत्थायाथ भिक्षाचर्यं चरति पारिव्राज्यप्रस्तावात् स्तुतेर्विध्यर्थत्वाच्च मुनिर्भवतीत्यत्रापि अयमेवार्थ इति ब्राह्मण्यमपि न विद्याफलं किं तु सहकार्यन्तरं विधेयं, तच्च सर्वाश्रमधर्मपरित्यागरूपं दुर्वासःसंवर्त्तादीनां नग्नचर्यादिदर्शनात्, नैतादृशं ब्राह्मणस्यास्ति वित्तं यथैकता समता सत्यता च शीलं धृतिर्दण्डनिधानमार्जवं ततस्ततश्चोपरमः क्रियाभ्यः ॥ इति भारतवचनात्, इदं च न यतीनामेव संवर्त्तस्यैव आर्त्विज्यकरणदर्शनादिति सिद्धान्तयति बाल्यपाण्डित्यापेक्षया तृतीयं मौनं च न नित्यवदनुष्ठेयं किं तु पक्षेण इच्छया विकल्पेन विध्यादिवत् । अथ यद्यज्ञ इत्याचक्षते इत्यादिवाक्योक्तयज्ञेष्टसत्रायणानाशकायनारण्यायनादिवत् तेषु मौनस्य परस्तात् गार्हस्थ्यस्य आमरणं श्रवणात् छान्दोग्ये गृहिणोपसंहारः, तत्र विद्यापरिकरसद्भावात् न तु मौनब्राह्मण्ययोरविहितत्वादिति चाहुः । मौनवदित्यधिकरणान्तरं ब्रह्मचर्यवानप्रस्थयोर्न विद्याङ्गत्वम् अविधानादिति पूर्वपक्षं कृत्वा तमेतमित्यादिवाक्ये वेदानुवचनतपोनाशकशब्दैर्वाक्यान्तरैश्च ब्रह्मचारिणां वानप्रस्थानामप्युपदेशात् विद्याङ्गत्वमिति सिद्धान्तयन्ति, अत्र ब्रूमः फलकीर्तनमिति पूर्वपक्षोऽनुपपन्नः ज्ञानव्यतिरेकेण फलविशेषवाचित्वाप्रतीतेः, ज्ञानमेव चेत्फलं तर्हि पाण्डित्यानुवाद इति

पूर्वपक्षो युक्तः परिव्राज्यविधिरिति सिद्धान्तोऽप्यनुपपन्नः व्युत्थाय भिक्षाचर्यं चरतीति पूर्वमेव विहितत्वात्, लिङ्गाद्यश्रवणमुभयत्र तुल्यं विधिकल्पनं च तत्रैवोचितं बह्वर्थसाधारणान्मुनिशब्दादपि तत्र परिव्राज्यस्फुटप्रतीतेः, न च ब्राह्मण्यं नाम सर्वाश्रमधर्मपरित्यागः अशाब्दत्वात् ततस्ततश्चोपरमः क्रियाभ्य इति वचनं तु लौकिकव्यापारविषयतयोपपन्नं संवर्त्तादीनां नग्नचर्यावचनं न सर्वाश्रमधर्मत्यागे प्रमाणं जनावमानकृतयोगसिद्धये स्वप्रकर्षाच्छादनार्थतयाऽप्युपपन्नत्वात्, आर्त्विज्यकरणेन गार्हस्थ्यपरित्यागावगमात् आश्रमधर्माणामात्मख्यानस्यैव छन्नानुष्ठानसम्भवाच्च तथा हि स्मरन्ति "यन्न सन्तं न चासन्तं नाश्रुतं न बहुश्रुतम् । न सुवृत्तं न दुर्वृत्तं वेद कश्चित्स ब्राह्मणः ॥ गूढधर्माश्रितो विद्वान् अज्ञानचरितं चरेत् । अन्धवज्जडवच्चैव मूकवच्च महीं चरेत् ॥ इति द्वितीयसूत्रे गृहिणोपसंहारस्य निर्वाह्यत्वात् आद्यसूत्रे पक्षेणेति पारिव्राज्यस्य विकल्पेनोपादेयत्वं चासमर्थनीयं विद्याङ्गत्वेन गार्हस्थ्यप्रामाणिकत्वसिद्धौ सत्यां पारिव्राज्यनियमशङ्काऽनुपपत्तेः तद्वत इत्यस्य विद्यावत इति व्याख्यानमुचितं, न तु बाल्यपाण्डित्यवत इति विद्यायाः प्रकृतत्वात्, परिव्राज्यनियमस्यासमर्थनीयत्वाच्च, यतो मौनब्राह्मणशब्दौ न पारिव्राज्यसर्वाश्रमधर्मत्यागपरौ किंतु शुभाश्रयमननिदिध्यासनलाभपरौ, अत एव तयोरनियतत्वमपि अनुपपन्नं सर्वासु विद्यासु शुभाश्रयमननस्यापेक्षितत्वात् उपासनस्य निदिध्यासनरूपत्वाच्च द्वितीयसूत्रनिर्वाहो दत्तोत्तरः, ब्रह्मचर्यवानप्रस्थयोर्विद्याङ्गत्वनिरूपकतया अधिकरणान्तरत्वं च मौनवदिति सूत्रस्यायुक्तं सर्वापेक्षेत्यत्रैव तमेतमित्यादिवाक्येन विद्यायाः सर्वाश्रमधर्माङ्गकत्वस्य समर्थितत्वात् ॥ सहकार्यन्तरविध्यधिकरणं समाप्तम् ॥

सू० "अनाविष्कुर्व"न्निति, बालस्य यत्स्वभावोऽनाविष्काररूपं कर्म्म तदुपाददानो वर्त्तेत विद्वान्, कुतः अन्वयात्—तस्यैवान्वयात् बाल्येन तिष्ठासेदित्यस्मिन् विधौ तस्यैव ह्य-

न्वयसम्भवः इतरेषां विद्याविरोधित्वश्रवणात्, "नाविरतो दुश्चरितान्नाशान्तो नासमाहितः । नाशान्तमानसो वापि प्रज्ञानेनैनमाप्नुयात् । आहारशुद्धौ सत्त्वशुद्धिरित्यादिषु ॥ अनाविष्काराधिकरणं समाप्तम् ॥

ऐहिकाधिकरणम् ।

**सू० ऐहिकमप्रस्तुतप्रतिबन्धे तद्दर्शनात् ॥ ५० ॥**

द्विविधा विद्या अभ्युदयफला मुक्तिफला च, तत्राभ्युदयफला स्वसाधनभूतैः पुण्यकर्म्मभिः पुण्यकर्म्मानन्तरमेवोत्पद्यते ? उतानन्तरं ? कालान्तरे वेत्यनियम ? इति संशयः पूर्व्वकृतैः पुण्यकर्म्मभिर्हि विद्वान् जायते यथोक्तं भगवता । "चतुर्विधा भजन्ते मां जनाः सुकृतिनोऽर्ज्जुने"ति साधने निर्वृत्ते विलम्बहेत्वभावात् अनन्तरमेवेति प्राप्त उच्यते— ऐहिकमप्रस्तुतप्रतिबन्ध इति, ऐहिकमभ्युदयफलमुपासनम् अप्रस्तुतप्रतिबन्धे अप्रस्तुते प्रबलकर्मान्तरप्रतिबन्धे सत्यनन्तरं प्रतिबन्धे सति तदुत्तरकालमित्यनियमः, कुतः तद्दर्शनात्, दृश्यते हि प्रबलेन कर्म्मान्तरेण कर्म्मफलप्रतिबन्धाभ्युपगमः श्रुतौ, "यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्य्यवत्तर"मित्युद्गीथविद्यायुक्तस्य कर्मणः फलाप्रतिबन्धश्रवणात् ॥ ऐहिकाधिकरणं समाप्तम् ॥

मुक्तिफलाधिकरणम् ।

**सू० एवं मुक्तिफलानियमस्तदवस्थाऽवधृतेस्तदवस्थाऽवधृतेः ॥५१॥**

मुक्तिफलस्याप्युपासनस्य स्वसाधनभूतैरतिशयितकर्म्मभि-

त्पत्तावेवमेव कालानियमः तस्याऽपि पूर्ववत्प्रतिबन्धाभावप्रतिबन्धसमाप्तिरूपावस्थावधृतेः, अत्रापि तस्य हेतोः समानत्वादित्यर्थः । सर्वेभ्यः कर्म्मभ्यो मुक्तिफलविद्यासाधनस्य कर्म्मणः प्रबलत्वात्प्रतिबन्धासम्भव इत्यधिकाशङ्का, तत्रापि ब्रह्मविदपचाराणां पूर्वोक्तानां प्रबलानां सम्भवात् प्रतिबन्धसम्भव इति परिहारः, द्विरुक्तिरध्यायपरिसमाप्तिं द्योतयति ॥ मुक्तिफलाधिकरणं समाप्तम् ॥

इति श्रीभगवद्रामानुजाचार्य्यविरचिते शारीरकमीमांसाभाष्ये तृतीयाध्यायस्य चतुर्थः पादः ४ ॥ समाप्तश्चायमध्यायः । श्रीमते रामानुजाय नमः । नमः पूर्वाचार्येभ्यः ।

टी० सू० अनाविष्कुर्वन्नन्वयात् ॥ ४९ ॥ सङ्गतिः स्फुटा, बाल्योपादाने किं कामचारादिकमपि उपादेयम्? उत माहात्म्यानाविष्करणमेव? किं बाल्य-शब्दः सर्वबालककर्मपरः? उत माहात्म्यानाविष्काररूपबालस्वभावविशेषपरः? नाविरत इत्यादिश्रुतिः किं बाल्य-शब्दस्य अनाविष्कारपरतामवगमयति ने?ति, न चेत्सर्वबालकर्मपरतया बाल्य-शब्दस्य कामचारादेरुपादेयत्वम्, अवगमयति चेत् अनाविष्कारपरतया बाल्य-शब्दस्य दम्भादिराहित्यमेव उपादेयं स्यात्। ननु कथं रागप्राप्तस्य कामचारादेर्विधेयत्वशङ्का, नैवं रागप्राप्तर्तुगमनादेर्नियमार्थं विधानदर्शनात्, ऋतुगमनं नान्यत्र निषिद्धं, रागप्राप्त निषिद्धं कथं विधेयमिति चेन्न पश्वालम्भनविधानवद् बाल्यविधानस्यापि सम्भावितत्वात्, नियमशास्त्राणि चेति ब्रह्मविद्व्यतिरिक्तविषयाणीति भावः । राद्धान्तमाह "एवं प्राप्ते" इति, बालस्येति स्वभावोऽभिजनशुद्ध्यादिः नियमशास्त्राणां ब्रह्मविद्व्यतिरिक्तविषयत्वं परिहृतम्, एतदाश्रमनिष्ठस्य विशेषतो नियमदर्शनादित्यर्थः । अनाविष्काराधिकरणं समाप्तम् ॥ सू० ऐहिकमप्रस्तुतप्रतिबन्धे तद्दर्शनात् ॥ ५० ॥ अङ्गचिन्ता कृता, अङ्गिनिष्ठासिद्धिसमयो निरूप्यत इति सङ्गतिः किमैहि-

कफलोपासनं स्वसाधनपुण्यकर्मानन्तरमेवोत्पद्यते? उतानन्तरं कालान्तरे वेत्यनियमः? किं तदुत्पत्तेः प्रतिबन्धः संभवति? नेति? न चेदानन्तर्यनियमः, सम्भवे त्वनियमः उद्गीथाद्युपासनरहितयज्ञादिसुकृतैर्विद्यानिष्पत्तावयं विचारः विद्यायाः पुण्यहेतुकत्वे सिद्धे हि अयं विचार इत्यत्राह "यथोक्तमिति, ॥ ऐहिकाधिकरणं समाप्तम् ॥ सू० एवं मुक्तिफलानियमस्तदवस्थाऽवधृतेस्तदवस्थाऽवधृतेः ॥ ५१ ॥ सङ्गतिः स्फुटा, किं मुक्तिफलमुपासनं स्वसाधनकर्मानन्तरमुत्पद्यते? उतानन्तरं कालान्तरे वेत्यनियमः? किं परविद्यासाधनात्कर्मणः प्रबलकर्मान्तरं सम्भवति नेति? असम्भवे नियमः सम्भवे त्व नियम इति, मुक्तिफल—शब्दो बहुव्रीहिः उद्गीथाद्युपासनरहितयज्ञादिनिष्पाद्यपरविद्यानिष्पत्तिविषयोऽयं विचारः। तस्य हेतोः—पूर्वत्रोक्तहेतोः, । अधिकाशङ्कामाह "सर्वेभ्य" इति, भगवत्प्रीत्यतिशयहेतुत्वेन प्राबल्यात् न तत्प्रतिबन्धकमस्तीति शङ्का, ब्रह्मविदपचारः प्रतिबन्धक इति परिहारः। इतरे त्वयोऽपि इदमधिकरणद्वयं विद्यासाधनानन्तरं विद्योत्पत्तिविषयं निष्पन्नायां विद्यायां तत्फलभूतमुक्तिविषयं च वर्णयन्ति। तत्र परे तु ऐहिकमित्यत्र विद्योत्पत्तिरप्रतिबन्धे अस्मिन् जन्मनि स्यात्, अन्यथा अन्यत्रेति सिद्धान्तयन्ति तत्र विचारस्य ऐहिकोपासनविषयत्वाभावमात्रे विरोधः, तत्त्वनन्तराधिकरणविचारानुपपत्तेरनुपपन्नम् अनन्तराधिकरणस्य को विचारः मुक्तिरूपे फलेऽपि उत्कर्षनिकर्षकृतः कश्चिद्विशेषप्रतिनियमः फलत्वात्सम्भवति इत्याशङ्क्य परिह्रियते मुक्तेरैकरूप्यत्वावधृतेः इति चेत् उच्यते उत्कर्षनिकर्षकृतविशेषप्रतिनियम इति, किं स्वरूपगतविशेषः? उत विलम्बाविलम्बरूपविशेषो विवक्षितः? न प्रथमः, इहासङ्गतत्वात्, चतुर्थस्य चतुर्थे पादे हि तस्य निरूप्यता, निरूप्यते च "संपद्याविर्भाव" इति, द्वितीयेऽपि किं विद्यायामनिष्पन्नायां विलम्बाविलम्बविचारः? उत निष्पन्नायां? प्रथमे निवर्तकानिष्पत्तौ निवर्त्यनिवृत्तेः प्रसङ्गाभावेन विलम्बनिश्चयादनारम्भः, द्वितीये वसिष्ठादीनामाधिकारिकाणां विद्यावतामपि विलम्बस्य पूर्वं समर्थितत्वात् इदानीन्तनानां ब्रह्मज्ञानवतां देहपातविलम्बाच्च विलम्बाविलम्बरूपविशेषप्रतिनियमनिरासो-

ऽनुपपन्नः, अत उपासनभेदेनैव अधिकरणवर्णनं युक्तम् । अपरे तु विद्या फलमात्मापरोक्ष्यं किमिहैव जन्मनि ? उत इह वान्यत्र वेत्यनियम ? इति विचार्य पूर्वाधिकरणेनानियम इति सिद्धान्तयन्ति । अनन्तरे चापरोक्ष्ये सति तद्देहपाते मोक्षः दर्शनमात्रे कर्मक्षयश्रुतेरिति पूर्वपक्षं कृत्वा आपरोक्ष्ये तारतम्यसम्भवात् तत्रैवान्यत्र वेत्यनियमः, मोक्षस्त्वेकरूपः परमात्मावस्था हि मुक्तिरवधृतेत्याहुः तेषामपि मोक्षैकरूपत्वं सिद्धान्तश्चेत् पूर्ववदसङ्गतिः पुनरुक्तिश्च, विलम्बाविलम्बसम्भवे निरूप्ये यावदधिकारमित्यनेन गतार्थत्वादनारम्भणीयता । संशयाभावाच्चापरोक्ष्यमात्रे मुक्तिः कस्य केन सम्भाव्यते । अन्ये तु साक्षात्कारसाधनानि इहैव अप्रतिबन्धे सति तु प्रतिबन्धे अन्यत्र जन्मनि साक्षात्कारं जनयन्तीति पूर्वाधिकरणे निश्चित्य चरमाधिकरणे ब्रह्मसाक्षात्कारफलस्य मुक्तेस्तद्देहावसानभावित्वं स्वतः, सति तु प्रतिबन्धे जन्मान्तरे आधिकारिकेषु वसिष्ठादिषु मुक्त्यवस्थावधृतिः, अयं च न्यायः कर्मफलेषु स्वर्गादिषु च सूत्रकारेण प्रसङ्गादिह प्रतिपादित इत्याहुः । एषामपि चरमाधिकरणसिद्धान्तस्य प्रागेव सिद्धतया अधिकरणद्वयविभागानुपपत्तिः पूर्ववदनुसन्धेया । यज्ञादिकर्मफलानामिह विचारस्तु न सूत्रविवक्षितः, मुक्तिफलशब्दोपादानात्, न हि 'फलमत उपपत्तेरि''ति वत्साधारण-शब्देन निर्देशः, अनपेक्षितत्वादभिप्रायकल्पनं चानुपपन्नं यज्ञादीनां विद्याङ्गत्वादपेक्षितमिति चेत् तत्पूर्वसूत्रेण कृतमित्यनपेक्षितत्वम्, अत उपासनभेदविषयतयैव अधिकरणद्वयवर्णनं युक्तमिति ॥ मुक्तिफलाधिकरणं समाप्तम् ॥

इति श्रीहरितकुलतिलकवाग्विजयिसूनुना श्रीरङ्गराजदिव्याज्ञालब्धवेदव्यासापरनामधेयेन श्रीमद्वरदाचार्यपादसेवासमधिगतश्रीभगवद्रामानुजविरचितशारीरकमीमांसाभाष्यहृदयेन श्रीसुदर्शनसूरिणा विलिखितायां श्रुतप्रकाशिकायां तृतीयाध्यायस्य चतुर्थः पादः ॥ ४ ॥ समाप्तश्चायमध्यायः ।

श्रीमते रामानुजाय नमः । नमः पूर्वाचार्येभ्यः ।

समुदिताधिकरणसंख्या ॥ १२३ ॥ समुदितसूत्रसंख्या ॥ ४६८ ॥

पादेऽधिकरणसंख्या ॥ १५ ॥

श्रीमते रामानुजाय नमः ॥

# अथ चतुर्थोऽध्याय आरभ्यते ।

आवृत्त्यधिकरणम् । **सू० आवृत्तिरसकृदुपदेशात् ॥ १ ॥**

भा० तृतीयेऽध्याये साधनैः सह विद्या चिन्तिता, अथेदानीं विद्यास्वरूपविशोधनपूर्वकं विद्याफलं चिन्त्यते, तत्र ब्रह्म-विदाप्नोति परं तमेवं विदित्वाऽतिमृत्युमेति ब्रह्म वेद ब्रह्मैव भवति यदा पश्यः पश्यते रुक्मवर्णमित्यादिवेदा-न्तवाक्येषु ब्रह्मप्राप्तिसाधनतया विहितं वेदनं किं सकृ-त्कृतमेव शास्त्रार्थः? उत असकृदावृत्तमिति? संशयः, किं युक्तं, सकृत्कृतमिति, कुतः ब्रह्म वेद ब्रह्मैव भवतीति वेदनमात्रस्यैव विधानादसकृदावृत्तौ प्रमाणाभावात्, न चावघातादिवद्वेदनस्य ब्रह्मापरोक्ष्यं प्रति दृष्टोपायत्वात् यावत्कार्य्यमावृत्तिरिति शक्यं वक्तुं, वेदनस्य दृष्टोपाय-त्वाभावात् ।

टी० ॥ सू० आवृत्तिरसकृदुपदेशात् ॥ १ ॥ अध्यायसङ्गतिमाह "तृतीय" इति, तृतीये पादद्वयेन प्रथममुपासनोपयोगिबाह्यविषयवैतृष्ण्य-भगवत्तृष्णाजननहेतोर्निरूपणीयं हि निरूपितं, तृतीये विद्याभेदाभेदचि-न्ता चतुर्थेऽङ्गचिन्तेति तृतीयाध्याये विद्यैव निरूपितेत्यर्थः । चतुर्थे फलमेव प्रधानतः प्रतिपाद्यं, विद्याविषये पूर्वमनिरूपितांशश्च निरूप्यते, अस्य साध्यस्येदं साधनमिति साध्यसाधनभावसंबन्धज्ञापनार्थं भक्तिरू-पापन्नज्ञानस्य प्रीतिरूपतया फलकोटिनिवेशज्ञापनार्थं च कर्मयोगापेक्षया च साध्यत्वमस्तीत्यत्र चिन्त्यते, तत्रेत्यादि किं वेदान्तविहितवेदनं सकृत्कृतः शास्त्रार्थः? उत सकृदावृत्त? मिति, किं ब्रह्म विदाप्नोतीत्या-

दिर्भिवेदनमात्रं विधीयते ? उत निदिध्यासनं ? किमत्र विदि–शब्दो ज्ञानमात्रपरः ? उतोपासनपरः ? उपक्रमोपसंहाराभ्यां वाक्यान्तराच्चोपासनपरत्वं विदि–शब्देऽवगम्यते ने ? ति, न चेदुपासनपरत्वाभावेन वेदनमात्रं विधीयत इति सकृत्कृतः शास्त्रार्थः । अवगम्यते चेद्विदि–शब्दस्योपासनपरत्वान्निदिध्यासनपरं वेदनं विहितमित्यसकृदावृत्तमेव शास्त्रार्थः, आवृत्तौ प्रमाणाभावेऽपि दृष्टोपयोगेष्वावृत्तिः क्रियत इत्यत्राह "न चे"ति, अदृष्टोपायत्वं सिद्धान्तिनैववोक्तमित्याह–

सू० ज्योतिष्टोमादिकर्माणि वेदान्तविहितं च वेदनं परमपुरुषाराधनरूपम्, आराधिताच्च परमपुरुषाद् धर्मार्थकाममोक्षाख्यपुरुषार्थावाप्तिरिति हि "फलमत उपपत्ते"रित्यत्र प्रतिपादितम् । अतो ज्योतिष्टोमादिवद्यथाशब्दं सकृत्कृतमेव शास्त्रार्थ इति प्राप्ते प्रचक्ष्महे–आवृत्तिरसकृदिति असकृदावृत्तमेव वेदनं शास्त्रार्थः कुतः उपदेशात् ध्यानोपासनपर्यायेण वेद[1]नोपदेशात् तत्पर्यायत्वं च विद्युपास्तिध्यायतीनामेकस्मिन् विषये वेदनोपदेशपरवाक्येषु प्रयोगादवगम्यते–तथा हि मनो ब्रह्मेत्युपासीतेत्युपासिनोपक्रान्तोऽर्थो "भाति च तपति च कीर्त्या यशसा ब्रह्मवर्चसेन य एवं वेदेति विदिनोपसंह्रियते, तथा यस्तद्वेद यत्स वेद स मयैतदुक्त इत्युपक्रमे विदिनोक्तं रैक्वस्य ज्ञानम् अनुम एतां भगवो देवतां शाधि यां देवतामुपास्से इत्युपासिनोपसंह्रियते ॥

टी० "ज्योतिष्टोमादी"ति, सिद्धान्तमाह "इति प्राप्त"इति, ध्यानोपासनपर्यायेण वेदनशब्देनेति, अत्र निमित्तभेदेऽप्येकार्थपर्य्यवसा-

१ वेदनशब्देनोपदेशादिति पुस्तकान्तरपाठो युक्तोभाति ।

यित्वं पर्य्यायत्वं विवक्षितं, पर्य्यायत्वं कथमित्यत्राह "तत्पर्य्यायत्वं चे"ति, कीर्त्तिः—परत्वविषयप्रथा, यशः—सौलभ्यप्रथा, ताभ्यां भाति ब्रह्मवर्चसेन तपतीत्यर्थः, यथा भक्तिस्नेहौ परत्वसौलभ्यविषयौ भिद्येते तथा कीर्त्तियशसी, "स्नेहो मे परमो राजन् । भक्तिश्च नियता वीरे"त्यत्र हि तथा दृश्यते, रञ्जनवाचिना राज-शब्देन वीर-शब्देन च स्नेहभक्ती सौलभ्यपरत्वविषये अवगम्येते । नाथ योनिसहस्रेष्वित्यत्र तेषु तेष्वच्युता भक्तिरिति तत्रैव प्रकरणे या प्रीतिरविवेकानामिति च पठ्यते । तथा कीर्त्तियशसोर्भेदः यस्तद्वेद यो वेदिता यत्स वेद यच्च वेद्यं स मयैतदुक्तः स वेदिता रैक्व तद्वेद्यं ब्रह्म चोभयं मयोक्तमित्यर्थः "पुँल्लिङ्गनिर्द्देशो रैक्वाभिप्रायेण, अनुम इत्यादि, मे अनुशाधीत्यन्वयः, "व्यवहिताश्चे"ति सूत्रात्, उपसंह्रियते उपक्रमोक्तिः पश्चादनूद्यत इत्यर्थः । एकैकत्र विद्युपास्त्योरेकार्थविषययोः प्रयोगो दर्शितः । अथानेकत्र प्रदेशभेदेनैकैकस्य प्रयोगं दर्शयति—

सू० तथा ब्रह्मविदाप्नोति परमित्यादिवाक्यसमानार्थेषु वाक्येषु "आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः ततस्तु तं पश्यति निष्कलं ध्यायमान" इत्यादिषु ध्यायतिना वेदनमभिधीयते, ध्यानं, च चिन्तनं तच्च स्मृतिसन्ततिरूपं न स्मृतिमात्रम्, उपास्तिरपि तदेकार्थः एकाग्रचित्तवृत्तिनैरन्तर्य्ये प्रयोगदर्शनात् तदुभयैकार्थ्यादसकृदावृत्तसन्ततस्मृतिरिह ब्रह्म वेद ब्रह्मैव भवति ज्ञात्वा देवं मुच्यते सर्वपाशैरित्यादिषु वेदनादिशब्दैरभिधीयत इति निश्चीयते ॥

## सू० लिङ्गाच्च ॥ २ ॥

लिङ्गं—स्मृतिः स्मृतेश्चायमर्थोऽवगम्यते, स्मर्य्यते हि मोक्षसाधनभूतं वेदनं स्मृतिसन्ततिरूपम् ।

टी० 'तथे''ति, अत्र "छागो वा मन्त्रवर्णादि''ति न्यायोऽभिप्रेतः ध्यायमान–शब्दोपादानेन निदिध्यासितव्य इत्यत्र सन्प्रत्ययस्य दृष्यमाण प्रधानत्वं दर्शितं, ध्यायतिना वेदनमुच्यतां ततः किमसकृदावृत्तेरित्यत्राह "ध्यानञ्च चिन्तन''मिति, ध्यै चिन्तायामिति हि धातुः, असकृदावृत्तत्वं विच्छेदेऽप्युपपद्यते इति तद्व्यावृत्त्यर्थमाह 'असकृदावृत्तसन्ततस्मृति''रिति, सू॰ लिङ्गाच्च ॥ २ ॥ लिङ्ग–शब्दं वाचष्टे "लिङ्गं स्मृति''रिति, परे चापरे च श्रवणमनननिदिध्यासनानामावृत्तिरपेक्षिता वा नेति विचारयन्ति तदयुक्तं श्रवणमननयोरागप्राप्तत्वेन यावदर्थनिश्चयं तदावर्त्तनस्य प्राप्तत्वात् असकृत्पदं हेत्वंशविषयमाहुः । श्रोतव्यो मन्तव्यो निदिध्यासितव्य इत्यसकृदुपदेशादिति तदयुक्तं श्रोतव्यादिशब्दैरेकैकस्यावृत्त्यभावात्, उपदेशक्रियाया आवृत्तिर्विवक्षितेति चेत् तर्हि सकृच्छ्रवणेन सकृन्मननेन सकृन्निदिध्यासनेन च तस्योपदेशस्य सफलतया तेषां प्रत्येकावृत्तौ प्रमाणत्वाभावात् तेषामात्मसाक्षात्कारार्थत्वात् । वैतुष्यार्थावघातस्येव दृष्टार्थत्वादावृत्तिसिद्धिरिति चेत् तर्हि असकृदुपदेशादिति हेतुरहेतुः स्यात्, दृष्टार्थत्वादित्येव सूत्रयितव्यम् असकृच्छब्दस्यावृत्तिविशेषणत्वन्तु सफलम् आवृत्ति–शब्दस्य द्वित्रिःप्रत्ययमात्रेणापि कृतार्थत्वात् आवृत्तिश्चात्मापरोक्ष्ये दृष्टोपायः सकृच्छ्रुताद्वाक्यादप्रतीतस्यार्थस्यावर्त्तनेन सम्यक्प्रतिपत्तिदर्शनात् तदापरोक्ष्यं च बन्धनिवृत्तौ दृष्टोपायः रज्ज्वापरोक्ष्येण सर्पभ्रमनिवृत्तिदर्शनादिति चायुक्तं धातुःप्रसादाद् वीतशोकः मद्भक्तः सर्वदुर्गाणि मत्प्रसादात्तरिष्यतीति श्रुतिस्मृतिविरोधात्, ज्ञानवेदनशब्दान्वितवाक्यान्येव विषयः न तु ध्यानादिशब्दान्वितानि ध्यानादिपदानामावृत्तप्रत्ययविषयत्वे संशयाभावात् आत्मनोनित्यापरोक्षत्वाभ्युपगमात् ॥

मू० "तद्रूपप्रत्यये चैका सन्ततिश्चान्यनिःस्पृहा । तद्ध्यानं प्रथमैः षड्भिरङ्गैर्निष्पाद्यते तथे''ति, तस्मादसकृदावृत्तमेव वेदनं शास्त्रार्थः ॥ आवृत्त्यधिकरणं समाप्तम ॥

टी० न तदावृत्तिसाध्यं बन्धनिवर्त्तकसाक्षात्कारस्तु न वाक्यजन्य प्रत्ययावृत्त्या भवति ज्योतिष्टोमादिवाक्यार्थप्रत्ययावृत्तेस्तदर्थापरोक्ष्यहेतुत्वभावात्, एकश्चन्द्र इति वाक्यजन्यप्रत्ययावृत्त्या चन्द्रैकत्वापरोक्ष्याभावाच्च तिमिराद्यपगमे जायत इति चेत् तत्तु चक्षुषा जायते न तु चन्द्रैकत्वप्रत्ययावृत्तिमात्रात् तदनुगृहीतादेकश्चन्द्र इति वाक्याद्वा तिमिरादिस्थानीयदोषो भेदवासना चेत्तत्र वक्तव्यं सर्वं प्रागेवोक्तं निर्गुणब्रह्मणोवेद्यत्वाभावात् ब्रह्म वेत्यादिवाक्यानां क्लिष्टता तत्र कल्पनापोहेन सम्यङ् निश्चयोदयाय श्रवणाद्यावृत्तिर्विधेया तदनुष्ठानान्तरीयकतया निर्गुणब्रह्मप्रत्ययावृत्तिरिति पक्षोऽप्ययुक्तः ध्रुवानुस्मृतिविरोधात्, विजातीयप्रत्ययाव्यवहितप्रत्ययसन्तानं हि ध्रुवाऽनुस्मृतिः, भेदो मिथ्या निर्विशेषज्ञप्तिमात्रं सत्यमिति भावनाया विजातीयप्रत्ययसम्पर्कान्न ध्रुवानुस्मृतिसिद्धिः, समाधिविधिश्चानुपपन्नः समाधौ मनसः प्रलयोनाम बहिर्व्यापारानर्हत्वं न तु विनाशः, अनुपपन्नत्वाद् बन्धनिवर्त्तकं वाक्यार्थज्ञानं मनोविनाशरूपसमाधिजन्यं वा जनकं वा, न प्रथमः, मनसोनाशे वाक्यस्य ज्ञानजनकत्वायोगात्, शब्दो हि मनसा गृह्यमाण एवार्थज्ञानं जनयति, न द्वितीयः, वाक्यार्थज्ञानस्य कृत्स्नप्रपञ्चमिथ्यात्वविषयस्य देहे स्थिते मनोमात्रप्रलयहेतुत्वानुपपत्तेः पुनर्मन उत्पत्त्यनुपपत्तेश्च, न हि ज्ञाननिवृत्तस्य बन्धस्य पुनरुदयः पूर्वं ज्ञाननिवृत्तस्यापि रज्जुसर्पस्येव पश्चादुदयोपपत्तिरिति चेत् तर्हि बन्धस्यापि पुनरुदयप्रसङ्गः, दोषानिवृत्त्या रज्जुसर्पस्य पुनरुदयः सम्भवेत् तदभावात् बन्धस्य पुनरुदयाभाव इति चेत् मनोनिवर्त्तकस्यापि वाक्यार्थज्ञानस्य दोषनिवर्त्तकत्वात् पुनर्मनस उत्पत्तेरनुपपत्तिः क्रियाविशेषेण मनःप्रलयः न तु वाक्यार्थज्ञानेनेति चेन्न उत्पादकक्रियाविशेषाभावेन मनउत्पत्त्यनुपपत्तेः । किञ्च मनःप्रलयस्य वाक्यार्थज्ञानोत्पत्तिविरोधित्वान्मुमुक्षोः समाधिरकर्त्तव्यः स्यात्, मुक्तस्य सर्वज्ञत्वे प्राक्तनभगवदलाभानुसन्धानेनानन्तदुःखित्वमिति चेत् न स्वसंसरणस्य भगवल्लीलात्वानुसन्धानस्य सुखरूपत्वात् । ननु मुक्तस्यानन्दाधिक्ये सार्वज्ञ्यं हीयेत अतिशयितानन्दस्य मोहनत्वदर्शनादिति चेन्न तमोगुणसम्मिश्रणप्रयुक्तत्वान्मोह-

नत्वस्य, मनो हि गुणत्रयात्मकम्, इतरे त्रयोऽपि लिङ्गाच्चेति सूत्रमेवं व्याचक्षते रश्मिबहुत्वं पर्यावर्त्तयेदिति बहुपुत्रतायै रश्मिबहुत्वोपासनपरे वाक्ये आवृत्तिशब्देनोपासनानुवादश्चावृत्तौ लिङ्गमिति एकस्मिन् दिने सकृच्चिन्तनेऽपि दिनभेदेनावृत्तिमात्रेणाप्यावृत्तिशब्दव्यपदेशोपपत्तेर्चिरन्तरावृत्तौ लिङ्गत्वायोगात् तदनादर इति। अन्ये त्विमं विचारमङ्ग्रहोपासनव्यतिरिक्तविषयमाहुः तस्य ध्यानफलसाक्षात्कारपर्यन्तत्वादवृत्तिसिद्धेरिति तदयुक्तं तस्य साक्षात्कारपर्यन्तत्वेऽन्येषामतत्पर्यन्तत्वे च नियामकाभावात्, द्रष्टव्यताश्रुतिर्हि सर्वोपासनस्य साधारणी। किञ्च अहमर्थमात्रसाक्षात्कारोनित्यसिद्ध इति हि नोपास्तिसाध्यता, ईश्वरतादात्म्यं घटस्य शरावत्ववदताात्त्विकमिति शाब्दप्रतीतिमात्रसिद्धस्य न साक्षात्कार उपपद्यते ॥ आवृत्त्यधिकरणं समाप्तम् ॥

आत्मत्वोपासनाधिकरणम् ।

## सू० आत्मेति तूपगच्छन्ति ग्राहयन्ति च ॥ ३ ॥

भा० इदमिदानीं चिन्त्यते, किमुपास्यं ब्रह्मोपासितुरन्यत्वेनोपास्यम्? उतोपासितुरात्मत्वेनेति? किं युक्तम्, अन्यत्वेनेति, कुतः उपासितुः प्रत्यगात्मनोऽर्थान्तरत्वात् ब्रह्मणः, अर्थान्तरत्वं चा"धिकन्तु भेदनिर्देशात्" "अधिकोपदेशात्" "नेतरोऽनुपपत्ते"रित्यादिषूपपादितं, यथावस्थितञ्च ब्रह्मोपास्यम् अयथावस्थितोपासने हि ब्रह्मप्राप्तिरप्ययथा भूता स्यात् ।

टी० सू० आत्मेति तूपगच्छन्ति ग्राहयन्ति च ॥ ३ ॥ उक्तस्यासकृदावृत्तस्योपासनस्योपास्यं ब्रह्म किमुपासितुरन्यत्? उत तस्यैवात्मेति? शङ्कायां व्यतिकरोपदेशज्ञापनाय पूर्वप्रकृतवाक्यस्यात्मशब्दार्थोनिरूप्यत इति सङ्गतिः, आत्मत्वेनेति आत्म–शब्दः स्ववाची आत्मत्वेन अहमर्थसामाधि-

करण्येन अन्यत्वेन वैयधिकरण्येनेत्यर्थः । अथवा आत्मशब्दः शरीरप्रतिसंबन्धिपरः आत्मत्वेन जीवं प्रति शरीरित्वेन, अन्यत्वेन शरीरशरीरिभावसंबन्धशून्यत्वेनेत्यर्थः । एवं सति ब्रह्मोपासनविधिः किं दृष्टिविधिः? उत नेति? फलफलिभावः, मुमुक्षोः किं ब्रह्मवैयधिकरण्येनोपास्यम्? उत सामानाधिकरण्येन? किमुपास्यं ब्रह्मोपासितुरन्यत्वेनोपास्यम्? उतात्मत्वेन? किमात्मत्वनोपासने पृथगात्मानमिति विहितपृथक्त्वानुसन्धानविरोधः प्रसज्यते नेति? प्रसज्यते चेदन्यत्वेनोपासनं न चेदात्मत्वेनोपासनमिति । ननु अंशो नानेत्यादिषु जीवपरयोः शरीरशरीरिभावे शरीरवाचिशब्दानां शरीरिपर्यन्ताभिधाने च सिद्धे यथावस्तूपासने च कर्तव्ये कथं संशयः उच्यते अहमर्थसामानाधिकरण्येन वैयधिकरण्येन च ब्रह्मोपासनानि विहितानि शाण्डिल्यविद्यादिषु समानाधिकरणोपासनेषु व्यधिकरणोपासनेष्वप्ययं विचारोऽनुपयुक्तः स्यात्, यत्र सामानाधिकरणोपासने दृष्टिविधित्वशङ्का सम्भवति येऽन्नं ब्रह्मोपासते ये प्राणं ब्रह्मोपासते विज्ञानं ब्रह्म चेद्वेदेत्यादिषु जीवे ब्रह्मदृष्टिविधिदर्शनादात्मेत्यवेति वाक्ये इति--करणदर्शनाच्च तस्य दृष्टिविधित्वशङ्काव्युदासार्थमारम्भणीयत्वमिति ।

सू० यथाक्रतुरस्मिंल्लोके पुरुषो भवति तथेतः प्रेत्य भवतीति" न्यायात्, अतोऽन्यत्वेनोपास्यमित्येवं प्राप्तेऽभिधीयते "आत्मेति त्वि"ति, तु-शब्दोऽवधारणे उपासितुरात्मेत्येवोपास्यम् उपासिता प्रत्यगात्मा स्वशरीरस्य स्वयं यथाऽऽत्मा तथा स्वात्मनोऽपि परं ब्रह्मात्मेत्येवोपासीनेत्यर्थः कुतः एवमभ्यु[१]पगच्छन्ति पूर्वे उपासितारः, त्वं वा अहमस्मि भगवो देवतेऽहं वै त्वमसी"ति उपासितुरर्थान्तरभूतं ब्रह्मोपासिनारोचऽमिति कथमभ्युपगच्छन्तीत्यत्राह "आ-

१ एव ह्युपगच्छन्ति ।

ह्वयन्ति चे"ति, इममर्थमविरुद्धमुपासितॄन् आह्वयन्ति शास्त्राणि तात्पर्य्युपपादयन्तीत्यर्थः, य आत्मनि तिष्ठन्नात्मनोऽन्तरो यमात्मा न वेद यस्यात्मा शरीरं य आत्मानमन्तरो यमयति स त आत्माऽन्तर्याम्यमृत इति तथा सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः ऐतदात्म्यमिदं सर्वमिति सर्वं खल्विदं ब्रह्म तज्जलानिति च

टी० अयथाभूता स्यादिति, संसारित्वप्राप्तिः स्यादित्यर्थः राद्धान्तमाह "एवं प्राप्त" इति, सामानाधिकरण्यफलितमर्थमाह "स्वशरीरस्या स्वय"मिति उपगच्छन्ति गत्यर्था बुद्ध्यर्थाः उपासत इत्यर्थः । त्वं वा अहमस्मि अहंबुद्धिरहंशब्दश्च त्वत्पर्य्यवसायिनौ, अहं–शब्दयोगादुत्तमपुरुषः अहं वै त्वमसि अहंबुद्धिशब्दपर्य्यवसानभूमिस्त्वं–शब्दयोगान्मध्यमपुरुषः उभयस्मिन्वाक्ये अहं त्वं–शब्दप्रयोगे सत्यपि अहं–शब्दार्थतात्पर्य्यविवक्षयोत्तमपुरुषः त्वं–शब्दार्थतात्पर्य्येण मध्यमपुरुषः, अहंत्वं त्वमहमिति सामानाधिकरण्येनार्थलब्धे किमर्थमस्म्यसीति पदप्रयोगः इति चेत् उच्यते अस्तिधातोस्सत्ता ह्यर्थः तेनेदं तादात्म्यं युक्तमिति दर्शितं भवतीति उपपादकशास्त्राणि दर्शयति "य आत्मनी"ति, सन्मूला इत्यादावपि सदायतनत्वतदनत्वाभ्यामात्मत्वसिद्धिः । सन्मूला इत्यादिवाक्यापेतस्य य आत्मनीत्यादिवाक्यस्यार्थमाह–

सू० सर्वस्य चिदचिद्वस्तुनः तज्जत्वात्तल्लत्वात्तदनत्वात्तन्नियाम्यत्वात्तच्छरीरत्वाच्च सर्वस्यायमात्मा, अतः स त आत्मा, अतो यथा प्रत्यगात्मनः स्वशरीरं प्रत्यात्मत्वाद्देवोऽहं मनुष्योऽहमित्यनुसन्धानं तथा प्रत्यगात्मनोऽप्यात्मत्वात्परमात्मनस्तस्याप्यहमित्येवानुसन्धानं युक्तमिति, एवं

शास्त्रैरुपपादितं सर्वबुद्धीनां ब्रह्मैकनिष्ठत्वेन सर्वशब्दानां ब्रह्मैकनिष्ठत्वमभ्युपगच्छन्तस्त्वं वा अहमस्मि भगवो देवते अहं वै त्वमसि भगवो देवते" इति व्यति[1]हारेणोक्तवन्तः, एवं चाथ योऽन्यां देवतामुपास्तेऽन्योऽसावन्योऽहमस्मीति न स वेद अकृत्स्नो ह्येष आत्मेत्येवोपासीत सर्वं तम्परादाद्योऽन्यत्रात्मनः सर्वं वेदे[2]त्यन्यत्वानुसन्धाननिषेधः "पृथगात्मानं प्रेरितारं च मत्वे"ति पृथक्त्वानुसन्धानविधानं चाविरुद्धम्, अहमिति स्वात्मतयाऽनुसन्धानादन्यत्वानुसन्धाननिषेधो रचितः, स्वशरीरात् स्वात्मनोऽधिकत्वानुसन्धानवत्स्वात्मनोऽपि परमात्मनोऽधिकत्वानुसन्धानात्पृथक्त्वानुसन्धानविधानं च रचितम् ।

टी० "सर्वस्ये"ति, कार्यकारणभाव कार्यकारणभूतजगद्ब्रह्मसामानाधिकरण्योपयोगी, अत्र तु शुद्धस्वरूपजीवसामानाधिकरण्योपयोगी शरीरशरीरिभाव एव, नियाम्यत्वं हि शरीरलक्षणत्वेनोक्तं, युक्तमिति उपपादयन्तीत्यन्वयः, एवं चेत्यादिना एकत्वपृथक्त्वश्रुत्योरविरोधमाह तद्विविच्य दर्शयति "अह"मिति, गुणगुणिरूपार्थद्वयसद्भावाभिप्राया भेदश्रुतयः । तत्र द्वयोरपि स्वनिष्ठत्वं नास्तीत्यन्यतरस्य प्रकारिनिष्ठत्वात् गुणभूतवस्तुनः स्वनिष्ठत्वनिषेधपरा अभेदश्रुतय इति विभाग इत्यर्थः । तदुपपादयति ।

सू० अधिकस्य ब्रह्मणः प्रत्यगात्मन आत्मत्वात्तस्य च ब्रह्मशरीरत्वान्निषेधवाक्येऽकृत्स्नो ह्येष इत्युक्तम् अत उपासितुरात्मत्वेन ब्रह्मोपास्यमिति स्थितम् । आत्मत्वोपासनाधिकरणं समाप्तम् ॥

१ व्यतिकरेणोक्तवन्त इति । पा० ।
२ सर्वं वेदेत्यात्मत्वाननुसंधाननिषेधः इति पा० ।

"अधिकस्ये"ति, अक्तत्वः—अपूर्णः गुणमात्रपरत्वे च न पूर्तिः विशिष्ट एव पूर्णः, ईदृशापूर्त्तिवचनं गुणगुणिभेदे सत्येवोपपद्यते इत्यर्थः । एवं शरीरात्मभावगोचरस्य सामानाधिकरण्यस्याप्रामाणिकत्वानुपपन्नत्वयोरभावान्मोक्षफलश्रवणाच्च न दृष्टिविधित्वम् इत्युक्तम्भवति, अधिकरणार्थमुपसंहरति "अत" इति, । परे तु जीवपरयोरैक्यं सिद्धान्तयन्ति, तत्र विरुद्धधर्मयोगादैक्यानुपपत्तिरीश्वरस्य जीवत्वे ईश्वराभावप्रसङ्गः जीवस्येश्वरत्वे शास्त्रस्याधिकारिविरहः, अहं दुःखीत्यादिप्रत्यक्षविरोधश्चेति परिचोद्येश्वराभावं तस्य प्रामाणिकत्वात् परिहरन्ति, तदयुक्तं प्रामाणिकपरित्यागप्रसङ्ग इति चोदिते प्रामाणिकत्वादिति परिहारायोगात्, न हि प्रसञ्जनीयविपर्ययप्रतिज्ञानेन प्रसञ्जकधर्मः परिह्रियते, सर्वतर्कोच्छेदप्रसङ्गात् प्रसञ्जकप्रसञ्जनीयव्याप्तेरभग्नत्वाच्च, तत्त्वावबोधात् प्रागधिकारिलाभ इत्यधिकारिविरहं परिहरन्ति तदप्ययुक्तम् ईश्वरस्य सर्वज्ञत्वान्निर्विशेषचिन्मात्रस्य ज्ञातृत्वाभावात्, ज्ञातुश्च स्वनाशस्यापुरुषार्थत्वेनशास्त्रप्रसि[1]द्धत्वेन च त्रयाणामप्यधिकारानुपपत्तेः, श्रवणात्पूर्वं स्वनाशानभिज्ञत्वाद्दस्युभूयिष्ठमार्गे मार्गानभिज्ञवदवतरतीति चेन्न अश्रुतेऽपि शास्त्रे सौगतानां सर्वक्षणिकत्ववत् मायावादिनां मुक्तेर्ज्ञातृनाशत्वस्य प्रसिद्धिप्राचुर्य्येण शास्त्रभीरुत्वाल्लोकस्य प्रत्यक्षादीनां संसार्यात्मविषयत्वादविरोध इति चायुक्तं नियमेन हेयानर्हतदर्हयोर्नियमेन शङ्कानर्हतदर्हयोः शशमहिषयोरिवैक्यविरोधस्यावर्जनीयत्वात्, दुःखयोगस्य मिथ्यात्वात् अविरोध इति चायुक्तं मिथ्याभूतहेयानर्हतर्हयोर्विरोधस्यावर्जनीयत्वात् महिषविषाणमपि त्वन्मते मिथ्या तथापि शशमहिषयोः स्वरूपविरोधोऽभ्युगतः । ननु स्वाप्नशशमहिषयोः स्वप्नावस्थायामेव विरोधः न प्रबोधे विषाणस्य निवृत्तत्वात्, एवमविद्यानिवृत्तौ दुःखनिवृत्तेर्जीवपरयोर्न स्वभावविरोध इति चेत् । तर्हि स्वाप्नशशमहिषयोरिव जीवेश्वरयोरुभयोरपि विनाश एवाविरोधनिर्वाहकः स्यात् ततश्चेश्वरनित्यत्वश्रुतिविरोधः स्वभावविरोधश्चापरिहृतः, यावत्सत्ताकं विरोधस्यावस्थितत्वात्, यदि प्रबोधेऽपि परस्य हेयानर्हत्वं तिष्ठत्येव

१ शास्त्रप्रद्वेषवत्त्वेनेति पा० ।

जीवस्य हेयार्हत्वमेव निवर्त्तेत इत्युच्येत तथाऽपि जाग्रदनुभूतशशस्वाप्नमहिषयोरिव न तयोरैक्यत्वसम्भवः, सत्तया हेयानर्हं ईश्वरः, विनाशात्तदनर्हो जीव इति विद्यमानदशायां हेयार्हत्वतदनर्हत्वयोर्विनाशित्वाविनाशित्वयोश्च विरोधस्यावस्थितत्वात्, ईश्वरत्वं मार्थश्चेन्निशेषत्वहानिः, न चेदीश्वराभावः ऐश्वर्य्यादिगुणाभावेऽपि स्वरूपमवतिष्ठत इति चेत् रजतत्वनिवृत्तावप्यधिष्ठानमवतिष्ठत इति शुक्तिरूप्येश्वरयोरवैषम्यमेव स्यात्, जीवेश्वरैकत्वविधीनां दृष्टिविधित्वं पूर्वपक्षे आशङ्क्यभेदनिषेधात्तदयुक्तमिति परिहृतं तदप्ययुक्तं दृष्ट्युपासननिष्ठस्य भेदानुसन्धाने प्रत्यवायपरतयाऽपि भेदनिषेधश्रुत्युपपत्तेर्भेदतात्त्विकत्वाबाधकत्वात्, न हि गरुडात्मनोर्भेददृष्टौ विषञ्च नश्यतीति गरुडनरेन्द्रैकत्वं तात्त्विकं स्यात् हेयानर्हत्वतदर्हत्वरूपस्वभावविरोधस्यावर्जनीयत्वादपरेषां पक्षोऽप्यनुपपन्नः, अन्येषान्तु गरुडोऽहमितिवदीश्वरोऽहमिति ज्ञानस्यातत्त्वविषयत्वात् अतत्त्वज्ञानान्मोक्षः स्यात् यथोपासनं फलमिति मुक्तावपि भ्रान्त्यनुगमः स्यात् यदि सदहमिति सदैक्योपास्तिर्विधीयते तदयुक्तम् आत्मसत्त्वस्य लोकसिद्धत्वात् सदैक्यानुसन्धानस्याविधेयत्वात् नियन्त्रंशेन भोक्तृंशस्य सदाकारैणैकत्वमनुसन्धेयत्वमिति चेत् घटेनापि तादृशैक्यं समानमिति जीवस्य परमात्मैकत्वं घटात्मकत्वतुल्यं स्यात् जगतो ब्रह्मणैकत्वं नाम जात्यैक्यं स्यात् ॥ आत्मत्वोपासनाधिकरणं समाप्तम् ॥

प्रतीकाधिकरणम् । **सू० न प्रतीके न हि सः ॥ ४ ॥**

सू० मनो ब्रह्मेत्युपासीत स यो नाम ब्रह्मेत्युपास्त इत्यादिप्रतीकोपासनेष्वप्यात्मत्वानुसन्धानं कार्य्यं ? मुत नेति ? चिन्तायां मनो ब्रह्मेत्युपासीतेति ब्रह्मोपासनत्वसाम्याद् ब्रह्मणश्चोपासितुरात्मत्वादात्मेत्येवोपासीतेत्येवं प्राप्तेऽभिधीयते न प्रतीक इति, प्रतीके नात्मत्वानुसन्धानं कार्य्यं, न हि सः न ह्युपासितुरात्मा प्रतीकः ।

टी० सू० न प्रतीके न हि सः ॥ ४ ॥ आत्मत्वेनोपासनमुक्तं तत्प्रतीकोपासनेऽस्ति नेतीति शङ्कया सङ्गतिः, किं मनो ब्रह्मेत्यादिप्रतीकोपासनेष्वात्मत्वेनानुसन्धानं कर्त्तव्य? मुत नेति तेषूपास्यं किमुपासितुरात्मा नेति किं ब्रह्मणः प्रतीकोदृष्टिविशेषणम्? उत प्रतीकस्य ब्रह्मदृष्टिविशेषणमिति? प्रतीकस्य दृष्टिविशेषणत्वे ब्रह्मण उपास्यत्वात्तस्य चात्मत्वात्तत्राप्यात्मत्वेनानुसन्धानं कार्यं स्यात्, ब्रह्मणः प्रतीके दृष्टिविशेषणत्वे प्रतीकस्यैवोपास्यत्वात्तस्य चोपासकं प्रत्यात्मत्वाभावात् आत्मधीर्न कार्या स्यात्, मन इत्यादिब्रह्मोपासनत्वसाम्यादिति ब्रह्मशब्दनिर्देशाद् ब्रह्मैवोपास्यमतोब्रह्मोपासनत्वसाम्यमित्यर्थः, एवं प्राप्त इति प्रतीकोपासनेऽप्युपास्यं ब्रह्म तच्चोपासितुरात्मा अतो ब्रह्मोपासनत्वसाम्यादात्मेत्युपास्यमित्यत्राह–

सू० प्रतीकोपासनेषु प्रतीक एवोपास्यः, न ब्रह्म, ब्रह्म तु तत्र दृष्टिविशेषणमात्रं, प्रतीकोपासनं हि नाम अब्रह्मणि ब्रह्मदृष्ट्याऽनुसन्धानं, तत्रोपास्यास्य प्रतीकस्योपासितुरात्मत्वाभावान्न तथाऽनुसन्धेयम्। नन्वत्रापि ब्रह्मैवोपास्यं ब्रह्मण उपास्यत्वसम्भवे मनआदीनामचेतनानामल्पशक्तीनां चोपास्यत्वाश्रयणस्यान्याय्यत्वात्, अतो मन आदिदृष्ट्या ब्रह्मैवोपास्यमिति तत्राह–

## सू० ब्रह्मदृष्टिरुत्कर्षात् ॥ ५ ॥

मनआदिषु ब्रह्मदृष्टिरेव युक्ता, न ब्रह्मणि मनआदिदृष्टिः, ब्रह्मणो मनआदिभ्य उत्कर्षात्, तेषाञ्च विपर्ययात्, उत्कृष्टे हि राजनि भृत्यदृष्टिः प्रत्यवायकरी, भृत्ये तु राजदृष्टिरभ्युदयाय । प्रतीकाधिकरणं समाप्तम् ॥

टी० "प्रतीकोपासने"ष्विति, तर्हि ब्रह्म-शब्दनिर्देशः कथमित्यत्राह "ब्रह्म त्वि"ति, अनन्तरसूत्रशङ्कामाह "नन्वि"ति, । सू०. ब्रह्मदृष्टिरुत्कर्षात् ॥ ५ ॥ अचेतनमनःप्रभृतेरुपास्यत्वासम्भवोऽभिमानिदेवतोपास्यत्वेन परिहृत इति भावः । इतरे त्रयोऽपि ब्रह्मदृष्टिरिति सूत्रमधिकरणान्तरमाहुः नियामकाभावात् पूर्वपक्षमुत्कर्षात् सिद्धान्तमाहुः, तदयुक्तं तादर्थ्यनैरन्तर्याभ्यामेकाधिकरण्यसिद्धेः । परे तु न प्रतीक इत्यत्र सिद्धान्तयुक्तिमेवमाहुः प्रतीकानां ब्रह्माभिन्नत्वात्, तस्याऽप्यात्मत्वमिति चेत् विकारस्वरूपोपमर्द्देन ब्रह्मत्वं स्यात् यथा जीवस्य जीवभावप्रविलयेन ब्रह्मत्वं स्वस्तिकस्य तदाकारोपमर्द्देन स्वर्णात्मकत्वम्, एवं स्वरूपोपमर्दे सति प्रतीकस्यैवाभावात् तस्यात्मत्वमेव न स्यादिति तदप्ययुक्तं जीवस्य ब्रह्मशरीरतया तत्पर्य्यन्तत्वेन जीवभावप्रविलयेन विना ब्रह्मतादात्म्यसिद्धिवत् प्रतीकानामपि ब्रह्मशरीरत्वोपपत्तेस्तदभावप्रसङ्गाभावात् । अपरे तु वासो ददाति अन्नं ददातीत्यत्र तन्तुकाष्ठादीनामिव मनआद्युपासने ब्रह्मशब्दोदितत्वाभावादनुपास्यत्वमिति तदयुक्तं तत्र तन्तुकाष्ठादिनिर्द्देशाभावादिह तु ब्रह्मसामानाधिकरण्याच्च दृष्टान्तवैषम्यात् अतोऽनादरः । ननु दृष्टिविधित्वे सिद्धे हि ब्रह्म वा मनो वा दृष्टिविशेषणमिति विशयः प्रतीकस्यापि ब्रह्मशरीरतया तत्त्वोपासनपरत्वे सम्भवति कथमतत्त्वोपासनपरताऽङ्गीकारेण ब्रह्मणोदृष्टिविशेषणत्वपरं द्वितीयसूत्रं घटते? उच्यते इति-करणवैयर्थ्यं हेतुः उद्देश्यत्वज्ञापकेन प्रथमनिर्द्देशेन विशेष्यतावगमश्च क्वचित्प्रतीकगतद्वितीयाविभक्तिरपि हेतुः ॥ प्रतीकाधिकरणं समाप्तम् ॥

आदित्यादिमत्यधिकरणम् ।

## सू० आदित्यादिमतयश्चाङ्ग-उपपत्तेः ॥ ६ ॥

कू० "य एवासौ तपति तमुद्गीथमुपासीते"त्यादिषु कर्माङ्गाश्रयेषूपासनेषु संशयः किमुद्गीथादौ कर्माङ्गे आदित्यादिदृष्टिः कर्त्तव्या? उतादित्यादिषूद्गीथादिदृष्टिरिति, उत्क-

दृष्टिर्निकृष्टे कर्त्तव्येति न्यायात् उद्गीथादीनां च फलसाधनभूतकर्माङ्गत्वेनाफलेभ्य आदित्यादिभ्य उत्कृष्टत्वादादित्यादिषूद्गीथादिदृष्टिरिति प्राप्तेऽभिधीयते "आदित्यादिमतयश्चाङ्ग" इति, च-शब्दोऽवधारणे क्रत्वङ्ग उद्गीथादावादित्यादिदृष्टय एव कार्याः, कुतः ॥

टी० सू० आदित्यादिमतयश्चाङ्ग उपपत्तेः ॥ ६ ॥ देवताया उत्कर्षाद् दृष्टिविशेषणत्वमुक्तं, तदुत्कर्षाक्षेपेण कर्मण एवोत्कर्षशङ्कयाऽवान्तरसङ्गतिः, क्रत्वङ्गाश्रयोपासनेषु किमादित्यादावुद्गीथदृष्टिः? उतोद्गीथादावादित्यादिदृष्टिः? फलसाधनतयोत्कर्षः किमादित्यादेरुतोद्गीथादेः? उद्गीथादेश्चेदादित्यादावुद्गीथादिदृष्टिः, आदित्यादेश्चेदुद्गीथादावादित्यादिदृष्टिः कार्य्या स्यात्। ननु फलसाधनत्वं देवताया इति पूर्वमेव सिद्धं स एवैनं भूतिं गमयतीति तत्कथमुद्गीथादेः फलसाधनत्वशङ्कया पूर्वपक्षोत्थानं, सत्यं, फलसाधनतया विहितत्वात् प्रधानस्य कर्मणः काष्ठानां ज्वालावद्देवताप्रीतिरवान्तरव्यापारमात्रमित्यप्राधान्यमाशङ्क्यते ब्रह्ममतिवदादित्यादिमतयोऽपीति च-शब्दार्थः मनोब्रह्मेत्युपासीतेत्यत्रोपास्यं प्रथमं निर्दिष्टं दृष्टिविशेषणं चरमनिर्दिष्टम्, एवमत्रापि य एवासौ तपति तमुद्गीथमित्युद्गीथस्य चरमनिर्द्देशात् स दृष्टिविशेषणं देवतायां यच्छ्रुतियोगात् प्राथम्याच्चोद्देश्यत्वमित्यपि पूर्वपक्षयुक्तिरभिप्रेता। अफलेभ्यः—अफलसाधनेभ्यः, राद्धान्ते तु आदित्यादिदेवताराधनाद्वारेणेति "अर्यम्णे चरुं निर्वपेदित्यादि द्रष्टव्यं देवतायाः स्थिरत्वेनाव्यवहितसाधनतया लोकदृष्टसेव्यसेवान्यायेनाराधनस्याराध्यदेवताप्रधानत्वाच्च देवतोत्कर्षसिद्धेर्यच्छ्रुत्याद्यस्वारस्यं सोढव्यमिति भावः। परे तु उद्गीथादित्यादीनां दृष्टिविशेषणत्वमनियमेन स्यात् नियामकाभावादिति च पूर्वपक्षमाहुः नियामकसद्भावात् तदनादरः, एवं च पूर्वपक्षान्तरमाहुः उद्गीथादीनां कर्मसमवायितया क्रियारूपाणां फलसाधनतयोत्कर्षः इयमेवर्गग्निः सामेत्यत्र तदेतदस्यामृच्यध्यूढं सामेत्यृक्साम-शब्देन पृथिव्यग्न्यभिधा-

नन्व ऋक्सामाध्यासनिबन्धनं, इतरि हि राजाध्यासाद्राजशब्दो न राज्ञि तत्र-शब्दः, तत्र तदध्यासाभावात् लोकेषु पञ्चविधं सामोपासीतेति लोकानामधिकरणत्वश्रवणात् तत्र कृत्वङ्गाध्यासः पृथिवी हिङ्कार इति प्रथमनिर्देशाच्च पृथिव्यामुद्देशेन हिङ्कारत्वादिदृष्टिविधिरिति पूर्वपक्ष-हेतव उपन्यस्ताः। यदेव विद्यया करोति तदेव वीर्य्यवत्तरमिति विद्यया कर्मणो वीर्य्यवत्तरत्वं श्रुतं न सिद्धरूपद्रव्यस्य, अत आदित्यादिमतिभिरुद्-गीथादिकर्मस्वतिशय उपपद्यते न तूद्गीथादिमतिभिरादित्यादीनां कर्मणो ह्यपूर्वसन्निकर्षः, न त्वादित्यादीनामसाधितस्य करणत्वायोगात्, अतः कर्मस्वतिशयावहत्वादादित्यादिप्रधानकर्मफलस्यादित्यादिप्राप्तिलक्षण-त्वात् फलात्मकतया चादित्यादीनां प्राधान्यम्, ओमित्येतदक्षरमुद्गीथ-मुपासीतेत्युपक्रमे द्वितीयाश्रुत्योद्गीथादिरुपास्यत्वेनावगतः, इयमेवर्गिति एवकारोपश्लेषादृचि पृथिवीत्वं विधेयमवगतं, य एवं विद्वान् साम गा-यतीत्यङ्गाश्रयविज्ञानमुपसंहृतम्, अत आदित्यादेर्दृष्टिविशेषणत्वं पृथि-व्यामृक्-शब्दो लाक्षणिकः संबन्धमात्रमपेक्षते न तूत्कर्षमिति न तन्निब-न्धनः सामात्मना लोकमुपासीतेति विभक्तिद्वयविपरिणामादपि लोकात्मना सामोपासीतेति सप्तमीमात्रविपरिणामो वरं, पृथिवी हिङ्कार इत्यादि-

सू० उपपत्तेः—आदित्यादीनामेवोत्कृष्टत्वोपपत्तेः, आदित्या-दिदेवताराधनद्वारेण हि कर्मणामपि फलसाधनत्वम्, अतस्तद्दृष्टिरुद्गीथाद्यङ्गे । आदित्यादिमत्यधिकरणं समाप्तम् ॥

क्रमो बहूपपत्त्यनुरोधेन नेयः, अतोऽङ्गेष्वादित्यादिदृष्टिविधिरिति सिद्धा-न्तयन्ति, उपपत्तेरिति कस्योपपत्तिरित्यपेक्षायामुत्कर्षस्य पूर्वसूत्रप्रकृतत्वात् तस्योपपत्तेरिति व्याख्यानमुचितं न त्वर्थान्तरस्य, उत्कर्षश्च प्रागुक्तलक्षणः कर्मस्वतिशयाधायकत्वेन फलात्मकत्वेन च प्राधान्यमुत्कर्षान्तर्गतम् उद्-गीथेनोपक्रमः साम्नोपसंहारश्च सर्वेषु देवतादृष्टिविधिष्वननुगताविति व्यापक एव हेतुर्भाष्येऽभिहितः, लोकेषु पञ्चविधं साम सप्तविधं सामे-

त्यादिषु विभक्तिद्वयविपरिणामाभावादेव लोकस्य दृष्टिविशेषणत्वोपपादनं मन्दं, न हि द्वितीयाविभक्त्यर्थोऽनन्वितः लोकादिशब्दानां देवतापरत्वे प्रामाणिके सत्युत्कर्षादेव देवताया दृष्टिविशेषणत्वं न चेद्व्यथाप्रतिपन्नस्वीकारेऽप्यविरोधः पृथिवी हिङ्कार इत्यादिरप्येतेन व्याख्यातः, अतो भाष्योक्तप्रकारेण सारतरयुक्त्यभिप्रायं सूत्रम् । अन्ये तु फलसाधनतयोत्कर्षादेव पूर्वपक्षं कृत्वा एवं सिद्धान्तमाहुः उद्गीथादिष्वादित्यादिदृष्टिः कर्मसमृद्ध्यर्थेषूपासनेष्वधिकृताकारोपपत्तेः, आदित्यादीनां कर्माङ्गदृष्ट्योपास्यत्वे हि क्रत्वधिकृतेनैव कर्त्तव्यत्वनियमो न स्यात् तन्नियमश्च यदेव विद्यया करोतीति श्रुत्याऽवगम्यते "य एवासौ तपति तमुद्गीथमुपासीत य एवायं मुख्यप्राणस्तमुद्गीथमुपासाञ्चक्रिरे" इत्यादिषु यच्छब्दयोगप्राथम्याभ्यामुद्देश्यत्वावगमादादित्यादीनामुपास्यत्वमिति चेत् न ओमित्येतदक्षरमुद्गीथमुपासीतेत्युद्गीथोपास्यताया उपक्रमसिद्धत्वात् क्रत्वधिकृताकारोपपत्तेश्च कर्मसमृद्धिव्यतिरिक्तफलेष्वङ्गाश्रितेषूपासनेषु लोकेषु पञ्चविधं सामोपासीतेत्यादिषु क्रत्वधिकृताधिकारसम्बन्धे प्रमाणाभावात् न क्रत्वङ्गेषु देवतादृष्टिरिति नियमः, तत्रैवं निर्वाहः त्रिविधमुपासनं भूतार्थमध्यासः सम्पदिति, भूतार्थं यथार्थविषयं न तत्र किं चिन्निरूप्यम्, अध्यासोऽन्यस्मिन्नन्यधर्माध्यासः, यथोद्गीथेऽसुरपाप्मविध्वंसनादयः प्राणधर्मा भयतमोपहत्यादयः आदित्यधर्माः, अन्यसादृश्यानुसन्धानं संपत्, यथा पञ्चविधत्वसप्तविधत्वाद्यनुसन्धानं, तच्च वाक्येनैवोपपादनादवगम्यते, अध्याससम्पत्ती च निकृष्टगतधर्मतत्सादृश्यविषये चेदुपास्यं निकृष्टं कृतं स्यात्, उत्कृष्टगतधर्मतत्सादृश्यविषये चेदुपास्यमुत्कृष्टं कृतं स्यात्, ततो महत्कृतमेवोपास्यं तत्र दृष्टिविशेषणनिर्णयस्तु उपक्रमोपसंहारवाक्यशेषप्राथम्ययच्छब्दयोगमहत्त्वाद्यनुरोधेन वर्णनीयः लोकेषु पञ्चविधं सामोपासीतेत्यादिषु सामप्रतियोगिकं सादृश्यं लोकेषु विधीयते प्रथमनिर्दिष्टत्वात् सप्तम्याऽञ्जस्याच्च साम-शब्दः सामसादृश्यपरः लोकसामशब्दयोरन्यतरस्य लक्षणाया अवर्जनीयत्वेऽपि साम्नि लोकसादृश्ये विधित्सिते सप्तमी न घटते इयमेवर्गग्निरित्यत्रापि पृथिव्या ऋगात्म-

कत्वं विधित्सितं निर्द्देशप्राथम्यात् एवकारान्वयस्य उत्तर एव वेदिरित्यत्र व्यभिचारात् पृथिव्येव नान्यर्गस्तीति वाक्यशेषश्चेत् पृथिव्या ऋगात्मकत्वं विधेयं स्यात्, ऋक् पृथिव्येन न पृथिव्या अन्येति वाक्यशेषश्चेदृचः पृथिवीत्वविधानं स्यात् कर्मसमृद्ध्यर्थोपासनव्यतिरिक्तेषु न कर्माङ्गेषु देवतादृष्टिनियमः कर्मसमृद्ध्यर्थेषु तूपासनेषू क्रत्वङ्गेषु देवतादृष्टिरिति स्थितिरिति, अत्रापि क्रत्वङ्गव्यतिरिक्तेषु देवतादृष्टिनियमाभावोऽनुपपन्नः अध्याससम्पत्त्योर्विकृष्टधर्मादृश्यविषयत्वानुपपत्तेः स्वयमेव प्रतिपादितत्वात्, अतः क्रत्वङ्गविषयेष्वतद्विषयेषु चोपासनेषु देवताविवक्षायाः सुव्यक्तत्वे देवताया उत्कर्षादेव दृष्टिविशेषणत्वं, विवक्षाविरहे यथाश्रुताङ्गीकारश्च युक्त इति उत्कर्ष एवोपपत्तिशब्दविवक्षितो हेतुर्भवितुमर्हति । अर्थस्वाभाव्यात् प्रकृतत्वाच्च, अतः सर्वत्रोत्कर्षस्यैव दृष्टिविशेषणत्वे प्रयोजकत्वात् क्रत्वधिकृतानुष्ठेयत्वमप्रयोजकमित्युपपत्तिशब्दस्योत्कृष्टतोपपत्तिपरत्वमुक्तं भाष्ये, क्रत्वङ्गविषयेषु क्रत्वधिकृतानुष्ठेयत्वमप्यभ्युच्चयहेतुः स्यात्सर्वत्राप्युत्कर्षानुगुणमेव दृष्टिविशेषणत्वनिर्णयो युक्तः । आदित्यादिमत्यधिकरणं समाप्तम् ॥

आसीनाधिकरणम् । **सू० आसीनः सम्भवात् ॥ ७ ॥**

न्य० मोक्षसाधनतया वेदान्तशास्त्रैर्विहितं ज्ञानं ध्यानोपासनादिशब्दवाच्यम् असकृदावृत्तं सन्ततस्मृतिरूपमित्युक्तं, तदनुतिष्ठन्नासीनः शयानः तिष्ठन् गच्छंश्च विशेषाभावात् अनियमेनानुतिष्ठेदिति प्राप्ते उच्यते "आसीन इति, आसीन उपासनमनुतिष्ठेत् कुतः सम्भवात् आसीनस्यैव ह्येकाग्रचित्ततासम्भवः स्थितिगत्योः प्रयत्नसापेक्षत्वात्, शयाने च निद्रासम्भवात् पश्चाद्धारणप्रयत्ननिवृत्तये साश्रय आसीनः कुर्यात् ॥

## सू० ध्यानाच्च ॥ ८ ॥

निदिध्यासितव्य इति ध्यानरूपत्वादुपासनस्यैकाग्रचित्तताऽवश्यम्भाविनी, ध्यानं हि विजातीयप्रत्ययान्तराव्यवतमेकचिन्तनमित्युक्तम् ॥

टी० सू० आसीनः सम्भवात् ॥ ७ ॥ अवान्तरसङ्गतिमाह "मोक्षे"ति, अनन्तराधिकरणयोः प्रासङ्गिकत्वात् परमप्रकृतेन प्रधानभूतेन ब्रह्मोपासनेन सङ्गतिरुक्ता । यद्वा दृष्ट्युपासनानामप्यासनसापेक्षत्वेऽप्यासनसमर्थनहेतोरैकाग्र्यस्याद्याधिकरणसमर्थितत्वात् तेन सङ्गतिरुक्ता किमासीनश्चिन्तयेत्? उतासीनः शयानस्तिष्ठन् गच्छन् वे? ति, किं गमनादिषु ध्यानं सम्भवति न वेति सम्भवति चेदासनानियमः न सम्भवति चेत्तन्नियमः, उपासनसम्भवादित्यतोऽप्येकाग्रतासम्भवादित्युचितम्, उपासनसम्भवादित्युक्तेऽपि कथमित्यपि शङ्कायां एकाग्रताभिप्रायेण शमयितव्यत्वात्, यत्रैकाग्रतेत्यैकाग्रतायाः सन्निहितत्वात् योग्यत्वाच्च, उपविश्यासने युञ्ज्यादिति स्मृतिवचनस्य मनोऽनुकूलताभिप्रायतां मत्वा पूर्वपक्षी प्रत्यवतिष्ठते तदवश्यं भावात्तत्परिहारः । सू० ध्यानाच्च ॥ ८ ॥ ध्यानादिति भावप्रधाननिर्देश इत्यभिप्रायेणोक्तं ध्यानरूपत्वादिति, स्थितिगत्योर्विजातीयप्रत्ययसम्भवात्तदैकाग्र्यविरोधिगत्यादिकमित्यर्थः ॥

## सू० अचलत्वं चापेक्ष्य ॥ ९ ॥

सू० निश्चलत्वं चापेक्ष्य पृथिव्यन्तरिक्षादिषु ध्यानवाचोयुक्तिर्दृश्यते "ध्यायतीव पृथिवी ध्यायतीवान्तरिक्षं ध्यायतीव द्यौः ध्यायन्तीवापो ध्यायन्तीव पर्वताः", इति, अतः पृथिवीपर्वतादिवदेकाग्रचित्ततया निश्चलत्वमुपासकस्यासीनस्यैव सम्भवेत् ॥

## सू० स्मरन्ति च ॥ १० ॥

स्मरन्ति चासीनस्यैव ध्यानं "शुचौ देशे प्रतिष्ठाप्य स्थिरमासनमात्मनः । नात्युच्छ्रितं नातिनीचं चैलाजिनकुशोत्तरम् । तत्रैकाग्रं मनः कृत्वा यतचित्तेन्द्रियक्रियः । उपविश्यासने युञ्ज्याद्योगमात्मविशुद्धये" इति, ॥

## सू० यत्रैकाग्रता तत्राविशेषात् ॥ ११ ॥

एकाग्रतातिरिक्तदेशकालविशेषाश्रवणादेकाग्रतानुकूलो यो देशः कालश्च स एवोपासनस्य देशः कालश्च, "समे शुचौ देशे शर्करावह्निवालुकादिविवर्जिते" इति वचनमेकाग्रतैकान्तदेशमाह न तु देशं नियच्छति, मनोऽनुकूल इति वाक्यशेषात् ॥ आसीनाधिकरणं समाप्तम् ॥

टी० सू० अचलत्वं चापेक्ष्य ॥ ९ ॥ आप इति स्थिरं तटाकादिजलं विवक्षितं निश्चलत्वमात्रं साम्यं विवक्षितं निश्चलत्वमैकाग्र्याद् भवति, तच्चासीनस्यैव गत्यादौ विजातीयप्रत्ययेन चलनसंसम्भवादित्यर्थः । सू० स्मरन्ति च ॥ १० ॥ न केवलमर्थसामर्थ्याद्वचनादपि तत्सिद्धिरित्यर्थः । सू० यत्रैकाग्रता तत्राविशेषात् ॥ ११ ॥ स एवोपासनस्य देशः कालश्चेति, तिथिनक्षत्रादिनियमो नास्तीत्यर्थः, वर्णाश्रमधर्मविरुद्धकालविशेषसम्भवात् आसनसहपठितो देशादिरप्यैकाग्र्यसिद्ध्यर्थमपेक्ष्यते किं पुनरासनमिति सूत्राभिप्रायः । इतरे त्रयोऽपि यत्रैकाग्रतेति सूत्रमधिकरणान्तरमाहुः, वैदिककर्मसु देशकालादिनियमदर्शनादुदगयनादिपर्यग्रह इति पूर्वपक्षं कृत्वा न नियम इति सिद्धान्तयन्ति, उक्तप्रकारेण पूर्वाधिकरणशेषत्वोपपत्तेर्नाधिकरणान्तरत्वं युक्तम् ॥ आसीनाधिकरणं समाप्तम् ॥

आप्रयाणाधिकरणम् ।

## सू० आप्रयाणात्तत्रापि हि दृष्टम् ॥ १२ ॥

सू० तदिदमपवर्गसाधनमुक्तलक्षणोपासनमेकाह एव सम्पाद्यम्? उताप्रयाणात्प्रत्यहमनुवर्त्तनीय? मिति विषये एकस्मिन्नेवाहनि शास्त्रार्थस्य कृतत्वात्तावतैव परिसमापनीयमिति प्राप्ते उच्यते—आप्रयाणादिति, आमरणादनुवर्त्तनीयं, कुतः तत्रापि हि दृष्टम्—उपासनोद्योगप्रभृत्याप्रयाणान्मध्ये यः कालस्तत्र सर्वत्रापि "दृष्टमुपासनं स खल्वेवं वर्त्तयन् यावदायुषं ब्रह्मलोकमभिसंपद्यत" इति । आप्रयाणाधिकरणं समाप्तम् ॥

टी० सू० आप्रयाणात्तत्रापि हि दृष्टम् ॥ १२ ॥ सङ्गत्यादि स्पष्टम्, उक्तलक्षणमुपासनं किमेकस्मिन्नहनि कर्त्तव्य? मुताप्रयाणादि? ति किमेकादिनानुष्ठानेन शास्त्रार्थस्य कृतत्वं नेति? कृतत्वं चेदेकस्मिन्नहनि कर्त्तव्यं न चेदाप्रयाणात् कर्त्तव्यमिति । परे तु साक्षात्कृतात्मतत्त्वस्यानियोज्यत्वात् अनुवर्त्तयेदिति शासनमशक्यम् अतोऽभ्युदयफलोपासनविषयेयं चिन्तेति, तदयुक्तं यावदायुषमेवं वर्त्तयन् ब्रह्मलोकमभिसंपद्यते न च पुनरावर्त्तते प्रायणान्तमोङ्कारमभिध्यायीतेत्यत्रापुनरावृत्तिलक्षणमोक्षसाधनविद्यास्वेवाप्रयाणादनुवृत्तेः श्रुतत्वात्, यावच्छरीरपातं शास्त्रवश्यत्वादनियोज्य इति चायुक्तम् अन्तिमप्रत्ययस्य मोक्षहेतुत्वदर्शनात् तदौपयिकाहारशुद्ध्यादिसापेक्षत्वाच्च शास्त्रवश्यत्वमवर्जनीयं, न चान्तिमप्रत्ययशास्त्रममुमुक्षुविषयं मुमुक्षुविषयतयैव प्रतिपादितत्वात्, प्रयाणकाले मनसेत्यारभ्य स तत्परम्पुरुषमुपैति दिव्यमिति ह्युच्यते, न च साक्षात्कृततत्त्वस्य भेददर्शनाभावाच्चान्तिमप्रत्ययापेक्षेति वाच्यं देहपोषणादिषु प्रवृत्तिदर्शनात् तेषु मिथ्यात्वज्ञानमस्तीति चेत् तथाऽप्यन्तिमप्रत्ययः कार्य्य एव तद्वैकल्पेन ह्यादिभरतस्य मृगत्वप्राप्तिः न च तस्य देहादिषु मिथ्यात्वधीर्नास्तीति वाच्य विप्रजन्मनि पूर्वार्जितज्ञानातिरिक्तज्ञानाभावात्, अतः शास्त्रवश्यत्वमस्त्येव । किञ्च किमिदमशास्त्रवश्यत्वं नाम किमुच्चार्य्यमाणमपि शास्त्रं भेद-

बुद्ध्यभावान्न शृणोति ? उत शृण्वन्नपि नार्थं प्रत्येति ? उत सत्यामप्यर्थप्रतीतौ ब्राह्मण्याद्युपाधेः कर्तृत्वादेश्चाभावान्नाहं कर्मवश्य इति जानाति ? अर्थे प्रतीतेऽपि क्रियानुतिष्ठति ? उतानुतिष्ठतो न प्रत्यवायः ? उतेष्टानिष्टप्राप्तिनिवृत्ती नेच्छतीति, न प्रथमद्वितीयौ प्रतिबुद्धतत्त्वानां वसिष्ठादीनामप्युक्तिप्रत्युक्तिदर्शनात्, न तृतीयः आत्मनि ब्राह्मण्याद्यभावेऽप्युपाधेरनुवृत्तत्वात् तदभावज्ञानवतां वसिष्ठजनकभीष्मादीनामनुष्ठानदर्शनाच्च, न चतुर्थः, अज्ञस्याननुतिष्ठतोऽप्यशास्त्रवश्यत्वप्रसङ्गात्, न पञ्चमः आदिभरतादीनां प्रत्यवायदर्शनात् विप्रजन्मनि सतां मार्गमदूषयन्निति वचनाच्च, न षष्ठः, अमुमुक्षुत्वप्रसङ्गात् बन्धनिवृत्तीच्छा हि मुमुक्षा, मुक्तस्य न मुमुक्षेति चेन्न क्षुदाद्युपशमाय प्रवृत्तिदर्शनात् । अतोऽनुक्तिविधिवश्यत्वादाप्रयाणात् परविद्याऽनुवर्त्तनीया ॥ अन्ये तु साक्षात्कारफलत्वादुपासनस्य तत्पर्यन्तत्वमिति पूर्वपक्षयन्ति तदयुक्तं परमपुरुषप्रीतिफलकत्वादुपासनस्य प्रीतेश्च यथाशास्त्रमनुष्ठानजन्यत्वात्, अतः शास्त्रार्थस्य कृतत्वादित्येव पूर्वपक्षयुक्तिर्युक्ता । अत एव सिद्धान्तेऽपि साक्षात्कारमात्रफलकत्वाभ्युपगमेनान्तिमप्रत्ययसिद्ध्यर्थमनुवर्त्तनीयतोक्तिरपि न युक्ता किंतु यथाशास्त्रमनुष्ठानसिद्ध्येऽनुवर्त्तनीयत्वमेव वक्तव्यम् ॥ आप्रयाणाधिकरणं समाप्तम् ॥

तदधिगमाधिकरणम् ।

## सू० तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात् ॥१३॥

वृ० एवं विद्यास्वरूपं विशोध्य विद्याफलं चिन्तयितुमारभते ब्रह्मविद्याप्राप्तौ पुरुषस्योत्तरपूर्वाघयोरश्लेषविनाशौ श्रूयेते तद्यथा पुष्करपलाश आपो न श्लिष्यन्त एवमेवं विदि पापं कर्म न श्लिष्यते तस्यैवात्मा पदवित्तं विदित्वा न कर्मणा लिप्यते पापकेने"त्युत्तराघाश्लेषः, तद्यथेषीकातूलमग्नौ प्रोतं प्रदूयेतैवं हास्य सर्वे पाप्मानः प्रदूयन्ते क्षीयन्ते चास्य

कर्माणि तस्मिन् दृष्टे परावरे” इति पूर्वाघविनाशः, एताव-श्लेषविनाशौ विद्याफलभूतावुपपद्येते नेति संशयः किं युक्तं नोपपद्येते इति कुतः “नाभुक्तं क्षीयते कर्म कल्पकोटि-शतै”रपीत्यादिशास्त्रविरोधात् ॥

टी० सू· तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात् ॥ १३ ॥ पेटिकासङ्गतिमाह “एवमि”ति, उपायभूतोपासनस्य उपास्यनिरतिशयप्रियत्वेन स्वयमपि प्रियरूपत्वादुपेयरूपत्वमप्यस्तीत्यत्र तन्निरूपणं कृतं “दह्यमानो महोरगैर्न विवेदात्मनो गात्रं तत्स्मृत्याऽऽह्लादसंस्थितः । तच्चित्तविमलाह्लादक्षीणपुण्यचयस्तदे”त्यादिभिः प्रीतिरूपत्वं ह्यवगम्यते, ब्रह्मविद्याप्राप्ताविति ब्रह्मविद्याप्राप्तिः साक्षात्कारावस्थोपासनलब्धिर्विवक्षिता तस्मिन् दृष्टे क्षीयन्त इति हि विषयवाक्यं प्राप्तिरूपक्रमः विद्या-प्राप्ति-शब्दः साधारण्यात् प्रपदननिष्पत्तेरपि द्योतकः संश्लिष्टस्य पूर्वाघस्याश्लेषायोगाद्विनाश एव उत्तराघस्य त्वश्लेष एवेति योग्यतावशाद्विभागः ॥

सू० अश्लेषविनाशव्यपदेशस्तु मोक्षसाधनभूतविद्याविधायिवाक्यशेषगतः कथंचिद्विद्यास्तुतिप्रतिपादनेनाप्युपपद्यते, न च विद्या पूर्वोत्तराघयोः प्रायश्चित्ततया विधीयते येन प्रायश्चित्तेनाघविनाश उच्यते, विद्या हि “ब्रह्मविदाप्नोति परं ब्रह्म वेद ब्रह्मैव भवती”ति ब्रह्मप्राप्त्युपायतया विधीयते, अतो विद्यार्थवादोऽयमघविनाशाश्लेषव्यपदेश इत्येवं प्राप्तेऽभिधीयते—तदधिगम इति, विद्याप्राप्तौ पुरुषस्य विद्यामाहात्म्यादुत्तरपूर्वाघयोरश्लेषविनाशावुपपद्येते । कुतः एवंविधं हि विद्यामाहात्म्यमवगम्यते, एवंविदि पापं कर्म न श्लिष्यते एवं हास्य सर्वे पाप्मानः प्रदूयन्ते इत्यादि-

व्यपदेशात्, न च नाभुक्तं क्षीयते कर्मेत्यनेन शास्त्रेणास्य विरोधः, भिन्नविषयत्वात्तद्धि कर्मणां फलजननसामर्थ्यद्रढिमविषयम् एतत्तूत्पन्नाया विद्यायाः प्राक्कृतानां पाप्मनां फलजननशक्तिविनाशसामर्थ्यम् उत्पत्स्यमानानां च फलजननशक्त्युत्पत्तिप्रतिबन्धकरणसामर्थ्यं च प्रतिपादयतीति द्वयोर्विषयो भिद्यते, यथाऽग्निजलयोरौष्ण्यतन्निवारणसामर्थ्यविषययोर्द्वयोः प्रमाणयोरपि विषयभेदात्प्रामाण्यम्, एवमत्रापीति न कश्चिद्विरोधः ।

टी० अश्लेषविनाशप्रतीतिसंशयाभावात् तयोरुपपत्त्यनुपपत्तिविषयः संशय उक्तः, किं विदुष उत्तरपूर्वाघयोरश्लेषविनाशौ सम्भवतो ने?ति किमश्लेषविनाशशास्त्रे यथाश्रुतार्थपरे? उत नाभुक्तं क्षीयत इत्यनेन विरोधात् विद्यास्तुत्यर्थतया नेये? किमश्लेषविनाशशास्त्रयोरभुक्तकर्मापरिक्षयशास्त्रस्य च विरोध एव? उताविरोधः सम्भवति? विरोध एवचेद्विद्यास्तुत्यर्थत्वादश्लेषविनाशासंभवः, अविरोधसंभवे शास्त्रस्य यथाश्रुतार्थपरत्वादश्लेषविनाशसंभव इति नाभुक्तमित्यादिना पूर्वपक्षोपन्यासः अननुभवेऽपि कर्मणां प्रायश्चित्तेन विनाशो दृश्यत इत्यत आह "न चे"ति, एवं प्राप्त इति । नाभुक्तमित्यादिवचनविरोधं परिहरति "न चे"ति, अत्र शक्तिशब्दः कर्मानुष्ठानजनितभगवन्निग्रहपरः भिन्नविषयत्वेन वचसोरविरोधे दृष्टान्तमाह "यथे"ति, अश्लेषविनाशौ विवृणोति "अघस्ये"ति ।

सू० अघस्याश्लेषकरणं वैदिककर्मायोग्यता वासनाप्रत्यवायहेतुशक्त्युत्पत्तिप्रतिबन्धकरणम्, अघानि हि कृतानि पुरुषस्य वैदिककर्मायोग्यतां सजातीयकर्मान्तरारम्भरुचिं प्रत्यवायं च कुर्वन्ति, अघस्य विनाशकरणमुत्पन्नायास्तच्छक्तेर्विनाशकरणं, शक्तिरपि परमपुरुषाप्रीतिरेव, तदेवं

विद्या वेदितुर्वेद्यात्यर्थप्रियत्वेन स्वयमपि निरतिशयप्रियासती वेद्यभूतपरमपुरुषाराधनस्वरूपा पूर्वकृताघसञ्चयजनितपरमपुरुषाप्रीतिं विनाशयति, सैव विद्या स्वोत्पत्त्युत्तरकालभाव्यघनिमित्तपरमपुरुषाप्रीत्युत्पत्तिं च प्रतिबध्नाति, तदिदमश्लेषवचनं प्रामादिकविषयं मन्तव्यं, नाविरतोदुश्चरितादित्यादिभिः शास्त्रैराप्रयाणादह–

टी० उत्पत्स्यमानायाः उत्पत्स्यमानस्य कर्मणः स्वकार्य्यकरणशक्तेः प्रतिबन्धः–अश्लेषः, उत्पन्नस्य कर्मणः उत्पन्नायाः कार्य्यकरणशक्तेर्विनाशकरणं विनाश इत्यर्थः । शक्ति–शब्दार्थमाह "शक्तिरपी"ति एतदुपपन्नमित्याह "तदेव"मिति, ब्रह्मानुभवस्य स्वतःप्राप्तत्वेनासाध्यत्वात् प्रतिबन्धनिवृत्तिरूपसाध्ये प्रायश्चित्ततुल्यैव ब्रह्मविद्या, स्वर्गादेः साध्यत्वात्तत्साधनस्य कर्मणो न प्रतिबन्धनिवर्त्तकत्वम् अत्र तु प्रतिबन्धनिवृत्तेरेव साध्यत्वाद्विद्यायास्तद्धेतुत्वं युक्तमित्यर्थः । तर्हि ब्रह्मविदो निषेधशास्त्रवश्यत्वं न स्यादित्यत्राह "तदिद"मिति, । ननु ब्रह्मविद्याया अपि पापप्रायश्चित्तत्ववचनात् कृच्छ्रादीनामिव बुद्धिपूर्वपापनिवर्त्तकत्वमपि स्यात्, नैवं प्रामादिकाघप्रायश्चित्तत्वेनैव तद्विधानात्, "अपि चेत्पातकं किंचिद्योगी कुर्य्यात् प्रमादतः । योगमेव निषेवेत नान्यं यत्नं समाचरेदि"ति, ह्युच्यते। ननु पूर्वं शरीरपातानन्तरं कर्मक्षय उक्तः, अत्र तूपासनारम्भे कर्मप्रहाणमुक्तं कथमिदमुपपद्यते–उच्यते उपासनारम्भसमाप्त्योर्भगवत्प्रीतिविशेषाभिप्रायत्वात् अधिकरणद्वयाविरोधः । उपासनारम्भप्रीतः परमात्मा तत्समाप्तावुपासकस्याघं क्षमिष्यामीति सङ्कल्पयति, समाप्तौ तु क्षान्तमिति, सङ्कल्पयति, अतोऽधिकरणद्वयार्थं उपपन्नः । परे तु ज्ञानस्याविधेयत्वेन कर्मक्षयोद्देशे न विद्यायाः ।

सू० रहत्पद्यमानाया उत्तरोत्तरातिशयभागिन्याः विद्यायाः

दुश्चरितविरतिनिष्पाद्यत्वावगमात् ॥ तदधिगमाधिकरणं समाप्तम् ॥

टी० प्रायश्चित्तकर्मवद्विधानाभावात्तया कथं कर्मक्षय उक्त इत्याशङ्क्य सगुणविद्यायां तावद्विधानमस्ति निर्गुणविद्यायामपि वस्तुसामर्थ्यात् कर्मक्षयः कालत्रयेऽपि नाहं कर्त्ता भोक्तेत्यवगमादिति परिहरन्ति तदयुक्तं नाहं कर्ता नाहं भोक्तेति ज्ञाने सत्यपि चन्दनेन कण्टकेन स्वदेहं लिम्पतस्तुदतश्च पुरुषस्य लेपतोदकर्मकृतसुखदुःखादेरन्वयदर्शनात्, साक्षात्कारवतो न सुखाद्यन्वय इति चेत् न "व्युत्थानकाले राजेन्द्र आस्ते हेयतिरोहित इति योगव्युत्थाने हेयसुखदुःखाद्यन्वयस्य प्रामाणिकत्वात् निर्गुणविद्याया अप्रामाणिकत्वाच्च बन्ध्यासुतस्य व्याधिपरिहारवद् व्यर्थः प्रयासः कर्मफलभोगानवश्यम्भावेऽपि देशकालनिमित्तापेक्षो मोक्ष इति पूर्वपक्षिणोक्ते तथा चेत् कर्मफलवदनित्यत्वप्रसङ्ग इति सिद्धान्तिना परिहारश्चानुपपन्नः निवर्त्तकज्ञानोदयानन्तरभाविन्या अविद्यानिवृत्तेरनित्यत्वप्रसङ्गात्, प्रागप्यविद्यानिवृत्तिरस्ति चेत् शास्त्रवैयर्थ्यम् । अपरे तु नाभुक्तमिति स्मरणमविद्वद्विषयमित्याहुः तद्भाष्योक्तविषयव्यवस्थाफलं विद्यायाः कर्मणां फलोत्पादनशक्तिविनाशसामर्थ्ये ह्युक्ते कर्मणां फलजननसामर्थ्यं विद्यारहितेषु भवतीति ज्ञायते अविद्वद्विषयत्वमूलेऽभिहिते तद्विषयत्वं सिध्यतीति भाष्ये मूलयुक्तिरुक्ता । अन्ये त्वाहुः अघफलं द्विविधं लेपो विपाकश्चेति, तत्र लेपोऽप्रायत्यं स्नानाद्यनेयं, विपाको–नरकपातादिः, सुकृतस्यापि लेपो महत्त्वपङ्क्तिपावनत्वशापानुग्रहसामर्थ्यकाम्यकर्मरुचिरूपः, विपाकः–स्वर्गादिः तत्र महत्त्वं नाम सवनगतौ क्षत्रियवैश्यौ हत्वा ब्रह्महा भवति अग्निर्वै दीक्षितस्तस्मादेनं नोपस्पृशेदित्यवगम्यते, तत्र लेपः स्वसामर्थ्यप्रसूतं फलं विपाको नैयोगिकफलम्, एवं ज्ञानस्यापि स्वसामर्थ्यप्रभावितं नैयोगिकं चेति फलं हि द्विविधं, तत्र पुरुषशुद्धिलक्षणेन महात्म्यशब्दवाच्येन कल्मषविरोधिना पूर्वकल्पषविनाशः, उत्तराघानामप्रायत्यकरणरूपसंश्लेषविघातश्च, ज्ञानस्य नैयोगिकफलं तु देहपातेऽनिमप्रत्ययसापेक्षं सुकृतदुष्कृतप्रहाणं ब्रह्मभावाविष्करणं च,

उत्तरेषामघानामश्लेष एव न विनाशः, अत एव सुकृतदुष्कृते धूनुते तस्य प्रिया ज्ञातयः सुकृतमुपयन्त्यप्रियादुष्कृतमिति धूननवचनमप्रियज्ञात्युपायनवचनं चोत्तराघविषयमिति । अत्रोच्यते यद्यपि कर्मणामधिकारानधिकारसजातीयकर्मान्तररुचिस्वर्गनरकादिफलविभागोऽस्ति तथाऽपि सामर्थ्यप्रभावितनैयोगिकफलविभागो नोपपन्नः भगवत्प्रीत्यप्रीतिव्यतिरेकेण सामर्थ्याभावान्नियोगाभावाच्च तद्व्यतिरेकेण सामर्थ्यनियोगाभ्युपगमेऽप्यश्लेषवचनस्य लेपविघातमात्रविषयत्वं धूननोपायनवचनयोरुत्तराघमात्रविषयत्वं चानुपपन्नं, तथा हि उत्तराघस्य विपाकहेतुर्शक्तिरुत्पन्ना न वा न चेल्लेपविघातोऽश्लेष इति विश्ले[1]षोपादनवैयर्थ्यं स्यात्, अस्मदीयपक्षः परिगृहीतश्च भवेत्, उत्पत्तिपक्षे क्रियोत्तीर्णा कर्मशक्तिरात्मधर्मभूता परमात्मप्रीत्यप्रीतिरूपा वा स्यात्, उभयथाऽप्यश्लेषवचनमनुपपन्नं स्यात्, आत्मधर्मत्वे तत्समवेतत्वात् परमात्मप्रीत्यप्रीत्योश्चेतनविषयत्वाच्च, विपाकशक्तेः श्लेषस्त्विष्टः लेपविघात एवाश्लेषरूपतयाऽभिमत इति चेत् तर्ह्यश्लेषवचनसङ्कोचः स्यात्, सुकृतदुष्कृते धूनतइति धूननश्रवणबलादवर्जनीयः सङ्कोच इति चेत् तर्ह्यनुत्पन्नस्य धूननायोगाद्विपाकशक्त्युत्पत्तिकल्पनगौरवं च स्यात्, न चानुत्पन्नस्य धूननायोगात्तदुत्पत्तिः कल्पनीया भवेत् उत्पन्नस्याप्यदृष्टस्य पांसुभसितकरीषादिवत् संयोगविभागार्हद्रव्यत्वाभावाद्धूननानुपपत्तेस्तत्कल्पनवैयर्थ्यात् धूनन–शब्देन विनाशो लक्ष्यत इति चेत् न विनष्टस्य प्रियाप्रियज्ञातिपरिग्रहायोगात् पुरुषगतादृष्टविनाशेऽपि प्रियाप्रियेषु नष्टसजातीयादृष्टान्तरोत्पत्तिरेव तत्संक्रमणमिति चेत् कर्तृगतादृष्टविनाशस्य पुरुषान्तरगतादृष्टान्तरोत्पत्तेश्च किं कर्मस्वभाव एव कारणं, तर्हि सर्वेषां सर्वाणि कर्माणि नश्येयुः पुरुषान्तरेष्वदृष्टं जनयेयुश्च, ततश्च कर्तृणां भोगाभावोऽन्येषां भोगनियमश्च स्यात् अभुक्तफलस्याकृतप्रायश्चित्तस्य कर्मणोऽयं स्वभाव इति चेत् तर्हि द्वादशवार्षिकादिषु केनचिदननुष्ठितेषु तद्विषयतां ब्रह्महत्यादिदोषान्वयेन संव्यवहारादिषु वहिष्कार्य्यता स्यात्, यद्युच्येत नात्र कर्मस्वभावः कारण-

१ विश्लेषोपादानमिति पा० ।

मपि तु परविद्यामाहात्म्यमेव तत्तु विद्वद्गतं पूर्वाघं विनाश्य तदप्रियेषु तादृशमघं जनयतीति तद्वदुत्तराघप्रतिबन्धं प्रियाप्रियेषु तादृशादृष्टं च विद्या करोतीत्यपगमो वरं, तथा सति उत्पत्तिकल्पनगौरवाभावात्, एवं च धूननोपायनयोरुत्तरोत्तमात्रविषयत्वनिर्बन्धो निर्निबन्धनः स्यात्, विदुषः पूर्वाघविनाशने ज्ञातिषु तादृशाघजनने च विद्यासामर्थ्यस्योपपन्नत्वात्, एवं च सति सुकृतदुष्कृते धूनुत इत्यत्र सुकृतदुष्कृतशब्दयोरसङ्कोचः स्यात्, अन्यथा सङ्कोचो निर्निबन्धनः स्यात्, नष्टस्य कर्मणोऽन्यत्र संक्रमणायोगरूपस्य सङ्कोचहेतोः परिहृतत्वात्। पुरुषान्तरे तादृगदृष्टान्तरोत्पत्तिरुपायनमिति त्वयैव ह्युक्तम्, इयान्विशेषः एकस्मिन् पक्षेऽश्लेषवचनस्य धूननोपायनवचनयोश्च सङ्कोचो विपाकशक्त्युत्पत्तिकल्पनगौरवं च, पक्षान्तरे तु सर्वश्रुत्यसङ्कोचो लाघवं चेति, अत्रायमर्थोऽनुसन्धेयः विदुषः कर्मणां चतस्रोऽवस्थाः श्रुताः विनाशोऽश्लेषो धूननमुपायनं चेति, क्रियामात्रविनाशस्य लोकसिद्धत्वात् क्रियाया अश्लेषधूननसंक्रमणानामयोग्यत्वाच्चावस्थाचतुष्टयं क्रियोत्तीर्णशक्तिविषयं निर्णीतं, सा च शक्तिरिष्टानिष्टफलदित्सालक्षणपरमात्मप्रीत्यप्रीतिरूपा, अन्यथा श्रुतहानाश्रुतकल्पनप्रसङ्गादिति प्रागेवोपपादितं, तत्र विनाशश्लेषवचनयोः पूर्वोत्तराघविषयत्ववदुपायनवचनस्य पुरुषान्तरे तत्समानादृष्टोत्पत्तिविषयत्वं चार्थसामर्थ्यात् सर्वैरभ्युपगन्तव्यम्। अश्लेषवचनं च कृत्स्नोत्तराघविषयम् असङ्कोचस्य स्वतःप्राप्तत्वात् अश्लेषश्च प्रतिबद्धोदयत्वम् उत्पत्तिकल्पनगौरवात् तत्कल्पनेऽपि धूननसंक्रमणायोगात्, एवं च विद्यायाः पूर्वाघविनाशने उत्तराघप्रतिबन्धे प्रियाप्रियेषु सजातीयादृष्टजनने सामर्थ्यं च सिद्धम्। एवं विद्याया विनष्टप्रतिबद्धादृष्टसजातीयादृष्टजननसामर्थ्यादुपायनश्रुतिश्च नोत्तराघमात्रविषया अपि तु पूर्वोत्तराघविषया स्यात् तथा चोपनयनवाक्यस्थसुकृतदुष्कृतशब्दासङ्कोचश्च भवेत्, तत्र विनाशो भगवतः पूर्वोत्पन्नकर्मफलदित्सानिवृत्तिः, अश्लेषश्च उत्तरकर्मफलदित्साप्रतिबन्धः, तौ च यद्यर्थोपहितौ यद्ययं प्रक्रान्तमुपासनं समापयेत् पूर्वोत्तरयोः कर्मणोः फलं न दास्यामीति सङ्कल्परूपौ हि तौ, समाप्ते तु

कर्मफलं नैव दास्यामीति सङ्कल्पो विधूननमृत्यभिप्रेतः, लोके सेवारम्भ-समापनयोः प्रीतितारतम्यदर्शनात् । शास्त्रेषु तीर्थसेवाद्युपक्रमसमापनयोः फलतारतम्यदर्शनाच्च । लोके राजादीनामिव परमात्मनोऽपि स्वसेवकविषयप्रीत्यतिशयेन तत्प्रियाप्रियजनेषु तदनुरूपेष्टानिष्टफलदित्सा च भवति, एवं पूर्वोत्तराघविनाशप्रतिबन्धधूननोपायनहेतुर्विद्यामाहात्म्यमिति ॥ तदधिगमाधिकरणं समाप्तम् ॥

इतराधिकरणम् । **सू० इतरस्याप्येवमसंश्लेषः पाते तु ॥ १४ ॥**

सू० उत्तरपूर्वाघयोर्विद्ययाऽश्लेषविनाशावुक्तौ, इतरस्य पुण्यस्याप्येवमुक्तेन न्यायेनाश्लेषविनाशौ विद्यया स्यातां विद्याफलविरोधित्वसामान्याद् व्यपदेशाच्च, भवति च व्यपदेशः उभे सुकृतदुष्कृते निर्दिश्य "सर्वे पाप्मानोऽतो निवर्त्तन्त" इति, "तत्सुकृतदुष्कृते विधूनुत" इति च मुमुक्षोरनिष्टफलत्वात्सुकृतस्यापि पाप्म-शब्देन व्यपदेशः ।

टी० सू० इतरस्याप्येवमसंश्लेषः पाते तु ॥ १४ ॥ अवान्तरसङ्गतिः स्फुटा, इतरस्याप्यसंश्लेष इति प्रतिज्ञानिर्देशः, एवमिति न्यायातिदेशः, उत्तरपूर्वसुकृतयोरश्लेषविनाशौ किं सम्भवतो नेति किं पापं कर्म न श्लिष्यते सर्वे पाप्मानः प्रदूयन्त इति वाक्यद्वयं सुकृतदुष्कृताश्लेषविनाशपरम्? उत दुष्कृतमात्राश्लेषविनाशपरं? किमत्र पापकर्म-शब्दो निषिद्धपरः उत विद्याविरोधिफलकर्मपरः? सर्वे पाप्मान इति वाक्यं किं पापशब्दस्य विद्याविरोधिफलकर्मपरतामवगमयति? ने? ति न सुकृतं न दुष्कृतं सर्वे पाप्मानोऽतो निवर्त्तन्ते इति हि श्रूयते, न चेत् पापशब्दस्य निषिद्धमात्रपरतया वाक्ययोर्दुष्कृतमात्राश्लेषविनाशपरत्वाच्च सुकृताश्लेषविनाशसम्भवः, अवगयति चेत् पापश-ब्दस्य विद्याविरोधिफल-

कर्मपरत्वेन वाक्ययोः सुकृतदुष्कृताश्लेषविनाशपरत्वात् पूर्वोत्तरसुकृतयोरश्लेषविनाशसंभव इति, । एवं-शब्दं व्याचष्टे "उक्तेने"ति, उक्तन्यायं विवृणोति "विद्याफले"ति, एवं-शब्देन पूर्वसूत्रानुकृष्टस्यापदेश-शब्दार्थमुपपादयति "भवति चे"ति, पुण्यस्यापि पाप्म-शब्दवाच्यत्वे श्रुतिं दर्शयति "उभे" इति, उभयोः पृथगभिधाने श्रुतिमाह "तत्सुकृते"ति, अतिदेशस्याधिकाशङ्कामाह--

सू० सुकृतस्यापि शास्त्रीयत्वात्तत्फलस्य केषांचिदिष्टत्वदर्शनाच्च विद्यया अविरोधशङ्कां निवर्त्तयितुमतिदेशः । ननु विदुषोऽपि इतिकर्त्तव्यताकोपासननिर्वृत्तये वृष्ट्यन्नादिफलानीष्टान्येव कथं तेषां विरोधाद्विनाश उच्यते तत्राह "पाते त्वि"ति, शरीरपाते तु तेषां विनाशः शरीरपातादूर्ध्वं तु विद्याऽनुगुणदृष्टफलानि सुकृतानि नश्यन्तीत्यर्थः ॥

इतराधिकरणं समाप्तम् ॥

टी० "सुकृतस्ये"ति, सूत्रखण्डान्तरस्य शङ्कामाह "नन्वि"ति, विद्यानुगुणदृष्टफलानि तिष्ठन्ति चेत्तानि शरीरपातादूर्ध्वं नश्यन्तीत्यर्थः । परे चापरे च पाते त्विति सूत्रखण्डमेवं व्याचक्षते अश्लेषविनाशसिद्धेर्देहपाते मुक्तिरवश्यं भाविनी, तु-शब्दोऽवधारण इति, तन्निष्प्रयोजनं सर्वबन्धक्षविरहे मोक्षस्य वक्ष्यमाणप्रकारेण निःसंशयत्वात्सर्वप्रारब्धकर्मानपक्षये सति देहपाते मोक्षस्योपरितनाधिकरणविरुद्धत्वाच्च । अन्ये त्वनेनाधिकरणेनाश्लेषमात्रातिदेशः न विनाशातिदेश इति वदन्ति, तदयुक्तं विनाशश्रवणरूपहेतोरसिद्धत्वात् पाप्म-शब्दस्यैवोभयवाचित्वोपपादनाच्च देहान्ते ज्ञातिभिः परिग्रहात् अविनाश इति चेत्र द्विषद्भिः परिग्रहेण दुष्कृतस्याप्यविनाशप्रसङ्गात् सुकृतस्याश्लेषो नाम काम्यकर्मरूच्यनुत्पत्तिः पङ्क्तिपावनत्वादिलक्षणमाहात्म्यस्य तु विद्यया विरोधाभावाचाश्लेषः, एवं स्वसामर्थ्यप्रभावितं ज्ञानफलं निरूपितं, कदा तर्हि नैयोगि-

कफलं सुकृतदुष्कृतप्रहाणमित्यपेक्षायामाह "पाते त्वि"ति, देहपात एवेत्यर्थ इत्याहुः । पात इत्यस्य व्याख्यानमनुपपन्नं निष्फलत्वादेव, तच्च साम्पराय इत्यत्र प्रागुक्तत्वात् अपेक्षिताकथनं च भाष्योक्तशङ्कायाः परिहरणीयत्वात्, अतोयथाभाष्यमेवार्थः ॥ इतराधिकरणं समाप्तम् ॥

अनारब्धकाऽधिकरणम् ।

## सू० अनारब्धकार्ये एव तु पूर्वे तदवधेः ॥ १५ ॥

भा० ब्रह्मविद्योत्पत्तेः पूर्वोत्तरभाविनोः सुकृतदुष्कृतयोरश्लेषविनाशावुक्तौ, ततः पूर्वभाविनोः सुकृतदुष्कृतयोः किमविशेषेण विनाशः? उतानारब्धकार्ययोरेवेति? विशये "सर्वे पाप्मानः प्रदूयन्त इति विद्याफलस्याविशेषश्रवणाद्विद्योत्पत्त्युत्तरकालभाविन्याश्च शरीरस्थितेः कुलालचक्रभ्रमणादिवत्संस्कारवशाद्प्युपपत्तेरविशेषेणेति प्राप्ते उच्यते अनारब्धकार्ये एव तु पूर्वे इति, विद्योत्पत्तेः पूर्वे सुकृतदुष्कृते अनारब्धकार्ये अप्रवृत्तफले एव विद्यया विनश्यतः, कुतस्तदवधेः तस्य तावदेव चिरं यावन्न विमोक्ष्ये अथ सम्पत्स्य इति शरीरपातविलम्बावधिश्रुतेः, न च पुण्यापुण्यकर्मजन्यभगवत्प्रीत्यप्रीतिव्यतिरेकेण शरीरस्थितिहेतुभूतसंस्कारसद्भावे प्रमाणमस्ति ॥ अनारब्धकार्याधिकरणं समाप्तम् ॥

टी० सू० अनारब्धकार्ये एव तु पूर्वे तदवधेः ॥ १५ ॥ अवान्तरसङ्गतिमाह "ब्रह्मविद्योत्पत्तेरि"ति, ततः पूर्वभाविनोः—ब्रह्मविद्योत्पत्तिपूर्वभाविनोरित्यर्थः । किं पूर्वे सुकृतदुष्कृते अविशेषेण नश्यतः? उतानारब्धफले? किं सर्वे पाप्मान इति सर्वशब्दस्वारस्यानुरोधोन्याय्यः? उत तस्य तावदिति विलम्बश्रुत्यनुरोधः? किं कुलालचक्रभ्रमणवत् कर्मविनाशे संस्का-

रेण शरीरधारणमुपपद्यते? न? ति? किमीश्वरप्रीत्यप्रीतिव्यतिरेकेण संस्कारकल्पनायां प्रमाणमस्ति? नेति? अस्ति चेत् तेन शरीरधारणोपपत्तेः सर्वशब्दस्वारस्यानुरोधस्य न्याय्यत्वादविशेषेण नश्यतः, न चेत्संस्कारेण शरीरधारणायोगाद्विलम्बश्रुत्यर्थानुरोधेनानारब्धफले एव नश्यत इति सिध्यति, सर्वमिथ्यात्ववादिनामिदमधिकरणं विरुद्धं प्रारब्धकर्मणोऽपि मिथ्यात्वेन बाधात् स्थित्यनुपपत्तेः, द्वितीयचन्द्रज्ञानवैषम्यं प्रागेवोक्तं, प्रवृत्तफलस्य कर्मणः कुलालचक्रवेगवदन्तराले प्रतिबन्धासंभाव इत्यपि दुरुक्तं स्वाप्नकुलालचक्रभ्रमणवद् द्वितीयक्षणे प्रबोधे सति तद्वेगस्य बाधितत्वदर्शनात्, संस्काराद्देहधारणं चेत् क्षीणायुषामविदुषामपि देहधारणं स्यात् ॥ अनारब्धकार्याधिकरणं समाप्तम् ॥

अग्निहोत्राद्यधिकरणम् ।

## सू० अग्निहोत्रादि तु तत्कार्य्यायैव तद्दर्शनात् ॥ १६ ॥

इतरस्याऽप्येवमसंश्लेष इति विद्याबलात्सुकृतस्याप्यसंश्लेष उक्तः, अग्निहोत्रादीनां नित्यनैमित्तिकानां स्वाश्रम धर्माणामपि सुकृतत्वसामान्येन तत्फलस्याश्लेषादनिच्छतोऽननुष्ठाने प्राप्ते उच्यते—अग्निहोत्रादि त्विति, तु—शब्दः सुकृतान्तरेभ्यो विशेषणार्थः, अग्निहोत्राद्याश्रमधर्माः फलाश्लेषासम्भवादनुष्ठेया एव, तदसम्भवश्च तत्कार्यार्थत्वात्तेषां विद्याख्यकार्यायैव हि विदुषोऽग्निहोत्राद्यनुष्ठानं, कथमिदमवगम्यते तद्दर्शनात्, दृश्यते हि "तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसा नाशकेने"त्यादिनाऽग्निहोत्रादीनां विद्यासाधनत्वं विद्यायाश्चाप्रयाणादभ्यासाधेयातिशयाया

अहरहरुत्पाद्यत्वात्तदुत्पत्त्यर्थमाश्रमकर्माप्यहरहरनुष्ठेयमेव, अन्यथाऽऽश्रमकर्मलोपे दूषितान्तःकरणस्य विद्योत्पत्तिरेव न स्यात्, यदि अग्निहोत्रादिसाधुकृत्याविद्योत्पत्त्यर्था विद्योत्पत्तेः प्राचीनं च सुकृतं यावत्सम्पातमुषित्वा प्राप्यान्तं कर्मण इत्यनुभावेन विनष्टं भुक्तावशिष्टं च प्रारब्धं कर्मफलं सुहृदः ।

टी० सू० अग्निहोत्रादि तु तत्कार्यायैव तद्दर्शनात् ॥ १६ ॥ अवान्तरसङ्गतिमाह-"इतरस्यापी"ति, ऊर्ध्वरेतःस्वग्निहोत्रादिनैरपेक्ष्यदर्शनादनूर्ध्वरेतसामपि तन्नैरपेक्ष्यशङ्कायां सर्वापेक्षेति सूत्रं यज्ञादेराश्रमधर्मत्वे विद्याङ्गत्वे च नित्यानित्यसंयोगविरोधपरिहारार्थं सहकारित्वे न चेति सूत्रं सुकृतफलाश्लेषादननुष्ठेयत्वशङ्कापरिहारार्थम् अग्निहोत्रादीति सूत्रम् । एवं सूत्राणामपौनरुक्त्यावहेषु शङ्काविशेषेषु सूत्राणामुत्थानात् समुच्चयवादो निरवकाशः, किमग्निहोत्राद्याश्रमधर्मो विदुषः कार्याश्लेषादननुष्ठेयः? उतानुष्ठेयः? किमश्लेषवचनं सर्वसुकृतविषयम्? उत विद्याङ्गाश्रमधर्मव्यतिरिक्तसुकृतविषयं? किं विद्वत्संबन्ध्याश्रमधर्मस्यापि फलं विद्याव्यतिरिक्तम्? उत विद्यैवेति,? व्यतिरिक्तं चेत् अश्लेषवचनस्य सर्वसुकृतविषयतया कार्याश्लेषादननुष्ठेयता, यदा विद्यैव फलं तदा चाश्लेषवचनस्य विद्वत्संबन्ध्याश्रमधर्मव्यतिरिक्तविषयत्वेन कार्याश्लेषाभावादनुष्ठेयता, पूर्वपक्षमाह इतरस्येत्यादिना, राद्धान्तस्तु अग्निहोत्रादि त्वित्यादि, तर्हि सकृदनुष्ठेयमित्यत्राह 'विद्यायाश्चे'ति, उत्तरसूत्रस्य शङ्कामाह "अग्निहोत्रादी"ति, सुहृदः ।

भू० साधुकृत्यामित्यस्य को विषयस्तत्राह–

## सू० अतोऽन्यापि ह्येकेषामुभयोः ॥ १७ ॥

अतोऽग्निहोत्रादिसाधुकृत्याया विद्योत्पत्त्यर्थाया अन्यापि विद्याऽधिगमात् पूर्वोत्तरयोरुभयोरपि पुण्यकर्मणोः

प्रबलकर्मप्रतिबद्धफला साधुकृत्याऽनन्ता सम्भवत्येव तद्विषयमिदमेकेषां शाखिनां वचनम् "तस्य पुत्रा दायमुपयन्ति सुहृदः साधुकृत्या"मिति, विद्ययाऽश्लेषविनाशश्रुतिश्च तद्विषया । अनुष्ठितस्यापि कर्मणः फलप्रतिबन्धसम्भवं पूर्वोक्तं स्मारयति–

## सू० यदेव विद्ययेति हि ॥ १८ ॥

यदेव विद्यया करोति तदेव वीर्यवत्तरमित्युद्गीथविद्यायाः क्रतुफलाप्रतिबन्धफलत्ववचनेनानुष्ठितस्यापि कर्मणः फलप्रतिबन्धः सूच्यते हि अतोऽविदुषोऽनुष्ठितप्रतिबद्धफलविषयं सुहृदः साधुकृत्यामिति शाट्यायनिकम् ॥ अग्निहोत्राद्यधिकरणं समाप्तम् ॥

टी० साधुकृत्यामित्यस्य को विषय इति उत्तरपापकृत्यायाः प्रागभुक्तफलत्वात् प्रारब्धफलत्वाभावात् विद्यार्थत्वाभावाच्च द्विषन्तः पापकृत्यामित्यस्योत्तराघं विषयः स्यादिति मत्वा सुहृदः साधुकृत्यामित्यस्य को विषय इत्युक्तम्, ॥ सू० अतोऽन्यापि ह्येकेषामुभयोः ॥ १७ ॥ भुक्तं भुज्यमानं भोक्ष्यमाणं प्रतिबद्धफलं चेति विविधं कर्म, तत्र पूर्वकृतं पश्चाच्च वृष्ट्यादिहेतोः कृतं प्रतिबद्धफलं कर्मास्ति तद्विषया सुहृदः साधुकृत्यामिति श्रुतिरश्लेषविनाशश्रुतिश्चेत्यर्थः । अनन्तरसूत्रसंगतिमाह "अनुष्ठितस्यापी"ति, पूर्वोक्तं स्मारयतीति पृथग्घ्य प्रतिबन्धः फलमिति सूत्रेण कण्ठोक्तमत्र स्मारयतीत्यर्थः । सू० यदेव विद्ययेति हि ॥ १८ ॥ सूच्यते हीति, अयं हि–शब्दः पृथग्घ्यप्रतिबन्धः फलमित्यत्र हि–शब्दवन्नोपपत्तिप्रसिद्धिद्योतकः किन्तूपपादितप्रसिद्धिद्योतकः । परे तु तत्कार्यायेति ज्ञानस्य यत्कार्य्यं मोक्षस्तदर्थमिति व्याख्याय ज्ञानकार्यस्य मोक्षस्य कर्मकार्य्यत्वं विद्योत्पत्तिद्वारेणेत्यौपचारिकमिति वदन्ति, ततो वरं

ज्ञानाख्यकार्य्यायेति व्याख्यानम् उत्पन्ने सम्यग्दर्शने विदुषः शास्त्रवश्यत्वाभावात् विद्यायाः प्रागनुष्ठितकर्मविषयं तत्कार्य्यार्थत्वाभिधानम् । यद्वा सगुणविद्यासु कर्त्तृत्वानतिवृत्तेर्विद्योत्पत्तावपि तस्याग्निहोत्रादिसंभवात् तद्विषयमिति चाहुः । तदपि सम्यग्दर्शनवतामपि प्रत्यहमन्तःकरणशुद्ध्यर्थमग्निहोत्रादेरनुवर्त्तनीयतायाः स खल्वेवं वर्त्तयन् यावदायुषमिति श्रुतिसिद्धत्वात्सगुणनिर्गुणविद्याविभागस्याप्रामाणिकत्वाच्चानुपपन्नम् । अतोन्यापीति साधुकृत्यावाक्यं काम्यविषयमित्याहुः ॥

यदेव विद्ययेति सूत्रमधिकरणान्तरमाहुः तेनोभौ कुरुतः यश्चैतदेवं वेद यश्च न वेदेत्युद्गीथादिविद्यासंयुक्तमसंयुक्तं च कर्म तत्र विद्यासंयुक्तं कर्म प्रकृष्टं ब्राह्मणाय दद्यादित्युक्तत्वेऽपि विद्यां व्रतवते तद्यात्र मूर्खायेति विशिष्टविषयत्वसिद्धेर्यज्ञेनेत्यविशेषणेनोक्तेऽपि विद्यासंयुक्तविशिष्टकर्मविषयत्वसिद्धेर्विद्यासंयुक्तकर्मण एव ज्ञानार्थत्वमिति पूर्वपक्षं कृत्वा तदेव वीर्य्यवत्तरमिति श्रवणाद्विद्याविधुरस्य वीर्य्यवत्त्वमात्रं गम्यत इति तावदुपकारहेतुत्वादविशेषेणासंयुक्तमपि कर्म ज्ञानार्थमनुष्ठेयमिति सिद्धान्तयन्ति, तदयुक्तं यज्ञेनेत्यविशेषश्रवणाद्वेदानुवचनदानादीनामिव विद्याविधुरस्य यज्ञस्य ज्ञानार्थत्वप्रतीतेः यज्ञस्यैव ह्यङ्गाश्रयोपासनं न दानादेः, ब्राह्मणायेत्युक्तेऽपि विलक्षणपात्रसिद्धिवदित्यप्ययुक्तं दानमश्रोत्रिये यथा अश्रोत्रिये श्राद्धमधीतमव्रतमित्यादिनिषेधवचनान्तरवासितमनस्कस्य तदैकार्थ्याद्विशेषविषयत्वप्रतीतिर्न तु वचनान्तरनिरपेक्षा, इह तु वाक्यान्तरेण विद्याविधुरयज्ञस्य ज्ञानार्थत्वप्रतिषेधादर्शनाद्यज्ञविशेषविषयप्रतीत्यभाव एव, यथा स्वर्गकामो यजेत यज्ञेन देवेभ्य इत्यादिषु विद्यासंयुक्तयज्ञाप्रतीतिः, अतः पूर्वपक्षानुत्थानादना[1]रम्भणीयतैव । अपरे तु तत्कार्य्यायाऽपवर्गायेति समुच्चयपरमाहुः तदयुक्तं ज्ञानकर्मसमुच्चयस्याप्रामाणिकत्वात् । ते च यदेव विद्ययेति सूत्रमुपेक्षिषत तदयुक्तं यदा परोक्तयोजनैव स्यात् तदा ह्यानर्थक्यं प्रतिबद्धकर्मद्योतनरूपप्रयोजनसद्भावादपरेषां मतिमान्द्यमेव तेन द्योतितं, समुच्चयाप्रामाणिकत्वदोषोऽन्येषामपि तुल्यः ।

१ अनादरणीय तैवेति पा॰

अन्ये तु विद्यासहकारिणां कर्मणां विद्यया प्रहाणसम्भावनाया एवाभावाद्विद्याधिगमात् प्राग् जन्मान्तरे चानुष्ठितकाम्यव्यतिरिक्तनित्यनैमित्तिककर्मविषयमिदमधिकरणं व्याचक्षते राजनियोगानुष्ठायिनां संमाननाप्राप्तिवत् स्वाधिकारार्थानामप्यग्निहोत्रादीनामपवर्गोऽवान्तरफलं भवतीत्यप्रहाणमिति सिद्धान्तयन्ति, य आत्मानमेव लोकमुपास्ते न हास्य कर्म क्षीयते इति वचनमत्र प्रमाणयन्ति यस्य तु खलु संस्काराणामेकदेशोऽप्यष्टावात्मगुणा अथ स ब्रह्मणः सायुज्यं सालोक्यं च गच्छतीति गर्भसंस्कारादेरपवर्गार्थत्वविषयस्मृत्युपबृंहितत्वात् प्रागनुष्ठितस्यापवर्गार्थत्वसिद्धिरिति तदयुक्तम् उदाहृतवचनस्य विद्याधिगमात् प्रागनुष्ठितकर्मविषयत्वे स्वरसतः प्रामाण्याभावात् कथंचिदापाद्यमानस्यानुपपन्नत्वाच्च कर्तृत्वममताफलविषयवि[1]विधत्यागभावे कर्मणोऽपवर्गार्थत्वायोगाद्वेदान्तज्ञानात् पूर्वं त्रिविधपरित्यागानुपपत्तेश्च तदानुष्ठितस्यापवर्गार्थत्वायोगाद्विद्यासहकारिणां कथं विद्यया प्रहाणाशङ्केति चेन्न अश्लेषविनाशश्रुतिबलेन विद्यासहकारित्वनिश्चयस्य प्रतिबद्धत्वात् तद्विषयश्रुतेरर्थवादत्वाश्रयणोपपत्तेः, परविद्याकार्य्यमपि जनयन्ति यज्ञादयः किं पुनः स्वर्गमिति हि स्तोतुं शक्यम्, अतः प्रागनुष्ठितविषयत्वमनादृत्य विद्वत्सम्बन्धाश्रमधर्मविषयत्वाश्रयणं युक्तम् अतोऽन्यापीति सूत्रेण प्रहाणवचनं विनियोगवचनं च काम्यविषयमित्युक्ते मोक्षार्थं कर्म तु न प्रहीयते किं त्वाब्रह्मलयात्तमनुगच्छति एवं काम्यानि विज्ञानानि च देहान्ते प्रहीयन्ते नित्यानि विज्ञानानि विद्वांसमनुगच्छन्ति इति कर्मसु ज्ञानेषु च विभागमुक्त्वा नित्यानि विज्ञानानि न सन्तीति शङ्कामापाद्य तत्परिहारपरं यदेव विद्ययेति सूत्रं व्याचक्षते कर्मसमृद्ध्यर्थं विज्ञानं हि विहितं तत्र काम्यकर्मसमृद्ध्यर्थं विज्ञानं प्रहीयते मोक्षार्थकर्मसमृद्ध्यर्थं विज्ञानमनुगच्छतीति अत्र ब्रूमः मोक्षार्थं कर्म विद्वांसमनुगच्छतीत्येतन्मुमुक्षोश्चरमदेहपाते ? उत तद्व्यतिरिक्तदेहपाते, ? प्रथमे कल्पे नायं विभागः ज्ञानकर्मसमुच्चयस्य निरस्ततया विद्योत्पादनमात्रचरितार्थस्य कर्मणो मोक्षार्थमनुगत्यनुपपत्तेः, द्वितीये

१ त्रिविधत्यागाभावे इति पा० ।

तु कृत्स्नसुकृतदुष्कृतप्रहाणाभावात्काम्यं कर्म प्रहीयते मोक्षार्थमनुगच्छतीति विभागोऽनुपपन्नः, यतः कर्मणां विद्याङ्गत्वमेव न मोक्षार्थत्वम् अत एव मोक्षार्थकर्मसमृद्ध्यर्थं विज्ञानमनुगच्छति काम्यकर्मसमृद्ध्यर्थं विज्ञानं प्रहीयत इति च विभागोऽनुपपन्नः । ननु मुमुक्षोश्चरमेतरदेहपातेऽपि विद्याङ्गकर्मसमृद्ध्यर्थं विज्ञानमनुगच्छति इतरत्प्रहीयत इति विभागपरं सूत्रं स्यादिति चेत् चरमदेहपातात् पूर्वमशेषसुकृतदुष्कृतप्रहाणाभावेन सुकृतसमृद्ध्यर्थज्ञानस्यापि प्रहाणायोगात् उपकार्य्यानुगमाननुगमानुगुणौ हि उपकारकानुगमाननुगमौ, अत एव हि मोक्षार्थकर्मसमृद्ध्यर्थविज्ञानानुगमस्त्वयोत्प्रेक्ष्यते, अतः प्रतिबद्धफलसाधुकृत्योपपादनमाकाङ्क्षितमिति तत्परत्वमेव सूत्रस्य युक्तम् ॥ अग्निहोत्राद्यधिकरणं समाप्तम् ॥

इतरक्षपणाधिकरणम् । **सू० भोगेन त्वितरे क्षपयित्वाऽथ संपद्यते ॥ १९ ॥**

श्रु० यथोः पुण्यपापयोरश्लेषविनाशावुक्तौ ताभ्यामितरे आरब्धकार्य्ये पुण्यपापे किं विद्यायोनिशरीरावसाने? उत तच्छरीरावसाने? शरीरान्तरावसाने वेत्यनियम? इति संशये, तस्य तावदेव चिरं यावन्न विमोक्ष्ये अथ संपत्स्य इति तच्छरीरविमोक्षावसानत्वश्रवणात्तदवसाने इति प्राप्त उच्यते "भोगेन त्विति, तु-शब्दः पक्षव्यावृत्त्यर्थः, इतरे आरब्धकार्य्ये पुण्यपापे स्वारब्धफलभोगेन क्षपयित्वा ।

टी० सू० भोगेन त्वितरे क्षपयित्वाऽथ संपद्यते ॥ १९ ॥ सङ्गतिः स्फुटा, आरब्धकार्य्ये पुण्यपापे किं विद्यायोनिशरीरावसाने? उत तच्छरीरावसाने? देहान्तरावसाने वेत्यनियमः? किं तस्य तावदिति वाक्यं विद्यायोनिशरीरावसानमवगमयति? उत शरीरमतन्त्रीकृत्य फलभोगावसानमवगमयती? ति, प्रथमे विद्यायोनिशरीरावसानत्वं, द्वितीये त्वनियमः। पूर्वपक्षहेतुं परिहरति "तस्य तावदि"ति, यावन्न विमोक्ष्ये इत्यत्र देहस्तदव-

धिश्च न श्रुतौ धूत्वा शरीरमकृतं कृतात्मेत्यत्र शरीरं श्रुतम्, अवधिस्तु न श्रुतः शरीरमिति एकवचनमपि जातिविषयम्, अश्व इव रोमाणि विधूय पापमिति पूर्वखण्डस्थपापशब्दैकवचनवदित्यभिप्रायेण देहावधिनियमाश्रवणादित्युक्तम्, अस्मिन्पादे बह्वधिकरणोक्तार्थस्य सुग्रहत्वायाह "तदेवमि"ति, परे त्वनारब्धकार्य्ये इत्यत्र यत्प्रार्वार्तितं तस्य कर्मणः क्षयप्रकारं दर्शयतीदं सूत्रमित्याहुः । तत्प्रयोजनशून्यत्वादनादरणीयम् अनारब्धकार्ययोर्ज्ञानदाह्यत्वेऽभिहिते तदितरयोर्हि भोगेन क्षयः स्फुटः । अपरे तु कर्तृत्वस्याविद्यामूलत्वाद्विदुषश्चाविद्यानिवृत्तौ भोक्तृत्वासम्भवात् बहुशरीरप्रदेककर्मणो देहान्तरोपाधौ तस्य तावदेवेति श्रुतिवशेन भोगासंभवाच्च प्रारब्धस्यापि ज्ञानेनैव क्षय इति पूर्वपक्षं कृत्वा तस्य तावदित्यवशेषितस्य कर्मणो ज्ञानदाह्यत्वायोगाद्विदुषोऽपि सुखदुःखानुभवदर्शनेन प्रारब्धभोगानुगुणाविद्यालेशानुवृत्तेरभ्युपगन्तव्यत्वात्तस्य तावदिति श्रुतेः प्रारब्धसर्वकर्मक्षयावधिपरत्वोपपत्तेरत एव प्रारब्धस्य देहान्तरोपाधौ ज्ञानादाह्यत्वाश्रयणायोगाच्च भोगेनैव क्षय इति सिद्धान्तयन्ति तदयुक्तम् । अनारब्धकार्य्ये एवेत्यत्र समर्थितत्वात्, एवकारार्थो हि प्रारब्धस्य ज्ञानादाह्यत्वं, तच्च तस्य तावदित्यवधिश्रवणेन समर्थितम् अविद्यापूर्वकत्वात् कर्त्तृत्वस्य तदभावात् ।

ब्र० तत्फलभोगसमाप्त्यनन्तरं ब्रह्म सम्पद्यते, ते च पुण्यपापे एकशरीरोपभोग्यफले चेत्तच्छरीरावसाने इति सम्पद्यते, अनेकशरीरोपभोग्यफले चेत्तदवसाने सम्पद्यते भोगेनैव च क्षयितव्यत्वादारब्धफलयोः कर्मणोः तस्य तावदेव चिरं यावन्न विमोक्ष्य इति च भोगेन तयोः कर्मणोर्विमोक्ष उच्यते देहावधिनियमाश्रवणात् तदेवं ब्रह्मविद्यायाः प्रागनुष्ठितमभुक्तफलमनारब्धफलं पुण्यपापरूपं कर्मानादिकालसञ्चितमनन्तं विद्यामाहात्म्याद्विनश्यति, विद्यारम्भोत्तरकालमनुष्ठितञ्च न श्लिष्यति, तच्च

पुण्यरूपं सर्वं विदुषः सुहृदो गृह्णन्ति, पापं च द्विषन्त इति निरवद्यम् ॥ इतरक्षपणाधिकरणं समाप्तम् ॥

अत्राधिकरणानि एकादश,

इति श्रीभगवद्रामानुजविरचिते शारीरकमीमांसाभाष्ये चतुर्थाध्यायस्य प्रथमः पादः ॥

टी० भोगानुपपत्तिः परिहरणीयेति चेत् यदि सा परिहार्य्या तर्हि तत्रैव परिहर्त्तव्या, इह सूत्रेऽपि तत्परिहारस्याभिप्रायिकत्वं वक्तव्यं तत्तत्रैव वक्तुं युक्तं साध्यसिद्ध्युपयोगस्याविशिष्टतया तदौपयिकार्थानां तत्रैव वक्तव्यत्वात्, युक्तिरपि निर्मूला जक्षत् क्रीडन् रममाण इति मुक्तौ परं ब्रह्मोपसम्पन्नस्यापि कर्त्तृत्वश्रवणेन तस्याविद्यापूर्वकत्वाभावात् कर्मफलभोगादिकर्त्तृत्वं चौपाधिकमिति पूर्वपक्षयुक्तेर्निर्मूलतयाऽनारम्भणीयता । अतः अनारब्धकार्य्ये इत्यत्र प्रारब्धस्य भोगविनाश्यत्वे सिद्धे तदवधेरेव चिन्तनीयत्वं युक्तम् । अन्ये तु एकस्यापि कर्मणो बहुशरीरप्रदत्वसम्भवात्तस्य तावदित्यस्य कर्मक्षयावधिपरत्वोपपत्तेर्व्यासादीनां पुनर्जन्मदर्शनाच्च विद्यायोनिशरीरावसानत्वनियमाभावं पूर्वपक्षीकृत्य विद्यायोनिशरीरावसाने प्रारब्धस्यापि कर्मणो विरतव्यापारत्वात् विरतव्यापारस्यानारब्धतुल्यत्वेन विद्याविनाश्यत्वात् तस्य तावदिति वाक्यस्य तद्देहात्ययावधिविषयत्वोपपत्तेर्व्यासादीनामाधिकारिकत्वादविरतव्यापारेण पूर्वकर्मणैव बहुशरीरग्रहणोपपत्तेश्च विद्यायोनिशरीरावसानत्वं सिद्धान्तयन्ति, तदयुक्तं विद्यायोनिशरीरपाते प्रारब्धकर्मणो विरतव्यापारत्वे प्रमाणाभावात्,प्रत्युत व्यासादीनां बहुदेहपरिग्रहस्त्वदृष्टश्चोपलभ्यते तेषां कर्मणोऽविरतव्यापारत्वे संप्रतिपन्ने तदितरेषामेकस्मिन् विद्यायोनिदेहान्त एव विरतव्यापारत्वे किं प्रमाणं, तस्य तावदिति श्रुतेस्त्ववधिविशेषाश्रवणात् तद्देहपातावधिपरत्वमनुपपन्नं, न हि विद्यायोनेः शरीराद्यावन्न विमोक्ष्य इति श्रूयते, तस्माद्विद्यायोनिशरीरावसानत्वनियमाभाव एव सिद्धान्तीकर्त्तव्यः ॥ इतरक्षपणाधिकरणं समाप्तम् ॥

इति श्रीश्रुतप्रकाशिकायां चतुर्थस्याध्यायस्य प्रथमः पादः ।

श्रीमते रामानुजाय नमः ।

नमः पूर्वाचार्येभ्यः ।

## अथ चतुर्थस्य द्वितीयः पाद आरभ्यते ।

वागधिकरणम् । **सू० वाङ्मनसि दर्शनाच्छब्दाच्च ॥ १ ॥**

भा० इदानीं विदुषो गतिप्रकारं चिन्तयितुमारभते, प्रथमन्तावदुत्क्रान्तिश्चिन्त्यते, तत्रेदमाम्नायते "अस्य सोम्य पुरुषस्य प्रयतो वाङ्मनसि संपद्यते मनः प्राणे प्राणस्तेजसि तेजः परस्यां देवताया"मिति, अत्र वाङ्मनसि संपद्यत इति वाचो मनसि संपत्तिश्रुतिः किं वाग्वृत्तिमात्रविषया ? उत वाग्विषये ? ति विशये वृत्तिमात्रविषयेति युक्तं, कुतः मनसो वाक्प्रकृतित्वाभावात्, तत्र वाक्स्वरूपसम्पत्त्यसम्भवात्, वागादिवृत्तीनां मनोऽधीनत्वेन वृत्तिसम्पत्तिश्रुतिः कथंचिदुपपद्यत इत्येवं प्राप्तेऽभिधीयते वाङ्मनसीति, वाक् स्वरूपमेव मनसि संपद्यते कुतः तद्दर्शनात् ।

सू० वाङ्मनसि दर्शनाच्छब्दाच्च ॥ १ ॥ शरीरस्थितिसमये यद्विद्याफलं तदुक्तम्, । अथ गत्युपक्रमश्चिन्त्यत इति पादसङ्गतिः, गतेरुपक्रम उत्क्रान्तिः सा चिन्त्यते, किमियं सम्पत्तिर्वाग्वृत्तिविषया ? उत वाक्स्वरूपविषये ? ति, किं वाक्शब्दस्य मुख्यार्थपरिग्रह उपपद्यो नेति, किमियं सम्पत्तिर्लयरूपा ? उत व्यापारनिवृत्तिपूर्वकसंयोगरूपे ? ति इन्द्रियान्तरसम्पत्तिवचनं किं लयपरत्वेऽप्युपपद्यते ? उत संयोगपरत्व एवे ? ति, यदा लयपरत्वेऽप्युपपद्यते, तदा सम्पत्तेर्लयरूपतया वाक्छब्दस्य मुख्यार्थपरिग्रहायोगात्सम्पत्तिर्वृत्तिविषया स्यात्, यदा संयोगपरत्व एवोपपत्तिस्तदा सम्पत्तेः

संयोगरूपत्वेन वाक्शब्दस्य मुख्यार्थत्वात्सम्पत्तिः स्वरूपविषया स्यात् कुत इत्यादि, कारणे हि लयः न वाचो मनः कारणं तत्प्रवृत्तेरेव कारणं मन इति वृत्तिविषया सम्पत्तिरित्यर्थः, वाग्वृत्तेर्हि वागाश्रयभूता न मनः, अतस्तद्वृत्तिहेतुस्वरूपव्यापारस्य मनसि लय इत्यस्वारस्याभिप्रायेण कथञ्चिदित्युक्तं, वाङ्मनसीतीति वाक्शब्दस्य वृत्तिपरत्वे लक्षणा स्यात्, स्वरूपपरत्वे तु न लक्षणा सम्पत्तिशब्दो लयवाची संयोगवाची च, लयवाचित्वे प्रसिद्धिप्राचुर्यात् संयोगवाचित्वमस्वरसमिति चेत् पूर्वपक्षिणोऽपि लयवाचित्वमयुक्तम्, उपादाने हि लयः वाग्वृत्तेर्वागेवोपादानं मनस्तु निमित्तम्, एवं वाक्शब्दसम्पत्तिशब्दयोरुभयोरपि लाक्षणिकत्वास्वारस्यप्रसङ्गः पूर्वपक्षे । अस्माकं तु सम्पत्तिशब्दास्वारस्यमेव न वाक्शब्दलक्षणेति विशेष इत्यर्थः ॥

सू० दृश्यते हि वागिन्द्रिये उपरतेऽपि मनःप्रवृत्तिः, वृत्तिमात्रसम्पत्त्याऽपि तदुपपद्यते इति चेत्तत्राह शब्दाच्चेति, वाङ् मनसि सम्पद्यते इति वाक्स्वरूपसंपत्तावेव हि-शब्दो न वृत्तिमात्रसम्पत्तौ, न हि तदानीं वृत्त्युपरमे वागिन्द्रियं प्रमाणान्तरेणोपलभ्यते येन वृत्तिमात्रं संपद्यत इत्युच्येत यदुक्तं मनसोवाक्प्रकृतिकत्वाभावाद्वाचो मनसि संपत्तिर्नोपपद्यत इति, तद्वाङ्मनसि संपद्यत इति वचनान्मनसा वाक् संयुज्यते न तु तत्र लीयत इति परिहर्त्तव्यम् ॥

सू० अत एव सर्वाण्यनु ॥ २ ॥

यतो वाचो मनसा संयोगमात्रं सम्पत्तिर्न तु लयः, अत एव वाचमनु सर्वेषामिन्द्रियाणां मनसि सम्पत्तिश्रुतिरुपपद्यते, तस्मादुपशान्ततेजा अपुनर्भवमिन्द्रियैर्मनसि सम्पद्यमानैरिति ॥ वागधिकरणं समाप्तम् ॥

मनोऽधिकरणम् । **सू० तन्मनःप्राण उत्तरात् ॥ ३ ॥**

तत्सर्वेन्द्रियसंयुक्तं मनः प्राणे सम्पद्यते प्राणेन संयुज्यते न मनोवृत्तिमात्रं कुतः, उत्तरात् मनः प्राण इति वाक्यात्, अधिकाशङ्का तु, अन्नमयं हि सोम्य मन इति वचनान्मनसोऽन्नप्रकृतिकत्वमवगम्यते, अन्नस्य च "ता अन्नमसृजन्ते"त्यम्मयत्वं सिद्धम् आपोमयः प्राण इति चाप्प्रकृतित्वं प्राणस्यावगम्यते, अतो मनः प्राणे संपद्यत इत्यत्र प्राणशब्देन प्राणप्रकृतिभूता आपो निर्दिश्य तासु मनःसम्पत्तिप्रतिपादने ।

टी० दृश्यते हीति, प्रवृत्तव्यापारं मनो निवृत्तव्यापारं वागिन्द्रियं, तत्र प्रवृत्तस्वकार्य्ये मनसि निवृत्तस्वकार्य्यं वागिन्द्रियमन्तर्गतम्भवितुमर्हति, यथा प्रवृत्तस्वकार्य्ये दहने निवृत्तस्वकार्य्योऽग्निरन्तर्भूत इति भावः । वृत्तिमात्रे इति यद्यन्निवृत्तस्वकार्य्यं तत्तत्प्रवृत्तस्वकार्य्ये ऽन्तर्गतम्भवतीति न व्याप्तिरस्ति, अतो वृत्तिमात्रसम्पत्त्यापि वागिन्द्रियोपरमे मनःप्रवृत्तिदर्शनमुपपद्यत इत्यर्थः । दर्शनाच्छब्दाच्चेति द्वयमप्युक्तो हेतुः सू० अत एव सर्वाण्यनु ॥ २ ॥ वाचमनु वाचः पश्चादित्यर्थः ॥ वागधिकरणं समाप्तम् ॥ सू० तन्मनः प्राण उत्तरात् ॥ ३ ॥ सङ्गतिः स्फुटा, किमत्र मनसो लय उच्यते? उत संयोगः? किमत्र प्राण इत्यपां निर्देश? उत प्राणस्यैव? आपोमय इति वाक्यं किं प्रकृतिविकारभावपरम्? उताप्याय? परं तत्प्रकृतिविकारपरत्वे प्राण इत्यपां निर्देशात् सम्पत्तिर्लयः स्यात् आप्यायनपरत्वे प्राणस्यैव निर्देशात् सम्पत्तिः संयोगः स्यात्, तच्छब्दं व्याचष्टे "सर्वेन्द्रिये"ति, अधिकाशङ्केत्यादि, ॥

सू० परम्परया स्वकारणे लय इति सम्पत्तिवचनमुपपन्नं भवतीति । परिहारस्तु अन्नमयं हि सोम्य मनः आपोमयः

प्राण इति मनःप्राणयोरन्नेनाद्भिश्चाप्यायनमुच्यते न तत्प्रकृतित्वम् आहङ्कारिकत्वान्मनसः, आकाशादिविकारत्वाच्च प्राणस्य प्राणशब्देनापां लक्षणा च स्यादिति ॥

मनोऽधिकरणं समाप्तम् ॥

टी० परम्परया स्वकारणे लय इति, स्वकारणपृथिवीद्वारेणान्नमयस्य मनसः प्राणशब्दलक्षितास्वप्सु लय इत्यर्थः । परिहरति "परिहारस्त्वि"ति, परे तु श्रुतिलक्षणाविशये श्रुतेर्बलीयस्त्वाद्वागेव सम्पद्यत इति पूर्वपक्षं कृत्वा वाचो मनःप्रकृतिकत्वाभावेन तत्र तल्लयायोगात् पार्थिवेन्धनजन्याया अग्निवृत्तेरप्सूपशमदर्शनेन वृत्त्युद्भवाभिभवयोः प्रकृतिसमाश्रयत्वासम्भवाच्च वाग्वृत्तिर्मनसि संपद्यते, एवमेवेन्द्रियान्तरवृत्तिर्मनसि संपद्यत इति सिद्धान्तयन्ति, शब्दादिति वाक्शब्दस्यापि वृत्तिभेदोपचारादुपपत्तेरिति व्याचक्षते तदयुक्तं सौत्रयोर्वाक्शब्दशब्दयोर्वृत्त्युपपत्तिपरत्वे लाक्षणिकत्वप्रसङ्गात्, अर्थविरोधाच्च, अर्थविरोधश्च श्रुतिस्वारस्यहान्याधिक्यरूपः वाक्शब्दस्य वृत्तिपरत्वं मनसीति सप्तम्या निरर्थकत्वं लयवाचिनः संपत्तिशब्दस्योपशमपरत्वं च स्वावस्थाप्रहाणेन कारणसंश्लेषो हि लयः न तूपशममात्रं जलसंसर्गो वह्निशान्तिहेतुः न स्यानम् अभिज्वलनाभावो ह्यन्यवव्यवाश्रयः अम्भसोक्षिते दहने सत्यम्भसा शाम्यतीति ह्युच्यते न त्वम्भसि शाम्यतीति बहुजलप्रक्षिप्तेऽप्यग्नौ तच्छान्तिहेतुरेव जलं न त्वभिज्वलनाभावाधिकरणं बहुसलिलस्याङ्गाराधिकरणतया विवेकाभावात् निरिन्धनोऽप्सु शाम्यतीति व्यवहारः, अतः श्रुतिस्वारस्यभङ्गाधिक्यम्, अस्माकं तु संपत्तिशब्दास्वारस्यमात्रमेवेत्यस्मत्पक्ष एवोपपन्नः, तन्मनः प्राण इत्यनन्तराधिकरणस्यापि मनोवृत्तिलयपरत्वमुक्तदोषग्रस्तम् । अपरेऽप्यस्मिन्नधिकरणे तुल्याभिप्रायाः, तुल्यप्रतिक्षेपाश्च, हेतुवैषम्यमेव ब्रह्मणि लयश्रुतिविरोधात् अविदुषोऽपि देहान्तरप्रतिपत्तौ करणानुवृत्त्यनुपपत्तेश्च वाग्वृत्तिलय इति तत्राद्यो हेतुरयुक्तः, तथा हि मनसि वाग्वृत्तिलयश्चेत् ब्रह्मणि सर्ववस्तुलयश्रुतिविरोधः, मनसो ब्रह्माभिन्नत्वादविरोधश्चेत्स्व-

रूपलयेऽपि तुल्यं, द्वितीयस्तु स्वरूपलयाभावहेतुत्वादस्मत्पक्षानुगुणः । अन्ये तु वागादिबाह्येन्द्रियाणां मनस्येव लय? उतान्यत्रेति विचार्य्य मनः-शब्दलक्षिते अहङ्कारे लय इति पूर्वपक्षं कृत्वा सम्पत्ति-शब्देन वृत्तिविलोपाय संयोगस्य विवक्षितत्वात् मनस्येव सम्पत्तिरिति सिद्धान्तयन्ति तन्मन इति प्राण-शब्दलक्षिते अहङ्कारे मनसो लय इत्याशङ्क्य पूर्ववत् सिद्धान्तयन्ति मुख्यप्राणे मनःसंश्लेषश्चेत् सहोत्क्रान्तिर्वाच्या न तु पश्चात् सर्वे प्राणा अनूत्क्रामन्तीति पश्चादुत्क्रान्तिश्रवणात्सर्वेन्द्रियसंयुक्तस्य मनसो न प्राणसंयोग इत्यधिकाशङ्कामुक्त्वा अनुनं पश्चाद् भावपरः किं तु तृतीयार्थे कर्मप्रवचनीयः तस्मात्सहोत्क्रामतीत्यधिकं परिहारमाहुः. तत्र विचारस्य संपत्तिस्थानविषयत्वादपि संपद्यमानवस्तुविषयत्वमुचितम् आकाशाद्वायुर्वायोरग्निरग्नेराप इत्युत्पत्तिवचन इव संपत्तिवाक्येऽपि वाङ् मनसि मनः प्राणे प्राणस्तेजसीति शृङ्खलितनिर्द्देशे पूर्वापरयोर्मनः-शब्दयोः प्राणशब्दयोश्चार्थैक्यस्य स्वतःप्राप्तत्वेनाहङ्कारवाचित्वमनोवाचित्वाहङ्कारवाचित्वप्राणवाचित्वाश्रयणायोगात्, एकस्मिन्नर्थे ग्राह्ये तत्रापि मुख्यार्थस्य स्वतःप्राप्तत्वात् मनःप्राणशब्दयोर्मुख्यैकरूपार्थस्वीकारे सत्यहङ्कारपरत्वात्तयोरुत्तरवाक्यान्वयायोगान्मुख्यार्थः स्वतःप्राप्त इति यथा प्रसिद्धार्थे स्वीकृते सति क्रियमाणो विचारः सम्पद्यमानवस्तुविषय एव भवितुमर्हतीति पश्चादुत्क्रान्तिश्रवणमिन्द्रियाणां प्राणसंश्लेषबाधकमित्यधिकाशङ्का चानुपपन्ना, प्राण-शब्दस्याहङ्कारपरत्वं पूर्वपक्षयतामनभिमतं पूर्वपक्षविरुद्धत्वाच्छङ्कायाः पूर्वपक्षसाधकयुक्त्याधिक्यमूला ह्यधिकाशङ्का मनसोऽहङ्कारलीनत्वे मुख्यप्राणात् पृथगिन्द्रियोत्क्रमणं हि विरुध्यते, तस्माद्विचाराधिकशङ्के यथाभाष्यमेवोपपन्ने । मनोऽधिकरणं समाप्तम् ॥

अध्यक्षाधिकरणम् । **सू० सोऽध्यक्षे तदुपगमादिभ्यः ॥ ४ ॥**

मू० यथा वाङ्मनसि संपद्यते मनः प्राण इति वचनानुरोधेन मनःप्राणयोरेव वाङ्मनसयोः संपत्ति ।

टी० सू० सोऽध्यक्षे तदुपगमादिभ्यः ॥ ४ ॥ संगतिः स्फुटा, किं प्राणस्तेजसि संपद्यते? उत जीवे? किं प्राणस्तेजसीति वाक्यं जीवसंपत्तिपूर्वकतेजःसंपत्तिपरम्? उत केवलतेजस्संपत्तिपरं? जीवसंपत्तिपरत्वे प्राणस्तेजसीति वाक्यस्वारस्यं हीयते नेति? हीयते चेद्वाक्यस्य केवलतेजःसम्पत्तिपरत्वान्न जीवे सम्पत्तिः, न हीयते चेत् जीवसंपत्तिपूर्वकतेजःसम्पत्तिपरत्वाद्वाक्यस्य प्राणस्य जीवे सम्पत्तिः, यथेत्यादि उपगमः संबन्धः तेजःशब्देन भूतसूक्ष्मांशका विवक्षिताः आदिशब्दविवक्षितार्थमाह–

सू० तथा प्राणस्तेजसीति वचनात्तेजस्येव प्राणः सम्पद्यत इति प्राप्त उच्यते सोऽध्यक्ष इति, स प्राणोऽध्यक्षे करणाधिपे जीवे संपद्यते कुतः तदुपगमादिभ्यः, प्राणस्य जीवोपगमस्तावच्छ्रूयते "एवमेवेममात्मानमन्तकाले सर्वे प्राणा अभिसमायन्ती"ति, तथा जीवेन सह प्राणस्योत्क्रान्तिः श्रूयते तमुत्क्रामन्तं प्राणोऽनूत्क्रामतीति प्रतिष्ठा च जीवेन सह श्रूयते कस्मिन्नुत्क्रान्त उत्क्रान्तो भविष्यामि कस्मिन् वा प्रतिष्ठिते प्रतिष्ठि[1]तःस्यामिति एवं जीवेन संयुज्य तेन सह तेजःसम्पत्तिरिह प्राणस्तेजसीत्युच्यते, यथा यमुनाया गङ्गया संयुज्य सागरगमनेऽपि यमुना सागरं गच्छतीति वचो न विरुद्ध्यते तद्वत्॥ अध्यक्षाधिकरणं समाप्तम्॥

भूताधिकरणम् । **सू० भूतेषु तच्छ्रुतेः ॥ ५ ॥**

प्राणस्तेजसीति जीवसंयुक्तस्य प्राणस्य तेजसि संपत्तिरुक्ता सा सम्पत्तिः किं तेजोमात्रे? उत संहतेषु सर्वेषु भूतेष्विति विशये तेजोमात्रश्रवणात्तेजसीति प्राप्त उच्यते भूतेष्वि"ति, भूतेषु संपद्यत इति, कुतः तच्छ्रुतेः,

१. प्रतिष्ठास्यामीतिपा० ।

टी० "तथे"ति, अन्येन संयुज्य पदार्थान्तरसंबन्धेऽप्यन्यतरवाचिशब्दनिर्देशे दृष्टान्तमाह "यथे"ति, इतरे त्रयोऽप्यगुणत्वादिति पूर्वपक्षहेतुमाहुः, अतिरिक्तहेतौ सम्भवति श्रवणमात्रस्य हेतुत्वायोगादप्राधान्यायो भाष्ये दर्शितः। सिद्धान्ते च स्रुघ्नात् पाटलीपुत्रगमनस्य मथुराव्यवधानेऽपि स्रुघ्नात् पाटलीपुत्रगमनव्यवहारो दृष्टान्तितः, ततोऽपि गङ्गासाहित्यकण्ठोक्तिरहितयमुनासागरगमनव्यवहारदृष्टान्त उचितः, पाटलीपुत्रगमने स्रुघ्नमथुरयोः सह गमनाभावात्, इह तु सहगमनसद्भावात् गङ्गास्थानीयजीवापेक्षया यमुनास्थानीयस्य प्राणस्य गुणभावाच्च सहावस्थानस्य श्रुतिं स विज्ञानो भवतीत्युदाहरन्ति विज्ञायतेऽनेनेति व्युत्पत्त्या विज्ञानानीन्द्रियाणि सेन्द्रिय इत्यर्थः। तस्याविशदार्थत्वात् प्रतिष्ठाविषयश्रुत्यन्तरमुदाहृतं भाष्ये। अध्यक्षाधिकरणं समाप्तम् ॥ सू० भूतेषु तच्छ्रुतेः ॥ ५ ॥ सङ्गतिः स्फुटा किमत्र भूतान्तरसंसृष्टतेजःसंयोगः? उत तेजोमात्रसंयोग? इति, किं तेजःशब्दस्तेजोमात्रपर? उत भूतान्तरसंसृष्टपरः?

मू० पृथिवीमय आपोमयस्तेजोमय" इति जीवस्य सञ्चरतः सर्वभूतमयत्वश्रुतेः। ननु तेजःप्रभृतिष्वेकैकस्मिन् क्रमेण संपत्तावपि पृथिवीमय इत्यादिका श्रुतिरुपपद्यते अत आह—

## सू० नैकस्मिन्दर्शयतो हि ॥ ६ ॥

नैकस्मिन् एकैकस्य कार्याक्षमत्वात्।

टी० किं पृथिवीमय आपोमय इत्यादिवाक्यं युगपदनेकभूतसंसर्गं दर्शयति? नेति, किं त्रिवृत्करणश्रुतिः पञ्चीकरणस्मृतिश्च संहतानामेव कार्यसामर्थ्यं दर्शयतो नेति? न चेत् पृथिवीमय इत्यादिना यौगपद्यप्रदर्शनाभावेन तेजः शब्दस्य तेजोमात्रपरतया तेजोमात्रसंयोगः स्यात्। दर्शयतश्चेत् पृथिवीमयत्वादिश्रुत्या युगपदनेकभूतसंसर्गप्रदर्शनेन तेजःशब्दस्य

भूतान्तरसंसृष्टतेजःपरतया भूतान्तरसंसृष्टतेजःसंयोगः स्यात्सर्वभूतमयत्वश्रुतेरिति भूतमात्रे प्रकृतेऽपि सामर्थ्यात् भूतमयत्वपरामर्शित्वसिद्धिस्तच्छब्दस्य फलितेति भावः । अनन्तरसूत्रशङ्कामाह "नन्वि"ति, । सू० नैकस्मिन्दर्शयतो हि ॥ ६ ॥ पञ्चीकृतेषु त्रिवृत्कृतेषु वा भूतेष्वेकैकमेव कार्य्यसमर्थं न त्वत्रिवृत्कृतमेकैकं कार्य्यसमर्थम् । आपः पुरुषवचसो भवन्तीत्यत्र त्रिवृत्कृतानामेवापां कार्य्यकरत्वदर्शनात्, अजहल्लक्षणया तेजःशब्दस्त्रिवृत्कृतान् भूतसूक्ष्मांशानाह । अत्र परे चापरे च नैकस्मिन्निति सूत्रान्तमेकमधिकरणं वर्णयन्ति, कथं तर्हि प्राणस्तेजसीति श्रुतिरित्यपेक्षायां तन्निर्वाहार्थं भूतेषु तच्छ्रुतेरिति सूत्रं स प्राणसंपृक्तोऽध्यक्षस्तेजःसचिवभूतेषु वर्त्तेत इत्यवगन्तव्यं तच्छ्रुतेः प्राणस्तेजसीति श्रुतेरिति व्याख्याय तावता प्राणस्य साक्षात्तेजःप्राप्तिश्रुतिविरोधस्यापरिहृतत्वात् सुघ्नपाटलीपुत्रदृष्टान्तेन विरोधं शमयन्ति एकमेव तेजः श्रूयते न भूतान्तरमित्यपेक्षायां नैकस्मिन्निति सूत्रमवतारयन्ति दर्शयतः प्रश्नप्रतिवचने आपः पुरुषवचस इति व्याख्यातं त्र्यात्मकत्वादिति पृथिवीमय आपो मयः ।

भा० दर्शयतो ह्यक्षमत्वं श्रुतिस्मृती, "अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि तासां त्रिवृतं त्रिवृतमेकैकां करवाणी"ति नामरूपव्याकरणयोग्यत्वाय त्रिवृत्करणमुपदिश्यते "नानावीर्याः पृथग्भूतास्ततस्ते संहतिं विना नाशक्नुवन्प्रजाः स्रष्टुमसमागम्य कृत्स्नशः । समेत्यान्योन्यसंयोगं परस्परसमाश्रयाः महदाद्या विशेषान्ता ह्यण्डमुत्पादयन्ति ते" इति, अतः प्राणस्तेजसीति तेजः-शब्देन भूतान्तरसंसृष्टमेव तेजोऽभिधीयते, अतो भूतेष्वेव सम्पत्तिः ॥ भूताधिकरणं समाप्तम् ॥

आसृत्युपक्रमाधिकरणम् ।

## सू० समाना चासृत्युपक्रमादमृतत्वं चानुपोष्य ॥ ७ ॥

इयमुत्क्रान्तिः किं विद्वदविदुषोः समाना? उताविदुष एवे?ति चिन्तायामविदुष एवेति प्राप्तं कुतः विदुषोऽत्रैवामृतत्ववचनादुत्क्रान्त्यभावाद्विदुषो ह्यत्रैवामृतत्ववचनं श्रूयते "यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि स्थिताः। अथ मर्त्यो ऽमृतो भवत्यत्र ब्रह्म समश्नुत" इत्येवं प्राप्तेऽभिधीयते समाना चासृत्युपक्रमादिति, विदुषोऽप्यासृत्युपक्रमादुत्क्रान्तिः समाना, आसृत्युपक्रमात्–आगत्युपक्रमात्, नाडीप्रवेशात् प्रागित्यर्थः ॥ विदुषोऽपि हि नाडीविशेषेणोत्क्रम्य गतिः श्रूयते "शतं चैका च हृदयस्य नाड्यस्तासां मूर्द्धानमभिनिःसृतैका ।

टी० अण्व्योमात्राविनाशिन्यो दशार्धानान्तु याः स्मृताः । ताभिः सार्धमिदं सर्वं सम्भवत्यनुपूर्वश" इति, श्रुतिस्मृती दर्शयत इति वेति, भूतेष्विति सूत्रे दृष्टान्तस्य कण्ठोक्त्यभावादभिप्रायकल्पनायां साक्षात्तेजःसम्पत्तिश्रुतिविरोधपरिहारो दृष्टान्ताभिप्रायकल्पनं च सोऽध्यत्त इति सूत्रे एव कर्त्तुं युक्तं, तत्र जीवसम्पत्तिपरतायाः स्फुटत्वात् भूतेष्विति सूत्रे जीवसहितप्राणनिर्द्देशाभावात् भूतशब्दतद्गतबहुवचनस्वारस्येन सर्वभूतसंसर्गपरत्वस्य स्फुटत्वात्, तत्र च व्युदसनीयशङ्काभेदसद्भावात् अधिकरणभेदस्य न्याय्यत्वात् । ननु नैकस्मिन्नित्यनेन पुनरुक्तिरिति चेन्न तस्य च व्युदसनीयशङ्कान्तरस्योपन्यस्तत्वात् । अन्ये त्वधिकरणभेदं वर्णयन्त एव तच्छ्रुतेरिति प्राणस्तेजसीति श्रुतेरिति व्याचक्षते तदयुक्तं तत्र तेजोमात्रश्रवणेन पूर्वपक्षबीजतया तन्निवारणक्षमत्वाभावात्, अतः वृधि_

वीमय इत्यादिश्रुतिरेव तत्रोदाहार्य्या अतोनैकस्मिन्नित्यत्र त्रिवृत्करण-पञ्चीकरणवाक्ये एवोदाहर्त्तव्ये पञ्चाग्निविद्यावाक्यस्य दशार्धानामिति स्मृतेश्च पुनःसम्भवविषयतया विद्वदविदुषोः समानत्वाभावात् भाष्ये तदनादरः ॥ भूताधिकरणं समाप्तम् ॥ सू० समाना च सृत्युपक्रमादमृतत्वं चानुपोष्य ॥ ७ ॥ सङ्गतिः स्फुटा किमियमुत्क्रान्तिर्विद्वदविदुषोःसमाना ? उताविदुषएवे ? ति ॥

सू० तयोर्ध्वमायन्नमृतत्वमेति विष्वङ्ङन्या उत्क्रमणे भवन्ति," इति, एवं नाडीविशेषेण गतिश्रवणाद्विदुषोऽप्युत्क्रान्तिर-वर्ज्जनीया, सा च नाडीप्रवेशात् प्राग्विशेषाश्रवणात्समाना, तत्प्रवेशदशायां च विशेषः श्रूयते "तेन प्रद्योतनेनैष आत्मा निष्क्रामति चक्षुषो वा मूर्ध्नो वा अन्येभ्यो वा शरीर-देशेभ्य"इति, शतं चैका च हृदयस्येत्यनया श्रुत्यैकार्थ्यात् मूर्ध्नो निष्क्रमणं विद्वद्विषयमितरदविद्वद्विषयं, यदुक्तं विदुषोऽचैषामृतत्वं श्राव्यते इति, तत्रोच्यते अमृतत्वं चानु-पोष्य इति, च-शब्दोऽवधारणे अनुपोष्य शरीरेन्द्रिया-दिसंबन्धमदग्ध्वैव यदमृतत्वमुत्तरपूर्वाघयोरश्लेषविनाश-रूपं प्राप्यते तदुच्यते "यदा सर्वे प्रमुच्यन्त" इत्यादिकया श्रुत्येत्यर्थः । अत्र ब्रह्म समश्नुत इति चोपासनवेलायां यो ब्रह्मानुभवस्तद्विषयमित्यभिप्रायः ॥

## तदापीतेः संसारव्यपदेशात् ॥ ८ ॥

अवश्यं च तदमृतत्वमदग्धदेहसम्बन्धस्यैवेति विज्ञेयं, कुतः, आपीतेः संसारव्यपदेशात् अपीतिरप्ययो ब्रह्मप्राप्तिः ।

टी० तयोर्ध्वमायन्नमृतत्वमेतीति श्रुतिः किं विदुष उत्क्रान्तिमवगमयति? नेति? किमेषा श्रुतिर्विद्वदमृतत्वश्रुत्युत्क्रान्तिनिषेधश्रुतिभ्यां व्याहन्यते नेति? इहामृतत्वं किमघाश्लेषविनाशरूपम्-उत सर्वबन्धमोक्षरूपं? निषिध्यमाना वोत्क्रान्तिः किं शरीरापादाना? उत शारीरापादाने? ति च, यद्देहामृतत्वं सर्वबन्धविमोक्षरूपम्। उत्क्रान्तिश्च शरीरापादाना तदा तद्विषयश्रुतिभ्यां तयोर्ध्वमायन्निति श्रुतेर्व्याघातादविदुष एवोत्क्रान्तिः यद्देहामृतत्वमघाश्लेषविनाशरूपं निषिद्धोत्क्रान्तिश्च शारीरापादाना तदा तद्विषयश्रुतिभ्यामूर्ध्वमायन्निति श्रुतेरविरोधात् विदुषोऽप्युत्क्रान्तिं सावगमयति इत्युत्क्रान्तिर्विद्वदविदुषोः समाना स्यात् । पूर्वपक्षहेतुमाह "विदुष" इति, राद्धान्ते विष्वङ्गिति, अन्या नाड्यः विष्वग्विततः ताश्चामुमुक्षूणामुत्क्रमणार्था इत्यर्थः, तेन प्रद्योतेन प्रकाशेन तस्य हैतस्य हृदयस्याग्रं प्रद्योतते तेनैष आत्मा निष्क्रामतीति पूर्वं श्रुतेः मूर्ध्नो निष्क्रामत एव ऊर्ध्वया नाड्या प्रकाशितद्वारया च निष्क्रमणमित्यर्थः वस्तुसामर्थ्यात्, अनुपोष्य-उष दाह इति धातुः । सू० तदापीतेः संसारव्यपदेशात् ॥ ८ ॥ उत्क्रान्तस्यापि गच्छतः सूक्ष्मशरीरसंबन्धादापीतेः संसार इत्यभिप्रायः । ब्रह्मणः सर्वगतत्वादत्रैव हि ब्रह्म प्राप्तमिति शङ्काया व्यावृत्त्यर्थमाह-

सू० सा चार्चिरादिना मार्गेण देशविशेषं गत्वेति वक्ष्यते, आतदवस्थाप्राप्तेः संसारो, देहसम्बन्धलक्षणो हि व्यपदिश्यते, तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ संपत्स्य इति, अश्व इव रोमाणि विधूय पापं चन्द्र इव राहोर्मुखात् प्रमुच्य धूत्वा शरीरमकृतं कृतात्मा ब्रह्मलोकमभिसंभवानी"ति च. ॥

**सू० सूक्ष्मं प्रमाणतश्च तथोपलब्धेः ॥ ९ ॥**

इतश्च विदुषोऽपि बन्धो नात्र विदग्धः, यतः सूक्ष्मशरीरमनुवर्त्तते, कुतः इदमवगम्यते, प्रमाणतस्तथोपलब्धेः,

उपलभ्यते हि देवयानेन पथा गच्छतो विदुषस्त्वं प्रति-ब्रूयात् सत्यं ब्रूयादिति चन्द्रमसा संवादवचनेन शरीरसद्भावः, अतः सूक्ष्मशरीरमनुवर्त्तते, अतश्च बन्धो न दग्धः ॥

## सू० नोपमर्देनातः ॥ १० ॥

अतो यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि स्थिताः । अथ मर्त्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुत" इति वचनं न बन्धोपमर्देनामृतत्वं वदति, ॥

## सू० अस्यैव चोपपत्तेरूष्मा ॥ ११ ॥

अस्य सूक्ष्मशरीरस्य क्वचिद्विद्यमानत्वोपपत्तेर्विदुषः प्रक्रान्तमरणस्य मरणात्प्रागूष्मा स्थूलशरीरे क्वाचित्क उपलभ्यते, न च स्थूलस्यैव शरीरस्यायमूष्मा अन्यत्रानुपलब्धेः, ततश्चोष्मणः क्वचिदुपलब्धिर्विदुषः सूक्ष्मशरीरस्योत्क्रान्तिनिबन्धनेति गम्यते, तस्माद्विदुषोऽप्यासृत्युपक्रमात्समानोत्क्रान्तिरिति सुष्ठूक्तं, पुनरपि विदुष उत्क्रान्तिर्न सम्भवतीत्याशङ्क्य परिह्रियते--

टी० 'सा चार्चिरादिने'ति, सू० सूक्ष्मं प्रमाणतश्च तथोपलब्धेः ॥ ९॥ पूर्वसूत्राभिमेतसूक्ष्मशरीरसम्बन्धे प्रमाणमिहोच्यते। सू० नोपमर्देनातः ॥ १० ॥ जीवन्मुक्तिनिराचिकीर्षयेदं सूत्रमुक्तम् उपासनविधानात्तस्याप्रयाणादनुवृत्तिश्रुतेरुत्क्रान्तिश्रुतिरर्चिरादिमार्गश्रुतेर्देशविशेषप्राप्त्या सर्वबन्धविमोक्षश्रुतेरीदृशानेकश्रुतीनां बाधप्रसङ्गात्स्मृत्यर्थविरोधाच्च जीवन्मुक्तिरनुपपन्नेति भावः । तदुक्तं भगवताऽऽपस्तम्बेन "वेदानिमं लोकममुञ्च परित्यज्यात्मानमन्विच्छेत् बुद्धे क्षेमप्रापणं तच्छास्त्रैर्विप्रतिषिद्धं बुद्धे चेत् क्षेमप्रापणमिहैव न दुःखमुपलभेत इति शास्त्रै"रिति बहुवचनेनानेकशास्त्रविरोधो विव-

स्वितः विप्रतिषिद्धं विशेषप्रतिषिद्धं प्रकरणसमवन्न समबलेन प्रतिरोधः कालात्ययापदिष्टवदधिकबलेन विरोधः अनेकशास्त्रविरोधादिति भावः । सू० अस्यैव चोपपत्तेरूष्मा ॥ ११ ॥ स्थूलशरीरस्योष्मा सार्वत्रिकः सन्तापयति स्वं देहमापादतलमस्तकमिति श्रुतेः, अत उत्क्रान्तौ क्वाचित्क ऊष्मा सूक्ष्मशरीरस्य क्वाचित्कत्वेन तत्रैव सर्वदेहव्याप्ताग्निशिखायाः क्रमेणोपहियमाणत्वादित्यर्थः ॥

## सू० प्रतिषेधादिति चेन्न शारीरात्स्पष्टो ह्येकेषाम् ॥ १२ ॥

भू० यदुक्तं विदुषोऽप्युत्क्रान्तिः समानेति तन्नोपपद्यते, विदुष उत्क्रान्तिप्रतिषेधात्, तथा हि "स एतास्तेजोमात्राः समभ्याददानो हृदयमेवान्वपक्रामतीत्युपक्रम्य तेन प्रद्योतेनैष आत्मा निष्क्रामति तमुत्क्रामन्तं प्राणोऽनूत्क्रामतीत्यविदुष उत्क्रान्तिप्रकारमभिधाय अन्यन्नवतरं कल्याणतरं रूपं कुरुत" इति देहान्तरपरिग्रहंचाभिधाय प्राप्यान्तं कर्मणस्तस्य यत्किञ्चेह करोत्ययं तस्माल्लोकात्पुनरेत्यस्मै लोकाय कर्मण" इति तु कामयमान इत्यविद्वद्विषयं परिसमाप्य अथाकामयमानोयोऽकामो निष्काम आप्तकाम आत्मकामो न तस्य प्राणा उत्क्रामन्ति ब्रह्मैव सन्ब्रह्माप्येतीति विदुष उत्क्रातिः प्रतिषिध्यते, तथा पूर्वचार्तभागप्रश्नेऽपि विदुष उत्क्रान्तिप्रतिषेधो दृश्यते अपपुनर्मृत्युं जयतीति विद्वांसं प्रस्तुत्य याज्ञवल्क्य इति होवा च यत्रायं पुरुषो म्रियत उदस्मात्प्राणा उत्क्रामन्त्याहो नेति पृष्टे नेति होवाच याज्ञवल्क्योऽत्रैव

समवलीयन्ते स उच्छ्वयत्याध्मातो मृतः शेते" इति अतो विद्वानित्थैवामृतत्वं प्राप्नोतीति चेत् तन्न शारीरात् प्रत्यगात्मनः प्राणानामुत्क्रान्तिर्ह्यत्र प्रतिषिध्यते, न शरीरात्, न तस्य प्राणा उत्क्रामन्तीत्यत्र तच्छब्देन अथाकामयमान इति प्रकृतः शारीर एव परामृश्यते नाश्रुतं शरीरम् ।

टी० पुनरपीति पूर्वमिहामृतत्वश्रुतिनिबन्धन उत्क्रान्त्यसम्भवः परिहृतः । सू० प्रतिषेधादिति चेन्न शारीरात् स्पष्टो ह्येकेषाम् ॥ १२ ॥ अथोत्क्रान्तिनिषेधश्रुतिनिबन्धनस्तदसम्भवः परिह्रियत इत्यर्थः । यदुक्तमित्यादि तेजोमात्राः भूतसूक्ष्मान् हृदयमेवान्वपक्रामति हृदयान्निष्क्रामतीत्यर्थः, तेन प्रद्योतेनेत्यादिवाक्यस्य कथमविद्वदुत्क्रान्तिपरत्वमिति चेत् उच्यते चतुर्मुखलोकगन्तुरुपासकस्यार्चिरादिकाङ्क्षितं पूर्वपक्षी मन्यते न तु मुक्तस्य, तस्मादविदुष इत्युक्तं पूर्वपक्षे, सिद्धान्ते तु विद्वद्विषयमेवेदं वाक्यम् अकामयमानो योऽकामो निष्काम इत्यत्र पुत्रवित्तविषयैषणात्रयराहित्यं विवक्षितम् । उदस्मात् प्राणाः क्रामन्ति उत्क्रामन्तीत्यन्वयः समवलीयन्ते अत्रैव शरीरे लीयन्त इत्यर्थः । स उच्छ्वयत्याध्मातः वायुना पूरित उच्छूनो भवतीत्यर्थः । तस्येत्यादि प्रकृतपरामर्शिनस्तत्शब्दस्य शारीरपरत्वात् तस्मात्प्राणानुत्क्रान्तिरुच्यत इत्यर्थः । चोदयति-

भा० तस्येति षष्ठ्या प्राणानां संबन्धित्वेन शारीरो निर्दिष्टः न तूत्क्रान्त्यपादानत्वेन, उत्क्रान्त्यपादानन्तु शरीरमेवेति चेन्न अपादानापेक्षायामश्रुताच्छरीरात् संबन्धितया श्रुतस्यात्मन एव सन्निहितत्वेनापादानतयाऽपि ग्राह्यत्वात् । किंच प्राणानां जीवसंबन्धितयैव प्रज्ञातानां तत्संबन्धकथने प्रयोजनाभावात् संबन्धमात्रवाचिन्या षष्ठ्या अपादानमेव विशेष इति निश्चीयते, यथा नटस्य

शृणोतीति, न चात्र विवदितव्यं स्पष्टो ह्येकेषां माध्यन्दिनानामाम्नाये शारीरो जीव एवापादानमिति, योऽकामो निष्काम आप्तकाम आत्मकामो न तस्मात्प्राणा उत्क्रामन्तीति शारीरात्प्राणानामुत्क्रान्तिप्रसङ्गाभावात्तत्प्रतिषेधो नोपपद्यत इति चेन्न तस्य तावदेव चिरमिति विदुषः शरीरवियोगकाले ब्रह्मसम्पत्तिवचनेन प्राणानामपि तस्मिन् काले शारीराद् विदुषो वियोगः प्रसज्यते, ततश्च देवयानेन पथा ब्रह्मसंपत्तिर्नोपपद्यत इति न तस्य प्राणा उत्क्रामन्ति देवयानेन पथा ब्रह्मप्राप्तेः प्राग् जीवाद्विदुषोऽपि प्राणा न विश्लिष्यन्तीत्युच्यते ।

टी० "तस्ये"ति, षष्ठ्यन्ततच्छब्दनिर्दिष्टः शारीरोऽस्तु तत्सम्बन्धिनां प्राणानामुत्क्रान्त्यपादानं शरीरमेवेत्यर्थः षष्ठ्या उपकरणोपकारित्वलक्षणसम्बन्धपरत्वमभ्युपगम्य परिहरति "ने"ति, अश्रुतस्य धर्मिणस्तस्यापादानत्वस्य चोभयोः कल्प्यत्वादपि सिद्धरूपस्यैव धर्मिण अपादानत्वमात्रकल्पनं युक्तमित्यर्थः । षष्ठ्या एवापादानत्वपरतामाह "किञ्चे"ति, प्राणानां जीवसम्बन्धकथननैरर्थक्यात् षष्ठ्या अपादानवाचकत्वाच्च शारीर एवापादानमित्यर्थः, नायमर्थः कथंचिदर्थानुगुण्यावगम्यः अपि तु कण्ठोक्तश्चेत्याह "न चात्रे"ति, स्पष्टो ह्येकेषामिति व्याख्येयं पदद्वयं व्याचष्टे "माध्यन्दिनाना"मिति, यथा यो विज्ञाने तिष्ठन्नित्यत्र विज्ञान-शब्दः समानप्रकरणस्थेन य आत्मनि तिष्ठन्नित्यात्म-शब्देनात्मपरो निश्चीयते तथा तस्येति षष्ठ्यन्तपदं तस्मादिति पञ्चम्यन्तपदेन पञ्चम्यर्थं निश्चीयत इत्यर्थः । चोदयति "शारीराद्दि"ति, प्रसक्तस्य हि प्रतिषेधः अत्र तदभावान्न निषेधोपपत्तिरित्यर्थः । परिहरति "ने"ति, शरीरवियोगकाले—प्रारब्धकर्महेतुकचरमशरीरवियोगकाल इत्यर्थः । तदानीं शारीरात् प्राणानां

वियोगस्यानिष्टत्वे सति हि तन्निषेधः कार्य्य इत्यत्राह "ततश्च देवयानेने"ति, न तस्य प्राणा इत्यस्यार्थमाह "न तस्ये"ति, ।

श्रू० आर्त्तभागप्रश्नोऽपि यदा विद्वद्विषयः तदाऽयमेव परिहारः, स त्वविद्वद्विषयस्तत्र च प्रश्नप्रतिवचनयोर्ब्रह्मविद्याप्रसङ्गादर्शनात्, तत्र हि ग्रहातिग्रहरूपेणेन्द्रियेन्द्रियार्थस्वभावोऽपामग्न्यन्नत्वं म्रियमाणस्य जीवस्य प्राणपरित्यागो मृतस्य नामवाच्यकीर्त्यनुवृत्तिस्तस्य च पुण्यपापानुगुणगतिप्राप्तिरित्येतेऽर्थाः प्रश्नपूर्वकं प्रत्युक्ताः, तत्र चापपुनर्मृत्युं जयतीत्यपामग्न्यन्नत्वज्ञानादग्निजय एव मृत्युजय उच्यते अतो नात्र विदुषः प्रसङ्गः, अविदुषस्तु प्राणाऽनुत्क्रान्तिवचनं स्थूलदेहवत्प्राणा न मुचन्ति, अपि तु भूतसूक्ष्मवज्जीवं परिषज्य गच्छन्तीति प्रतिपादयतीति निरवद्यम् ॥

## सू० स्मर्यते च ॥ १३ ॥

स्मर्य्यते च विदुषोऽपि मूर्द्धन्यनाड्योत्क्रान्तिः ।

टी० आर्त्तभागेत्यादि, ग्रहातिग्रहरूपेण—ग्रहः पात्रविशेषः, तत्स्थद्रव्यमतिग्रहः, तद्रूपेण आकर्षकरज्जुतत्समाकृष्यरूपेण वा अपामग्न्यन्नत्वम् अग्नेरपां भक्षकत्वानुसन्धानं विहितं फलविशेषाय उदस्मात्प्राणाः क्रामन्तीत्यादिना जीवस्य प्राणपरित्यागकथनमपपुनर्मृत्युं जयति मृत्यु-शब्दवाच्यमग्निमपजयति, उदस्मादित्यादि अविद्वद्विषयं चेत्कथं प्राणानुत्क्रान्तिवचनमित्यत्राह "अविदुषस्त्वे"ति, । सू० स्मर्य्यते च ॥ १३ ॥ ऊर्ध्वमेकमित्यादिवचनं याज्ञवल्क्यस्मृतौ, तेषां नाडीविशेषाणाम् । परे तु समाना चेत्यादिसूत्रमेकं पृथगधिकरणं वर्णयन्ति निर्गुणब्रह्मविद इव सगुणोपासकस्याप्यमृतत्वप्राप्तिश्रवणेन पुनर्भवाभावात् पुनर्भवहेतुभूतभू-

तात्पर्यविशिष्टोत्क्रान्तिः सगुणनिष्ठस्यापि न सम्भवति, विद्याप्रकरणेषूत्क्रान्तिकथनं स्वापादिवत्सर्वप्राणिसाधारणोत्क्रान्त्यनुवादस्तेजस्सम्पत्तिस्थानभूतपरदेवतातादात्म्यप्रतिपादनार्थमिति पूर्वपक्षं कृत्वा अविदुषः सगुणविदुषश्च समानोत्क्रान्तिर्नाडीप्रवेशात् पूर्वमिति सिद्धान्तयन्ति, निर्गुणविद्याया अप्रामाणिकत्वादेव तदयुक्तं तदापीतेरित्यादिकमधिकरणान्तरमाहुः तेजः परस्यां देवतायामिति साध्यक्षस्य सप्राणस्य सकरणग्रामस्य तेजस आत्यन्तिकप्रलय उच्यते ब्रह्मणः सर्वप्रकृतित्वात् तत्र लयोपपत्तेरिति पूर्वपक्षं कृत्वा ज्योतिष्टोमादिविधानविद्याशास्त्रवैयर्थ्यादिभिः सुषुप्तिप्रलयवन्नात्यन्तिक इति सिद्धान्तयन्ति, तदप्ययुक्तं कृतकरत्वात्, स एव तु कर्मानुस्मृतिशब्दविधिभ्य इत्यत्र सुषुप्तौ सुनिरूपितो ह्ययमर्थः । न च शङ्कान्तरमस्ति अत एकाधिकरण्यमेव युक्तम् ॥

सू० "ऊर्द्धमेकः स्थितस्तेषां योभित्त्वा सूर्य्यमण्डलं ब्रह्मलोकमतिक्रम्य तेन याति पराङ्गति"मिति ॥ आस्त्युपक्रमाधिकरणं समाप्तम् ॥

टी० इयञ्च तेषां सूत्रयोजना, तच्च तेजोभूतान्तरसंसृष्टं सूक्ष्मं नाडीनिष्क्रमणश्रुतिरूपप्रमाणात्सौक्ष्म्यमुपलभ्यते, अत एव पार्श्वस्थैरनुपलम्भोमूर्त्तान्तराप्रतिघातश्चेति, अत एव सूक्ष्मत्वात् स्थूलदेहोपमर्द्देन नोपमृद्यत इतीदमधिकरणमविदुष आत्यन्तिकलयाभावसमर्थनार्थं चेत् सूक्ष्ममित्यादि सूत्रयमनपेक्षितं सूक्ष्मदेहसमर्थनस्यानुपयोगात्, भूतसूक्ष्मसंसर्गस्य पञ्चाग्निविद्यायां निरूपितत्वाच्च । नन्वविदुष आत्यन्तिकलयाभावे तस्य सूक्ष्मदेहवतो निःसरत उपलम्भादिप्रसङ्गः परिहर्त्तव्य इति चेत् न वेतालादिस्थूलशरीरस्याप्यदृश्यत्वे स्थिते कथं दृश्यत्वशङ्का भवेत् । यद्यपि कस्यचित्सा स्यात् अतिमन्दतया न परिहर्त्तव्या । यद्यपि परिहर्त्तव्या तदन्तरप्रतिपत्तावित्यत्रैव परिहर्त्तव्या कृतकरत्वस्योक्तत्वादेव सर्वमिदमसङ्गतं प्रतिषेधादिति चेन्न शारीरादिति पूर्वपक्षसूत्रं कृत्वा स्पष्टो ह्येकेषामिति सिद्धान्तसूत्रं योजयन्ति तत्तावदक्षरानुगुणं, हि—शब्देन पूर्वा-

क्त्योपपादकत्वप्रतीतेः, स्पृष्टो ह्येकेषामिति आर्त्तभागप्रश्नप्रतिवचनवाक्यमुदाहरन्ति अत्र प्राणानुत्क्रान्तेरमृतत्वाभावशङ्कां शमयितुमत्रैव समलीयन्त इति प्राणविलय उक्तः। अस्मादिति न शारीरोऽवधिरुच्यते स उच्छ्वयतीत्युच्छ्वयनादिधर्मोक्तेस्तदैकार्थ्याच्च तस्मात्प्राणा उत्क्रामन्तीत्यत्रापि शरीरादुत्क्रान्तिर्निषिध्यते तस्मादित्यस्य प्रकृतपरामर्शित्वेऽप्यभेदोपचारादुच्छ्वयनादिमतो देहस्यैव निर्देशः आर्त्तभागप्रश्नैकार्थ्यात्, अप्राप्तस्य निषेधायोगाच्च । न च शारीरादुत्क्रान्तेः प्राप्तिरस्ति, अतः सा न निषेध्या वाक्यसामञ्जस्यं च न स्यात्क्रामायमानस्योत्क्रान्तिमुक्त्वाथाकामयमानं पृथङ्निर्दिश्य तस्याप्युत्क्रमणोपदेशे हि पृथग्व्यपदेशोपक्रमो भ्रान्तजल्पवत्स्यात्, न तस्य प्राणा इति षष्ठ्यवगतसंबन्धमात्रस्य करणत्वकरणित्वादिलक्षणविशेषपर्यवसानसिद्धेर्न तस्मात्प्राणा इति वाक्यान्तरावगतविशेषपर्यवसानाकाङ्क्षा च नास्ति तत्र च तच्छब्दः शारीरपर इत्युक्तं, स्मर्य्यते चेति सूत्रेण सर्वभूतात्मभूतस्य सम्यग् भूतानि पश्यतः । देवापि मार्गे मुह्यन्ति ह्यपदस्य पदैषिण इति निषेधस्मृतिरभिप्रेतेत्याहुः स्यादित्यमण्डलप्राप्तिर्विशिष्टदेशे देहत्यागाय न तु मुक्तेर्मार्गगमनापेक्षयेति शुकवाहुः अत्र ब्रूमः निर्गुणविद्याया अभावात् निर्गुणप्राप्त्यभावाच्च सगुणनिष्ठ एव परविद्यानिष्ठः सद्विद्यादिष्वप्यानन्दाद्यनुगमात् । अथ परा यया तदक्षरमधिगम्यत इत्युपक्रम्य यः सर्वज्ञः सर्वविदित्याम्ननात् परं ज्योतिरूपसंपन्नस्य जक्षणाद्याम्ननात्, सत्यं ज्ञानमित्यत्र सर्वकामविशिष्टब्रह्मानुभवदर्शनाच्च परविद्यानिष्ठस्यैव सर्वे वेदान्ता गतिमामनन्ति, अस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसंपद्य तयोर्ध्वमायन्नमृतत्वमेति तेन प्रद्योतेनैष आत्मा निष्क्रामति चक्षुषो वा मूर्ध्नो वा यत्रासौ केशान्तो विवर्त्तते व्यपोह्य शीर्षकपाले" इति, स एतमेव सीमानं विदार्य्यैतया द्वारा प्रापद्यत सैषा विदृतिर्नामेत्युपक्रम्य स य एवं विद्वानस्माच्छरीरभेदादूर्ध्वमुत्क्रम्यामुष्मिन् स्वर्गे लोके सर्वान्कामानाप्त्वाऽमृतः समभवत् अपुनर्भवाय कोशं भिनत्ति कोशं भित्त्वा शीर्षकपालं भिनत्ति शीर्षकपालं भित्त्वा पृथिवीं भिनत्तीत्यारभ्याकाशं भित्त्वाऽव्यक्तं भिनत्ति अक्षरं भिनत्ति

मृत्युं भिनत्ति मृत्युर्वै परे देव एकीभवती''ति, तदुक्तमार्त्तभागप्रश्नैकार्थ्याच्छ्रुयनाम्नानवाक्यासामञ्जस्याप्राप्तनिषेधायोगविशेषपर्य्यवसाननैराकाङ्क्ष्यैर्नोत्क्रान्तिर्विदुष इति तदयुक्तं तथा हि आर्त्तभागप्रश्नस्य विद्वद्विषयत्वाभावात् तदैकार्थ्यमनपेक्षितं, तत्र स सर्वप्राणिसाधारणः तत्र चास्मात्प्राणाः क्रामन्त्युत नेति प्रश्नो न शरीराद्रुत्क्रान्तिविषयः किं तु शारीरात्, शरीरे प्राणस्थित्यभावेन तत उत्क्रान्तेरसंदिग्धत्वात् । अतः प्रतिवचनमपि शारीरादनुत्क्रान्तिविषयम् । अत्रैव जीवे समवलीयन्ते संसृज्यन्ते स उच्छ्वयतीत्यभेदोपचाराददहमभिमानविषयदेहनिर्देशः । यथा परपत्ते योऽकामो निष्काम आप्तकाम आत्मकामः न तस्मात् प्राणा उत्क्रामन्तीति तच्छब्दनिर्देशः, अतो विद्वत्प्रकरणस्य न तदैकार्थ्यापेता आर्तभागप्रश्नस्य विद्वद्विषयत्वेऽपि शारीरविषयत्वं दर्शितं, वाक्यासामञ्जस्यं तु नास्ति कामयमानाकामयमानयोः समानायामप्युत्क्रान्तौ ब्रह्मप्राप्त्यभावतत्सद्भावरूपवैषम्यक्तत्वाद्वाक्यभेदस्य, सकामनिष्कामविषयतया प्रकरणभेदः नोत्क्रान्त्यनुत्क्रान्तिविषयतया काममय एवं पुरुष इत्युपक्रम्य इति तु कामयमान इत्युपसंहृत्याथाकामयमान इति प्रस्तावात्तयोश्च वैषम्यं ब्रह्मप्राप्तितदभावाभ्यां नोत्क्रान्तितदभावाभ्यामिति वाक्यसामञ्जस्यसिद्धिः, अप्राप्तनिषेधोऽपि नास्ति आर्थप्राप्तविषयत्वान्निषेधस्य, सर्वशाखाप्रत्ययन्यायेन सर्वासु विद्यासु देहपातसमये सुकृतदुष्कृतप्रहाणमुक्तं भवति, अतो भोक्तव्याभावेन लोकान्तरगमनाभावाद्विदुषो लोकान्तरगत्यौपयिकप्राणादिविश्लेषः शारीरस्यार्थवशात् प्राप्तः, अतः शारीराद्रुत्क्रान्तिरर्थप्राप्ता प्रतिषेध्या स्यादर्चिरादिगत्युपपत्त्यर्थं षष्ठ्याऽवगतस्य संबन्धस्योपकरणोपरणित्वादिलक्षणसंबन्धविशेषपर्यवसाने सम्भवत्यपि उत्क्रमणस्यापादानापेक्षायां सन्निहितस्यैवापादानत्वकल्पनोपपत्तेर्विशेषसाकाङ्क्षस्य संबन्धमात्रस्याकाङ्क्षितापादानत्वविशेषपर्यवसानं न्याय्यं, न त्वनाकाङ्क्षिते करणत्वकरणित्वादिरूपे अपादानस्याकाङ्क्षितत्वादेव छागपशुन्यायाद्वाक्यान्तरावगतापादानविशेषपर्यवसायित्वं च न्याय्यं यत उत्क्रान्तिनिषेधः श्रुतौ नास्ति अत एव स्मर्य्यते चेत्यत्राप्युत्क्रान्तिविषयस्मृतिवचनमेवोदाहर्त्तव्यं "देवापि मार्गे

मुह्यन्ती'ति वचनं त्वतद्विषयत्वादनुदाहार्य्यन्तच्च न गतिनिषेधपरं किन्तु गतेर्दुरवगमत्वपरं तथा च परपक्षानौपयिकत्वाच्च नोदाहार्य्यं तस्य च गतिनिषेधपरत्वाभावो मोक्षधर्म एव गतिविधानादवगम्यते ते "तीर्त्वा दुस्तरं जन्म विशन्ति विमलं नभः । ततस्तान् सुकृतीन्सर्वान्सूर्यो वहति रश्मिभिः ॥ पद्मतन्तुवदाविश्य प्रवहन् विषयान् नृप तत्र तान् प्रवहन् वायुः प्रतिगृह्णाति भारत । वीतरागान् यतीन् सिद्धान् धिया युक्तांस्तपोधनान् । सूक्ष्मः शीतः सुगन्धिश्च सुखस्पर्शश्च भारत । सप्तानां मरुतां श्रेष्ठोलोकान् गच्छति यः शुभान् । स तान् वहति कौन्तेय? तमसः परमां गतिम् । तमोवहति लोकेश रजसः परमाङ्गतिं रजोवहति राजेन्द्र? सत्त्वस्य परमाङ्गतिम् । सत्त्वं वहति शुद्धात्मा परं नारायणं प्रभुं प्रभुर्वहति शुद्धात्मा परमात्मानमात्मना । परमात्मानमासाद्य तद्भूतायतमानसाः । अमृतत्वाय कल्पन्ते न निवर्त्तन्ति चाविभो । परमा सा गतिः पार्थ निर्द्वन्द्वानां महात्मनाम् । आत्मा केवलतां प्राप्तो यत्र गत्वा न शोचति । ईदृशं परमं स्थानं निरयास्ते च तादृशा" इति, यत्तु शुक्रोत्पतनं विशिष्टदेशे देहत्यागाय न तु मुक्तो मार्गापेक्षयेति तदप्ययुक्तं "दृष्टो मार्गः प्रवृत्तोऽस्मी"ति गतिचिन्तायां मार्गस्य दृष्टत्वाभिधानात् भूतैः समतिवाह्यत इत्यातिवाहिकैरतिवाहनस्योक्तत्वाच्च स्थूलदेहेन आसूर्य्यमण्डलात् गमनं योगप्रभावज्ञापनार्थमित्युक्तं दर्शयित्वा प्रभावं स्वामिनि सर्वभूतगतोऽभवदिति च ज्ञानेन सर्वभूतव्याप्तिरुक्ता "सर्वं ह पश्यः पश्यति सर्वमाप्नोति सर्वश" इति श्रुतेः, अन्ये तु अप्राप्तायाः शारीरादुत्क्रान्तेः कथं प्रतिषेध इत्येतदेवं परिहरन्ति नात्र शारीरादुत्क्रान्तिः प्रतिषिध्यते किं त्वत्र ब्रह्म समश्नुत इति वक्तुमनुवादः सञ्जातविद्यः पुरुषः प्रारब्धवशादनुत्क्रान्तप्राणो जीवद्दशायामेव ब्रह्मानुभवतीत्यर्थ इति तदविरुद्धत्वात्तथाऽपि तदनादरे कारणमस्ति शारीरादनुत्क्रान्त्यनुवादेनात्र ब्रह्मापरोक्ष्याभिधानेऽपि गतिप्रतिषेधशङ्कापरिहारः सिद्ध्येत् तथाऽपि नाशारीरात्स्पष्टोह्येकेषामिति वदतः सूत्रकारस्य शारीरादुत्क्रान्तिर्भाक्त्या-

भावप्राप्ता प्रतिषिध्यते इत्येवाभिप्राय इति ॥ आसृत्युपक्रमाधिकरणं समाप्तम् ॥

परसंपत्त्यधिकरणम् । **सू० तानि परे तथा ह्याह ॥ १४ ॥**

भू० सकरणग्रामः सप्राणः करणाध्यक्षः प्रत्यगात्मोत्क्रान्तिवेलायां तेजःप्रभृतिभूतसूक्ष्मेषु सम्पद्यत इत्युक्तं, सैषा सम्पत्तिर्विदुषो न विद्यत इत्याशङ्क्य परिहृतं, तानि पुनर्जीवपरिष्वक्तानि भूतसूक्ष्माणि किं यथाकर्म यथाविद्यं च स्वकार्य्याय गच्छन्ति ? उत परमात्मनि सम्पद्यन्ते इति विशये मध्ये परमात्मसम्पत्तौ सुखदुःखोपभोगरूपकार्यादर्शनात्तदुपभोगानुगुण्येन यथाकर्म यथाविद्यं च गच्छन्तीति प्राप्ते उच्यते तानि परे इति, तानि परस्मिन्नात्मनि सम्पद्यन्ते, कुतः तथा ह्याह श्रुतिः "तेजः परस्यां देवतायामि"ति, यथा ह श्रुतिस्तदनुगुणं कार्यं कल्प्यमित्यर्थः सुषुप्तिप्रलययोर्यथा परमात्मसंपत्त्या सुखदुःखोपभोगायासविश्रामस्तद्वदिहापि। परसंपत्त्यधिकरणं समाप्तम् ॥

टी० सू० तानि परे तथा ह्याह ॥ १४ ॥ अवान्तरसङ्गतिमाह "सकरणे"ति, सैषेति पूर्वं समाना चासृत्युपक्रमादिति नाडीप्रवेशात् पूर्वं मुमुक्षुसंसारिणोर्गतेः समानत्वमुक्तं, तत्र वक्ष्यमाणाधिकरणद्वयप्रतिपाद्यायां परमात्मसम्पत्तौ मुक्तस्यास्तित्वनास्तित्वविगानं नास्ति, यतः पूर्वाधिकरणप्रतिपादितार्थ एव विप्रतिपत्तिः, अतस्तट्टीकोज्ज्वलनमित्येतस्मात्पूर्वाधिकरणप्रतिपाद्येऽर्थे विद्वदविदुषोः समानेऽपि तानि पर इत्यधिकरणात् पूर्वत्रैव विद्वदविदुषोः समानत्वविप्रतिपत्तिरिति हृदि कृत्वा सूत्रकारैः समानत्वमुक्तमित्यभिप्रायेणात्र सैषा संपत्तिर्विदुषो न

विद्यत इत्याशङ्क्य परिहृतमित्युक्तं भाष्ये, किं तेजःशब्दनिर्दिष्टानि भूतानि जीवपरिष्वक्तानि यथा कर्म यथाविद्यं गच्छन्ति? उत परमात्मनि सम्पद्यन्ते? किमत्र परदेवताशब्दो गन्तव्यस्थानावस्थपरमात्मपरः? उतातदवस्थपरमात्मपर? इति, किमत्र सम्पत्तौ प्रयोजनं सम्भवति? नेति, असम्भवे परमात्म-शब्दस्य गन्तव्यप्रदेशविशेषावस्थापरमात्मपरत्वेन यथाकर्मविद्यं गच्छेयुः, सम्भवेऽतदवस्थपरमात्मपरत्वेन तस्मिन्सम्पद्येरन् । पूर्वपक्षमाह "मध्य"इति, तेजः परस्यामिति श्रुतिः परस्यात्मनः सर्वदा सर्वाधारत्वमात्रपरेति पूर्वपक्षिणोऽभिप्रायः । राद्धान्ते तथा ह्याह श्रुतिरिति वाङ् मनसि सम्पद्यत इत्यादिनिर्देशो न सर्ववस्तुसाधारणधारकत्वाभिप्रायः, अतः सम्पत्तिरेवार्थ इति भावः ॥ परसंपत्त्यधिकरणं समाप्तम् ।

अविभागाधिकरणम्[1] **सू० अविभागोवचनात् ॥ १५ ॥**

भा० सेयं परमात्मनि सम्पत्तिः किं प्राकृतलयवत् कारणापत्तिरूपा? उत वाङ् मनसीत्यादिवदविभागरूपेति? चिन्तायां परमात्मनः सर्वेषां योनिभूतत्वात्कारणापत्तिरूपेति प्राप्ते उच्यते "अविभाग"इति, अपृथग्भावः पृथग्व्यवहारानर्हसंसर्ग इत्यर्थः, कुतः वचनात्तेजः परस्यां देवतायामित्यत्रापि वाङ् मनसि सम्पद्यत इति वचनस्यानुषङ्गात्, तस्य च संसर्गविशेषवाचित्वात्तदनुषक्तस्याभिधानवैरूप्ये प्रमाणाभावादुत्क्रान्तिवेलायां कारणापत्तिप्रयोजनाभावात् ।

टी० सू० अविभागो वचनात् ॥ १५ ॥ सङ्गतिपूर्वपक्षावुच्येते सेयमित्यादिना किमियं सम्पत्तिर्लयरूपा? उताविभागरूपा? किं तेजःपरस्यामिति वचनस्य कारणापत्तिपरत्वं न्याय्यम्? उताविभागमात्रपरत्वमिति, प्रथमे लयरूपत्वं, द्वितीये त्वविभागरूपत्वम्, अविभाग इतीति, अनुषक्तमपि

पदमत्र कारणापत्तिवाचीत्यत्राह "अनुपक्तस्येति, उत्क्रान्तिवेलायां कारणापत्तिप्रयोजनाभावात् इति भारवाहकस्य देहिनः सभारस्यैव यष्ट्यवष्टम्भेन विश्रमतुल्यः सुषुप्तौ विश्रमः, अपनीतभारस्य विश्रमतुल्यो-महाप्रलये, यथा च कञ्चुकोष्णीषवतस्तद्रहितस्य च विश्रमस्तद्वत् कारणे लीनस्य करणकलेवररहितस्य द्विपरार्द्धकाले विश्रम इति प्रयो-जनविभागः सुषुप्तिप्रलययोः शरीरान्वयव्यतिरेकाभ्यामवगतस्तदभा-वादित्यर्थः । अव्यक्तादेः पुनःसृष्टिरुक्ता चेत् कारणापत्तिः प्रयो-जनं च कल्प्यं, सा च नास्तीत्याह "पुनस्तत्राव्यक्तादिसृष्टवचनाच्चे"ति, सुषुप्तौ जीवमात्रस्याविभागापत्तिः प्रलय एव विशिष्टस्य लयापत्तिः उत्क्रान्तौ तु भूतसूक्ष्मविशिष्टस्य लयानुपपत्त्या संयोगमात्रमेव विशेष्यां-शस्य प्रलय इति चेत् तेजः—शब्दस्य विशेष्यभूतजीवमात्रविषयत्वाभावात् अनुषक्तपदार्थवैरूप्यायोगादिभिश्च, एवं विभागानर्हभूतसूक्ष्मविशिष्टस्य लयानुपपत्त्या प्रयोजनाभावाव्यक्तादिसृष्टवचनाभ्यां च संपत्तिः संयोगः नित्यान्तरवस्थिते ऽपि परमात्मनि तदानीं संसर्गविशेषः शास्त्रैकसम-धिगम्यः । परे त्विदमधिकरणद्वयं परविद्यानिष्ठविषयं व्याचक्षते तत्र गताः कलाः पञ्चदशप्रतिष्ठा इति प्रतिष्ठा—शब्दवाच्यस्वकारणेषु कलानां लयं पूर्वपक्षीकृत्य षोडशकलाः पुरुषं प्राप्यास्तं गच्छन्तीति श्रुत्या ब्रह्मणि लयः इयं विद्वद्दृष्टिः स्वकारणेषु लयोक्तिस्त्वविद्वद्दृष्ट्या स्यात्स्वका-रणेषु लयेऽपि तैः पृथिव्यादिभिः सह ब्रह्मणि लयश्चोपपन्नः इति सिद्धान्तयन्ति प्रथमे ।

सू० पुनस्तत्राव्यक्तादिसृष्टवचनाच्च ॥ अविभागाधिकरणं समाप्तम् ॥

टी० स च ब्रह्मविदः परमात्मनि कलाप्रलयः सावशेषः उत्क्रा-न्त्यादाविवेति पूर्वपक्षं कृत्वा भिद्येते चासां नामरूपे पुरुष इति वच-नादविद्याकल्पितानां विद्यानिमित्तप्रलये सावशेषत्वानुपपत्तेश्च निरवशेषः प्रलय इति द्वितीये सिद्धान्तयन्ति, तत्राद्ये ब्रह्मण्येव लयसमर्थनमप्रत्यक्ष-

विरुद्धं श्रुतिविरुद्धं च, भस्माद्यवस्थो हि देहः पृथिव्यादिषु लीयमानो दृष्टः, "पृथिव्यप्सु प्रलीयते आपस्तेजसि लीयन्ते" इति च श्रुतिः नायमविद्वद्विषयो लय उच्यते इन्द्रियाणि तन्मात्रेषु तन्मात्राणि भूतादौ लीयन्ते भूतादिर्महति लीयते इत्यादिनोक्तस्य सेन्द्रियाणां तन्मात्रादीनां भूतादिप्रभृतिषु लयस्याविद्वद्विषयाऽप्यवगतत्वात्सांख्यदृष्टिरियमिति चेत्तत: किं यतः श्रुत्यविरोधः तत्र सांख्यदृष्टेः श्रुतिमूलत्वान्न निराकरणीयता तद्वैक आहुः कुतस्तु खलु सोम्येवं स्यादितिवत् परमतत्वेनोपन्यस्य श्रुत्यैव निराकृतत्वाभावाच्च नोपेक्ष्यता, पराशराद्युपबृंहणानुगृहीता चेयं श्रुतिः, सर्वस्य तज्जत्वश्रुतिविरोधात् परमतत्वमिति चेन्न सर्वस्य तज्जत्वश्रुतिविरोधेन आकाशाद्वायुरित्याद्युक्तसर्गस्यापि परमतत्वप्रसङ्गात् तत्तदवस्थब्रह्मणः कारणत्वादविरोधश्चेत् लयेऽपि तुल्यम्, अत एव पुरुषं प्राप्यास्तं गच्छन्तीति चोपपन्नम् । एवमद्वारकलयस्य श्रुतिप्रत्यक्षविरोधात् सद्वारकलयस्य सर्वसाधारणतया श्रुतिप्रत्यक्षसिद्धतया ब्रह्मविदो विशेषाभावाच्चाद्याधिकरणवर्णनमयुक्तम् इतरत्र च निरवशेषलयो नाम किं निरवयवविनाशः ? उत पृथिवीत्वादिप्रहाणम् ? उत मुक्तस्य पुनर्देहारम्भायोग्यत्वम् ? उत चेतनान्तरयुक्तस्यापि देहारम्भायोग्यत्वं ? न प्रथमः "तदेतदक्षयं नित्यं जगन्मुनिवराखिलम् । आविर्भावतिरोभावजन्मनाशविकल्पवत्" इति नित्यत्ववचनात् । नापि द्वितीयः ब्रह्मविद्देहस्यापि भस्मीभावादिदशायां पृथिवीत्वानुवृत्तिदर्शनात् पृथिवीत्वादिप्रहाणस्य समष्टितत्त्वलयदशाभावित्वात् तस्य च प्राकृतप्रलयभावित्वात् नैमित्तिकादिप्रलयेषु पृथिवीत्वादिप्रहाणस्य प्रमाणाभावात् भिद्येते चासां नामरूपे इति श्रुतेर्देवमनुष्यादिनामरूपविषयतया वा प्राकृतप्रलयविषयतया वार्थवत्त्वाच्च । न तृतीयः मुक्तस्यापुनरावृत्तेर्वक्ष्यमाणतया तं प्रति देहारम्भकत्वशङ्काया असम्भवेनाविचार्यत्वात् । न चतुर्थः नियामकाभावात्, न हि देवदत्तस्याङ्गुलीयतया परिणतः कनकांशो यज्ञदत्तं प्रति न तथा परिणमतीति नियन्तुं शक्यम्, अतोऽनुपपन्नम् । अपरे तु "तानि परे" इति सूत्रं पृथगधिकरणयन्ति तैश्च सूत्रार्थः परैरिव वर्णितः । तत्रानुपपत्तिश्च

पूर्ववत्, अविभागसूत्रनिर्वाहोऽपि पूर्वोक्तयैव दिशा निरस्तः । अन्ये तु वागादिलयस्यामुख्यत्वादस्वयोनौ लयसम्भवेऽपीह लयस्य मुख्यत्वात्तेजः-प्रभृतिभूतानां स्वयोनिष्विति पूर्वपक्षं कृत्वा तन्त्वादीनां भस्माद्यवस्था-नामस्वयोनौ विनाशदर्शनानुगृहीतात्तेजःपरस्यामिति वचनात् हृदिस्थे परमात्मनि लय इत्याद्ये सिद्धान्तयन्ति । अनन्तरे च स एव मरणे भूत-लयः किं स्थूलभेदे स्थिते वस्त्वन्तरसंश्लेषमात्रम्? उत जीवानामिव स्थूल-भेदनिवृत्त्या सूक्ष्मशक्तिभेदयोगेनैव नीरक्षीरन्यायादविभागप्राप्तिलक्षण इति संशय्य पूर्ववाक्यत्रयानुषक्तस्य सम्पत्तिशब्दस्यात्रानुवृत्त्या संश्लेषमात्रमिति पूर्वपक्षं कृत्वा मरणे भूतेभ्यः समुत्थाय तान्येवानुविनश्यतीति जीववि-नाशदर्शनात्तद्वदविभागापत्तिरिति सिद्धायन्ति भूतानां कारणानां च महाप्रलये सूक्ष्मशक्तिभेदोऽपि नावशिष्यते, मरणे तु सोऽवशिष्यते शरीरा-न्तरार्थं तेषां गमनोपपत्तेरिति चाहुः । तत्र तावद्धृदयस्थः परदेवताप्राज्ञात्म-शब्दवाच्यः परमात्मा नामेश्वर एव तत्र लयोमुख्य इत्यनुपपन्नम् । ईश्वरां-शस्य निमित्तकारणत्वात्, अस्वयोनावपि लयो दृष्ट इति चेत् न भस्मा-द्यवस्थतन्त्वादीन्प्रति साक्षादनुपादानत्वेऽपि प्राणाल्योपादानत्वात् पृथि-व्यास्तत्र लय उपपन्नः ईश्वरः प्राणाद्यापि न भूतकरणग्रामोपादानमिति न तत्र मुख्यलयसंभवः । सन्मात्रे लय इति चेन्न तस्य परदेवताप्राज्ञात्म-शब्दवाच्यत्वाभावादंशत्रयव्यतिरेकेण सन्मात्रस्य कस्यचित् घटशरावाद्य-वस्थमृद्वदवस्थानानभ्युपगमाच्च, तस्माल्लय इति सिद्धान्तस्तस्य च मुख्यत्वेऽभ्युपगते सत्यस्वयोनौ परमात्मनि लय इत्यपि अनुपपन्नं, वत्र-नन्तु वाङ्मनसीतिवदन्यथासिद्धत्वादस्वयोनौ लये प्रमाणं न स्यात्, अनन्तरे चाधिकरणे स्थूलभेदनिवृत्त्या जीववदविभाग इति यत्तन्निरूपणो-पयभूतकरणानां महाप्रलयवद्विनाशस्तावदनभ्युपगतः लोकान्तरगमनश्रव-णात् सूक्ष्मशक्तिभेदावशेषस्थूलभेदविशेषनिवृत्तिर्नाम किं मनुष्यादिसन्नि-वेशप्रहाणम्? उत पृथिवीत्वादिप्रहाणं? न प्रथमः, संस्थानापगमस्य प्रत्य-क्षतया निरूपणीयत्वाभावात्, न द्वितीयः लोकान्तरगमनानुपपत्तेः, यदि निवृत्तस्थूलाकाराणां परमात्मनि संपत्तिर्निरूप्या सा तु तानि पर इत्यत्र

निरूपितेति निरूपणीयाभावादतिभागाधिकरणानारम्भ एव स्यात् ॥
अविभागाधिकरणं समाप्तम् ॥

तदोकोऽधिकरणम् । **सू० तदोकोऽग्रज्वलनन्तत्प्रकाशितद्वारो विद्यासामर्थ्यात्तच्छेषगत्यनुस्मृतियोगाच्च हार्दानुगृहीतः शताधिकया ॥ १६ ॥**

श्रू० एवं गत्युपक्रमावधि विद्वदविदुषोः समानाकार उत्क्रान्तिप्रकार उक्तः, इदानीं विदुषो विशेष उच्यते—तच्चेदमाम्नायते "शतं चैका च हृदयस्य नाड्यस्तासां मूर्द्धानमभिनिःसृतैका तयोर्द्ध्वमायन्नमृतत्वमेति विष्वङ्ङन्या उत्क्रमणे भवन्ती"ति, अनया नाडीनां शताधिकया मूर्द्धन्यनाड्यैव विदुषो गमनमन्याभिरेव चाविदुषो गमनमित्ययं नियम उपपद्यते नेति संशयः, किं युक्तं, नियमो नोपपद्यत इति कुतः, नाडीनां भूयस्त्वादतिसूक्ष्मत्वाच्च दुर्विवेचनतया पुरुषेणोपादातुमशक्यत्वात्तयोर्द्ध्वमायन्नमृतत्वमेति विष्वङ्ङन्या उत्क्रमणे भवन्तीति यादृच्छिकी मुक्तान्तिमनुवदतीति युक्तमित्येवं प्राप्ते प्रचक्ष्महे "शताधिकये"ति, विद्वान् शताधिकया मूर्द्धन्ययैव नाड्योत्क्रामति, न चास्या विदुषो दुर्विवेचनत्वं विद्वान् हि परमपुरुषाराधनभूतात्यर्थप्रियविद्यासामर्थ्याद् विद्याशेषभूततयाऽऽत्मनोऽत्यर्थप्रियगत्यनुस्मरणयोगाच्च प्रसन्नेन हार्देन परमपुरुषेणानुगृहीतो भवति, ततश्च तदोकः तस्य जीवस्य स्थानं हृदयमग्रज्वलनं भवति, अग्रे ज्वलनं

प्रकाशनं यस्य तदिदमग्रज्वलनं तत्प्रसादात्—परमपुरुषप्रसादात्प्रकाशितद्वारो विद्वांस्तां नाडीं विजानातीति तथा विदुषोगतिरुपपद्यते ॥ तदोकोऽधिकरणं समाप्तम् ॥

टी० सू० तदोकोग्रज्वलनं तत्प्रकाशितद्वारो विद्यासामर्थ्यात्तच्छेषगत्यनुस्मृतियोगाच्च हार्दानुगृहीतः शताधिकया ॥ १६ ॥ अवान्तरसङ्गतिमाह "एव"मिति, उत्क्रान्तौ ब्रह्मणि सम्पत्तेर्विद्वदविदुषोस्तुल्यत्वात् समाना चेत्यादिसूत्रमत्र वक्तव्यं तथा न कृतं, तत्र हेतुर्विदुषोब्रह्मसम्पत्तावविवादः, तत्रेत्यादि किं विदुषो मूर्द्धन्यनाड्यैव गमननियमः सम्भवति? नेति किं ययोर्ध्वमायन्निति यादृच्छिकगमनानुवादः? उत नाडीविशेषेण गमननियमनविधिः? किं नाड्यो दुर्विवेचाः? उत सुविवेचाः? दुर्विवेचात्वे यादृच्छिकगत्यनुवादपक्षस्य न्याय्यत्वान्नियमासम्भवः, सुविवेचत्वे नियमविधिपरत्वोपपत्तेर्गतिनियमसम्भवः । परे तु अपरविद्याविषयमिमं विचारमाहुः तत्पूर्ववदयुक्तं तस्य हैतस्य हृदयस्याग्रं प्रद्योतते तेन प्रद्योतेनैष आत्मा निष्क्रामतीति इदं वाक्यमत्रापेक्षितं पूर्वत्रोपात्तत्वान्नात्रोदाहृतं तदोकोऽधिकरणं समाप्तम् ॥

रश्म्यनुसाराधिकरणम् ।

## सू० रश्म्यनुसारी ॥ १७ ॥

भा० विदुषो हृदयाच्छताधिकया मूर्द्धन्यनाड्या निर्गतस्यादित्यरश्मीननुसृत्यादित्यमण्डलगतिः श्रूयते । "अथ यत्रैतस्माच्छरीरादुत्क्रामत्यथैतैरेव रश्मिभिरूर्ध्वमाक्रमते" इति, तच्च रश्म्यनुसारेणैवेत्ययं गतिनियमः सम्भवति नेति चिन्तायां निशि मृतस्य विदुषोरश्म्यनुसारासम्भवादनियमः, वचनं तु पक्षप्राप्तविषयमिति प्राप्ते उच्यते "रश्म्यनुसारी"ति, रश्म्यनुसार्य्येव विद्वानूर्ध्वं गच्छति कुतः, "अथैतैरेव रश्मिभिरित्यवधारणात्, पाक्षिकत्वे

ह्येवकारोऽनर्थकः स्यात् । यदुक्तं हि निशि मृतस्य रश्म्यसम्भवात् रश्मीननुसृत्य गमनं नोपपद्यत इति तन्न निश्यपि सूर्यरश्म्यनुसारः सम्भवति, लक्ष्यते हि निश्यपि निदाघसमये औष्ण्योपलब्ध्या रश्मिसद्भावः हेमन्तादौ तु हिमाभिभवाद्दिने इवोष्मानुपलम्भः, श्रूयते च नाडीरश्मीनां सर्वदाऽन्योन्यान्वयः, तद्यथा "महापथ आतत उभौ ग्रामौ गच्छतीमं चामुं च एवमेवैत आदित्यस्य रश्मय उभौ लोकौ गच्छन्तीमं चामुञ्च अमुष्मादादित्यात्प्रतायन्ते त आसु नाडीषु सृप्ता आभ्यो नाडीभ्यः प्रतायन्ते तेऽमुष्मिन्नादित्ये सृप्ता इति, तस्मान्निश्यपि रश्मिसम्भवान्निशि मृतानामपि विदुषां रश्म्यनुसारेणैव ब्रह्मप्राप्तिरस्त्येव ॥ रश्म्यनुसाराधिकरणं समाप्तम् ॥

टी० सू० रश्म्यनुसारी ॥ १७ ॥ अवान्तरसङ्गतिः स्फुटा? किं रश्म्यनुसारेण गमननियमो विदुषः सम्भवति नेति? किं रश्मिभिरूर्ध्वमाक्रामत इति वाक्यं पाक्षिकगमनानुवादकम्? उत नियमविधिपरं? किं निशि प्रेतस्य रश्म्यनुसारेण गमनं सम्भवति नेति? किं निशि रश्मयस्सम्भवन्ति नेति? न चेन्निशि रश्म्यनुसारसम्भवाच्छ्रुतेः पाक्षिकगत्यनुवादकतया नियमासम्भवः, सन्ति चेन्निशि रश्म्यनुसारसम्भवाच्छ्रुतेर्नियमविधिपरतया रश्मिभिरेव गतिनियमसम्भवः । पूर्वपक्षमुक्त्वा राद्धान्तमाह "उच्यत" इति, ऊष्मोपलम्भयोग्यरश्मिसद्भावसत्यप्यन्धकारस्थितिरुपपद्यते रश्मीनामल्पत्वात् यथोद्धृताग्नौ प्रदेशे सूक्ष्माग्न्यवयवसंपर्कादौष्ण्योपलब्धावपि सूक्ष्माग्न्यवयवैर्न तिमिरं निरस्यते तद्वदिति । नाडीषु सृप्ताः सम्बद्धा इत्यर्थः ॥ रश्म्यनुसाराधिकरणं समाप्तम् ॥

निशाऽधिकरणम् । **सू० निशि नेति चेन्न सम्बन्धस्य यावद्देहभावित्वाद्दर्शयति च ॥ १८ ॥**

मु० इदमिदानीं चिन्त्यते विदुषो निशि मृतस्य ब्रह्मप्राप्तिरस्ति नेति, यद्यपि निशायां सूर्य्यरश्मिसम्भवाद्रश्म्यनुसारेण गतिर्निशायामपि सम्भवति तथाऽपि निशामरणस्य शास्त्रेषु गर्हितत्वात् परमपुरुषार्थलक्षणब्रह्मप्राप्तिर्निशामृतस्य न सम्भवति, शास्त्रेषु दिवामरणं प्रशस्तं विपरीतं निशामरणं, "दिवा च शुक्लपक्षश्च उत्तरायणमेव च । मुमूर्षतां प्रशस्तानि विपरीतं तु गर्हितम्" इति, दिवामरणनिशामरणयोः प्रशस्तत्वविपरीतत्वे चोत्तमाधमगतिहेतुत्वेन स्याताम । अतो निशिमरणाधोगतिहेतुत्वान्न ब्रह्मप्राप्तिहेतुरिति चेन्न विदुषः कर्मसम्बन्धस्य यावद्देहभावित्वात् ।

टी० सू० निशि नेति चेन्न सबन्धस्य यावद्देहभावित्वाद्दर्शयति च ॥ १८ ॥ सङ्गतिः स्फुटा किं निशि मृतस्य विदुषो ब्रह्मप्राप्तिः सम्भवति नेति? किन्निशामरणस्याधोगतिहेतुत्वं निशि मृतस्य ब्रह्मप्राप्त्यभावं ज्ञापयति नेति? निशामरणानिन्दावचनं किं विद्वदविद्वत्साधारणं? मुताविद्विषयमिति, साधारणत्वे निशि मरणस्याधोगतिहेतुत्वेन ब्रह्मप्राप्त्यभावावगमात् निशि मृतस्य न ब्रह्मप्राप्तिः, अविद्वद्विषयत्वे निशामरणस्याधोगतिहेतुतया ब्रह्मप्राप्त्यभावानवगमान्निशि मृतस्यापि स्याद् ब्रह्मप्राप्तिः पूर्वपक्षमुक्त्वा राद्धान्तमाह "तन्ने"ति, प्रारब्धकर्मणोऽनेकदेहहेतुत्वसम्भवात् कथं कर्मसंबन्धस्य यावद्देहभावित्वं प्रारब्धसमाप्तिरस्तु अभुक्तपूर्वाण्यपि कर्माणि सन्ति कर्मणो यावद्देहभावित्वेन कथं निशामरणस्याधोग-

तिहेतुत्वं परिहृतं, तथा च सति निशामरणनिन्दावचनस्य का गतिरित्यत्राह–

मू० एतदुक्तं भवति, अनारब्धकार्याणामधोगतिहेतुभूतानां कर्मणां विद्यासम्बन्धेनैव विनाशादुत्तरेषां चाश्लेषात्प्रारब्धकार्य्यस्य च चरमदेहावधित्वाद्बन्धहेत्वभावाद्विदुषो निशि मृतस्यापि ब्रह्मप्राप्तिः सिद्धैव। दर्शयति च श्रुतिः 'तस्य तावदेव चिरं यावन्न विमोक्ष्ये अथ संपत्स्ये" इति, दिवा च शुक्लपक्षश्चेत्यादिवचनमविद्वद्विषयम् ॥ निशाऽधिकरणं समाप्तम् ॥

टी० "एतदुक्तं भवती"ति, दिवानिशाविभागनिरपेक्षं प्रारब्धकर्मावसाने मोक्षश्रवणात्तस्य तावदेव चिरमिति वाक्यमुपात्तं नन्वप्रशस्तकाले निशि मृतं शरीरं न चरमं स्यात्, चारम्ये सिद्धे हि ब्रह्मप्राप्तिसिद्धिः, नैवम् "अथ यो दक्षिणे प्रमीयते पितृणामेव महिमानं गत्वेत्यारभ्य तस्माद्ब्रह्मणो महिमानमाप्नोतीति दक्षिणायनाद्यप्रशस्तकालमृतस्यापि ब्रह्मप्राप्तिश्रवणात् अप्रशस्तकालमृतस्यापि ब्रह्मप्राप्तिश्रवणात् अप्रशस्तकालमरणेन हेतुना चरमदेहत्वं न बाध्यम् अतो यथोक्त एवार्थ इति । इतरे त्वयोऽपीदं सूत्रद्वयमपि रश्म्यनुसारविषयमेकमधिकरणमाहुः निशि रविरश्मयो न सन्तीति चेत् न नाडीरविरश्मिसंबन्धस्य यावद्देहभावित्वात्, तथा अमुष्मादादित्यात्प्रतायन्ते इति श्रुतिर्दर्शयतीति योजयन्ति, न यदि निशि रवि रश्मयः स्युः तर्हि निशि मृतस्य ब्रह्मप्राप्तिर्न स्यात् तस्य रविरश्म्यनपेक्षत्वे दिवाऽपि तैर्विना गमनसंभवाद्रश्म्यनुसारशास्त्रवैयर्थ्यं रात्रौ मृतस्य ब्रह्मप्राप्तिर्वा न स्यात्, माभूदिति न वाच्यं विद्यायाः पाक्षिकफलतया तत्र प्रवृत्त्यनुपपत्तेः, यात्रुदयं प्रतीक्षणकल्पनमप्ययुक्तं स यावत् क्षिपेन्मनस्तावदादित्यं गच्छेदिति शैघ्र्यावगमादित्युपपादयन्ति निशि मृतस्य ब्रह्मप्राप्तिर्न स्यादिति प्रसङ्गो निशामरणनिन्दावचनम-

लम्बामानानां नानिष्टः स्यात् विद्यायाः पाक्षिकफलत्वं च निशामरणस्यविद्यानिष्पत्त्यभावनिबन्धनत्वाश्रवणेन परिहृतं स्यात्, अतोऽपेक्षितं स्यात् निशि मृतस्य मोक्षसमर्थनमिति तदर्थमधिकरणभेदो न्याय्यः नाडीरश्मिसंबन्धनियमाभिधानमपेक्षितमिति चेत् सत्यं, तस्य तु प्रतिज्ञायामपेक्षितत्वादाभिप्रायिकत्ववर्णनमुचितम् अन्यथाऽपेक्षितार्थान्तरप्रतिज्ञाया उपपत्तेश्चानभिहितत्वप्रसङ्गात्, प्रतिज्ञाहेत्वोरुभयोरप्याभिप्रायिकत्वकल्पनादपि पूर्वप्रतिज्ञाया उपपत्तिमात्रस्याभिप्रायिकत्वकल्पनं न्याय्यमिति । निशाधिकरणं समाप्तम् ॥

दक्षिणायनाधिकरणम् ।

## सू० अतश्चायनेऽपि दक्षिणे ॥ १९ ॥

सू० निशि मृतस्यापि विदुषो ब्रह्मप्राप्तौ यो हेतुरुक्तः तत एव हेतोर्दक्षिणेऽप्ययने मृतस्य ब्रह्मप्राप्तिः सिद्धा, अधिकाशङ्का तु "अथ यो दक्षिणे प्रमीयते पितॄणामेव महिमानं गत्वा चन्द्रमसः सायुज्यं गच्छती"ति दक्षिणायने मृतस्य चन्द्रप्राप्तिश्रवणाच्चन्द्रमसं प्राप्तानां च तेषां यदा तत्पर्य्यवैत्यथैतमेवाध्वानं पुनर्निवर्त्तन्त इति पुनरावृत्तिश्रवणात्, भीष्मादीनां च ब्रह्मविद्यानिष्ठानामुत्तरायणप्रतीक्षादर्शनात् दक्षिणायने मृतस्य ब्रह्मप्राप्तिर्न सम्भवतीति, परिहारस्तु अविदुषां पितृयाणेन पथा चन्द्रमसं प्राप्तानामेव पुनरावृत्तिर्विदुषस्तु चन्द्रं प्राप्तस्यापि, तस्माद्ब्रह्मणो महिमानमाप्नोतीति वाक्यशेषात्तस्य दक्षिणायनमृतस्य चन्द्रप्राप्तिर्ब्रह्मप्रपित्सतो विश्रामहेतुमात्रमिति गम्यते वाक्यशेषाभावेऽपि पूर्वोक्तादेव बन्धहेत्वभावाद्विदुषश्चन्द्रं प्राप्तस्यापि ब्रह्मप्राप्तिरनिवार्या, भीष्मादीनां यो-

गमभावात्स्वच्छन्दमरणानां धर्मप्रवर्त्तनायोत्तरायणप्राप्त्यप्रदर्शनार्थस्तथाविधाचारः । ननु च विदुषो मुमूर्षून्प्रति पुनरावृत्त्यपुनरावृत्तिहेतुत्वेन कालविशेषविधिर्दृश्यते "यत्र कालेत्वनावृत्तिमावृत्तिं चैव योगिनः । प्रयाता यान्ति तं कालं वक्ष्यामि भरतर्षभ । अग्निर्ज्योतिरहः शुक्लः षण्मासा उत्तरायणं तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदो जनाः ॥ धूमो रात्रिस्तथा कृष्णः षण्मासा दक्षिणायनम् । तत्र चान्द्रमसं ज्योतिर्योगी प्राप्य निवर्त्तते । शुक्लकृष्णे गती ह्येते जगतः शाश्वते मते । एकया यात्यनावृत्तिमन्यया वर्त्तते पुनरि"ति तत्राह—

टी० सू० अतश्चायनेऽपि दक्षिणे ॥ १९ ॥ अवान्तरसङ्गतिः स्फुटा किं दक्षिणायनमृतस्यापि विदुषो ब्रह्मप्राप्तिः सम्भवति नेति ? किमथ योदक्षिण इति दक्षिणायनमृतस्य चन्द्रप्राप्तिवचनं ब्रह्मप्राप्त्यभावं गमयति नेति ? चन्द्रप्राप्तानामावृत्तिवचनं किं विद्वदविद्वत्साधारणम्? उताविद्वद्विषय?मिति किं भीष्मादीनाङ्कालप्रतीक्षाकालविधानस्मरणसहकृतसामान्यश्रुत्यनुरोधेन साधारणत्वसमाश्रयणं न्याय्यम्? उत ब्रह्मणो महिमानमिति वाक्यशेषानुरोधेनाविद्वद्विषयत्वसमाश्रयणं न्याय्य? मिति साधारण्याश्रयणे न्याय्ये सत्यावृत्तिवचनस्य साधारण्येन ब्रह्मप्राप्त्यभावावगतकतया न ब्रह्मप्राप्तिः, अविद्वद्विषयत्वाश्रयणे न्याय्ये सत्यावृत्तिवचनस्याविद्वद्विषयतयाऽथ योदक्षिण इति वाक्यस्य ब्रह्मप्राप्त्यभावानवगमकत्वाद्दक्षिणायनमृतस्य विदुषोऽपि ब्रह्मप्राप्तिः स्यात्, दक्षिणायनमृतस्येति उदगयने प्रमीयते दक्षिणे प्रमीयत इत्यत्र धूमादिमार्गलिङ्गाभावात् ब्रह्मप्राप्तिवचनाच्चार्चिरादिगतस्यैव मरणकालविशेषेण मार्गे समानविशेव उच्यत इत्यर्थः । उक्तासूत्रशङ्कामाह "नन्वि"ति,

**सू० योगिनः प्रति स्मर्यते स्मार्त्ते चैते ॥ २० ॥**

भा० नाच मुमुषूंन्प्रति मरणकालविशेषोपादानं स्मर्य्यते, अपि तु योगिनो योगनिष्ठान्प्रति स्मार्त्ते स्मृतिविषयभूते स्मर्त्तव्ये देवयानपितृयाणाख्ये गती स्मर्य्येते, योगाङ्गतया अनुदिनं स्मर्त्तुं, तथा ह्युपसंहारः "नैते सृती पार्थ जानन् योगी मुह्यति कश्चन । तस्मात्सर्वषु कालेषु योगयुक्तो भवार्जुनेति। अग्निर्ज्योतिर्धूमो रात्रिरिति च देवयानपितृयाणे प्रत्यभिज्ञायेते । उपक्रमे च यत्र काले त्विति काल-शब्दः कालाभिमानिदेवतातिवाहिकपरः, अग्न्यादेः कालत्वासम्भवात्, अतस्तेऽर्चिषमभिसम्भवन्तीति विहितदेवयानानुस्मृतिरत्र विद्यानिष्ठान्प्रति विधीयते, न मुमूर्षून्प्रति मरणकालविशेषः ॥ दक्षिणायनाधिकरणं समाप्तम् ॥

टी० सू० योगिनः प्रति स्मर्य्यते स्मार्त्ते चैते ॥ २० ॥ स्मार्ते इति सौत्रं पदं तद्व्याचष्टे "स्मृती"ति, योगयुक्तो भव मार्गानुसन्धानरूपयोगयुक्तो भवेत्यर्थः । अन्यथा सङ्गत्यभावप्रसङ्गात्, यत्र काले त्विति, मध्ये उपसंहारे च मार्गविधानपरत्वदर्शनान्महावाक्यस्वारस्येनोपक्रमो बाध्यत इत्यभिप्रायेणाग्निर्ज्योतिरित्यादिवचनमुक्तं, योगिन इति सौत्रयोगिशब्दश्चतुर्विधभगवदुपासकसाधारणः, भक्तियोगस्य तेषां साधारणत्वात्, तत्र मुमुक्षोर्देवयानानुसंधानमैश्वर्य्यार्थियोगिनः पितृयाणानुसन्धानमिति विधीयत इति श्रुतौ गतिद्वयं विहितं तदनुसन्धानमत्र विधीयत इत्यर्थः । न मुमूर्षून्प्रति कालविशेष इति, विधीयत इत्यन्वयः, । अत्र परे चापरे च योगिनः प्रतीति सूत्रमेवं व्याचक्षते योगिनः प्रति स्मार्त्तोपासनार्थोऽय

स्मार्त्तः कालविनियोगः प्रत्यासन्नत्वात्, अतः श्रौतेषूपासनेषु नावतरति यदि तत्रापि कालवाचिशब्दः कालाभिमानिदेवतापरः तदा न श्रुतिविरोध इति, अग्न्यादिशब्दानां कालवाचित्वाभावेन नैते स्मृती इति निगमनाच्च कालविधिपरत्वायोगात् विषयव्यवस्थया निर्वाहो भाष्येऽनादृतः । अन्ये त्विदं सूत्रमेवं व्याचक्षते योगिनः—प्राणायामेन वायुविजयपराः योगिनः प्रति एतौ अयनरूपकालौ स्मर्य्येते, ते हि शक्नुवन्त्येव स्वच्छन्देन मर्त्तुममर्त्तुं चेति तदयुक्तं प्रशस्तकाले मर्त्तव्यमिति विधिश्चेदग्न्यादिकीर्त्तनस्य विफलत्वान्नैते स्मृती इत्युक्तत्वाच्छ्रुतिसिद्धमार्गप्रत्यभिज्ञाभङ्गप्रसङ्गाच्च ॥ दक्षिणायनाधिकरणं समाप्तम् ॥ इति शम् । नमः पूर्वाचार्येभ्यः ॥

इति श्रीभगवद्रामानुजाचार्यविरचिते शारीरकमीमांसाभाष्ये चतुर्थाध्यायस्य द्वितीयः पादः ॥ २ ॥

———o———

श्रीमते रामानुजाय नमः

## अथ चतुर्थाऽध्यायस्य तृतीयः पाद आरभ्यते ॥

अर्चिराद्यधिकरणम् । **सू० अर्चिरादिना तत्प्रथितेः ॥ १ ॥**

भा० विदुष उत्क्रान्तस्य नाडीविशेषेण हार्दानुग्रहाद्गत्युपक्रम उक्तः, तस्य गच्छतो मार्ग इदानीं निर्णीयते तच्च श्रुतिषु मार्गप्रकारा बहुधाऽऽम्नायन्ते छान्दोग्ये तावत् "यथा पुष्करपलाश आपो न श्लिष्यन्त एवमेवं विदि पापं कर्म न श्लिष्यते" इत्युपक्रम्य ब्रह्मविद्यामुपदिश्याम्नायते अथ यदु चास्मिञ्छव्यं कुर्वन्ति यदु च नार्चिषमेवाभिसम्भवन्त्यर्चिषोऽहरह्न आपूर्य्यमाणपक्षमापूर्य्यमाणपक्षाद्यान् षडुदङेति मासांस्तान् मासेभ्यः संवत्सरं संवत्सरादादित्यमादित्याच्चन्द्रमसं चन्द्रमसो विद्युतं तत्पुरुषे,

मानवः स एनान् ब्रह्म गमयत्येष देवपथो ब्रह्मपथ एतेन प्रतिपद्यमाना इमं मानवमावर्त्तं नावर्त्तन्ते नावर्त्तन्त" इति, तथाऽचैवाष्टमे अथैतैरेव रश्मिभिरूर्द्ध्वमाक्रमत इति कौषीतकिनश्च देवयानमार्गमन्यथाऽधीयते "स एतं देवयानं पन्थानमापद्याग्निलोकमागच्छति स वायुलोकं स वरुणलोकं स आदित्यलोकं स इन्द्रलोकं स प्रजापतिलोकं स ब्रह्मलोकमि"ति, तथा बृहदारण्यके "य एवमेतद्विदुर्ये-चेमेऽरण्ये श्रद्धां ।

टी० सू० अर्चिरादिना तत्प्रथितेः ॥ १ ॥ पादसङ्गतिमाह "विदुष" इति, ब्रह्मविदो मार्ग इति दर्शयितुं यथा पुष्करपलाश आपो न श्लिष्यन्त इत्याद्युदाहृतं शव्यं–शवयोग्यं संस्कारं यत् यदि शवसंस्कारं यदि कुर्वन्ति यदि वा न कुर्वन्ति अर्चिषमेव तेऽभिसंभवन्ति प्राप्नुवन्तीत्यर्थः । उदङ् आदित्य इत्यध्याहार्य्यं छान्दोग्ये अर्चिरादिका गतिः श्रूयते कौषीतकीवाक्ये अग्निलोकादिका बृहदारण्यकेऽप्यर्चिरादिका तत्रैव वाय्वादिका च आडम्बरं वाक्यविशेषः अन्यत्र विद्यान्तरे किं विद्वानर्चिरादिना एवमार्गेण गच्छति ? उत ततोमार्गान्तरेण वेत्यनियमः ? किं सर्वविद्यास्वेको मार्ग आम्नायते ? उत नानामार्गा ? इति, किं क्रमान्तराम्नानात् नानामार्गसमाश्रयणं न्याय्यम् ? उतादित्यादिप्रत्यभिज्ञानेन मार्गैकत्वाश्रयणं न्याय्यमिति, नानामार्गाश्रयणस्य न्याय्यत्वे नानाविद्यासु नानामार्गाम्नानादनियमः, मार्गैकत्वाश्रयणे न्याय्ये सर्वविद्यासु मार्गैकत्वाम्नानादर्चिरादिनैवेति नियमः, अनेकरूपत्वादित्यनेन क्रमभेदः क्रमिभेदश्च विवक्षितः । एवं प्राप्त इति क्रमक्रमिभेदात्कथं मार्गैक्यमित्यत्राह–

भा० सत्यमुपासते तेऽर्चिषमभिसंभवन्ति, अर्चिषोऽहरह्न आपूर्य्यमाणपक्षमापूर्यमाणपक्षाद्यान्षण्मासानुदङ्ङादित्य

एति सामान्मासेभ्यो देवलोकं देवलोकादादित्यमादित्या-
द्वैद्युतं वैद्युतात्पुरुषो मानवः स एत्य ब्रह्म लोकान् गमयति"
इति, तत्रैव पुनरन्यथा। यदा वै पुरुषो ऽस्माल्लोकात्प्रैति
स वायुमागच्छति तस्मै स तत्र विजिहीते यथा रथच-
क्रस्य खन्तेन स ऊर्द्ध्वमाक्रमते स आदित्यमागच्छति तस्मै
स तत्र विजिहीते, यथा आडम्बरस्य खन्तेन स ऊर्द्ध्व-
माक्रमते स चन्द्रमसमागच्छति तस्मै स तत्र विजिही-
ते यथा दुन्दुभेः खमित्यादि, तत्र संशयः किमर्चिरादि-
रेक एव मार्ग आभिः श्रुतिभिः प्रतिपाद्यते इति तेनैव
ब्रह्म गच्छति विद्वान्? उत तस्मादन्ये अन्यत्र मार्गा इति
तैर्वाऽनेन वेत्यनियम इति, किं युक्तम् अनियम इति,
कुतः अनेकरूपत्वान्नैरपेक्ष्याच्चेत्येवं प्राप्तेऽभिधीयते—अ-
र्चिरादिनेति, अर्चिरादिरेक एव मार्गः सर्वत्र प्रतिपाद्यते,
अतोऽर्चिरादिनैव गच्छन्ति कुतः तत्प्रथितेः, तस्यैव सर्वत्र
प्रथितेः, प्रथितिः—प्रसिद्धिः तस्यैव सर्वत्र प्रत्यभिज्ञानादि-
त्यर्थः, प्रत्यभिज्ञानात्स एव मार्गः सर्वत्र न्यूनाधिकभावेन
प्रतिपाद्यत इति विद्यागुणोपसंहारवदन्यत्र उक्तानां
मन्यत्रोपसंहारः क्रियते, छान्दोग्ये तावदुपकोसलविद्यायां
पञ्चाग्निविद्यायां चैकरूप एवाम्नायते, वाजसनेयके च
पञ्चाग्निविद्यायां तथैवार्चिरादिरल्पान्तर आम्नायते, अ-
न्यत्रापि स एवेति प्रतीयते, अन्यत्रापि सर्वत्राग्न्यादि-
त्यादयः प्रत्यभिज्ञायन्ते ॥ अर्चिराद्यधिकरणं समाप्तम् ॥

टी० सर्वत्रेति प्रत्यभिज्ञानं दर्शयति "छान्दोग्ये ताव"दिति, अल्पान्तर इति संवत्सरशब्दस्थाने देवलोकशब्द इति भावः । सर्वत्र बहुषु प्रदेशेष्वित्यर्थः । परविद्यासु ब्रह्मप्रत्यभिज्ञानेऽपि गुणानन्त्यादुपसंहारो न शक्यते इति विद्यैक्यासम्भवः, मार्गान्वयिनां पदार्थानां द्वादशसंख्याऽन्तर्भूतत्वात् चिन्तायोग्यतयाऽन्यादिप्रत्यभिज्ञानुगुण्येन मार्गैक्यमिति भिदा । अत्र परे तु भिन्नविद्याशेषत्वाच्च भिन्नत्वम् । अथैतैरेव रश्मिभिरित्यवधारणात् यावत् क्षिपेन्मनस्तावदादित्यङ्गच्छेदिति शैघ्र्यवचनाच्चेति पूर्वपक्षयुक्तीराहुः । भिन्नविद्याशेषत्वेऽपि सुकृतदुष्कृतप्रहाणे भिन्नत्वादर्शनान्मन्दतया तदुपेक्षा । रश्मिभिरेवेत्ययोगव्यवच्छेदे एवकारमात्रस्य प्रमाणसिद्धबाधकत्वायोगात् अर्चिरादीनां देवतात्वेन मार्गदैर्घ्यहेतुत्वाभावेन शैघ्र्याविरोध इति तदनास्था । अन्ये तु ये चत्वारः पथयो देवयाना इति मन्त्रवर्णाद्भेदत्वावगमाच्च पूर्वपक्षमाहुः । अर्चिरादिका वाय्वादिका सूर्य्यद्वारेणेति सूर्यादिका रश्मिमती देवलोकवती वरुणादिलोकादिमती चेति चतुष्ट्याधिक्यादमुमुक्षुविषयत्वाच्च तदनुपन्यासः । मन्त्रवर्णास्तु चातुराश्रम्याभिप्रायो वा ऐष्टिकपाशुकसौमिकदार्वीहोमिकगत्यभिप्रायो वा । अर्चिराद्यधिकरणं समाप्तम् ॥

वाय्वधिकरणम् ।

## वायुमब्दादविशेषविशेषाभ्याम् ॥ २ ॥

मू० अर्चिरादिनैव गच्छन्ति विद्वांस इत्युक्तम्, तत्रार्चिरादिके मार्गे छन्दोगा मासादित्ययोरन्तराले संवत्सरमधीयते मासेभ्यः संवत्सरं संवत्सरादादित्यमिति, वाजसनेयिनस्तु तयोरेवान्तराले देवलोकम् ।

टी० सू० वायुमब्दादविशेषविशेषाभ्याम् ॥ २ ॥ सङ्गतिः स्फुटा संवत्सरादित्ययोर्मध्यप्राप्तौ वायुदेवलोकौ किमनियतक्रमेण निवेशयितव्यौ? उतनेति,? किं वायुदेवलोकशब्दावर्थान्तरपरौ? उत नेति किं देवलोकशब्दस्य देवावासपरत्वं न्याय्यमुत वायोर्देवगृहत्वश्रवणानुरोधेन

वायुपरत्वं न्याय्यं? देवावासपरत्वे न्याय्ये तयोः शब्दयोरर्थान्तरपरत्वाद-नियतक्रमेण निवेशः, वायुपरत्वे सत्यर्थान्तरत्वाभावादनियतक्रमेण निवेशाभावः स्यात् । अर्चिरादिनैवेत्यादि, संशयं वक्तुं विषयं शोधयति तत्रेत्यादिना, श्रुत्यर्थपाठप्रवृत्तिमुख्यकाण्डाः क्रमप्रमाणानि, तत्र प्रातिपदिकाभिहितो विभक्त्यभिहितश्च श्रौत एवेत्यत्र पञ्चम्यभिहितं संवत्सरदेवलोकयोर्मासादूर्ध्वत्वमविशिष्टं, तत्र संवत्सरस्य मासादूर्ध्वभावित्वे अधिककालानां न्यूनकालोत्तरनिवेशरूपार्थस्वभावोऽधिकहेतुरस्ति अतो मासानन्तरं संवत्सरप्राप्तिः, तत ऊर्ध्वमादित्यात् पूर्वं देवलोक इति स्थितं, बृहदारण्यके अन्यत्रादित्यात्पूर्वं वायुः श्रुतः कौषितकीवाक्येऽग्नेः परत्वेन वरुणात् पूर्वत्वेन वायुः पाठक्रमसिद्धः तत्र पाठक्रमात् बलीयसा वाजसनेयकोक्तश्रौतक्रमेण पाठक्रमप्राप्तस्याग्न्यनन्तरत्वस्य बाधितत्वादादित्यात् पूर्वं एव वायुः प्राप्तः देवलोकश्च प्राप्तः तत्र संशय इत्यर्थः ॥

भू० मासेभ्यो देवलोकं देवलोकादादित्यमिति, उभयत्रापि मार्गस्यैकत्वादुभावुभयत्रोपसंहार्यौ, तत्र मासादूर्द्ध्वमभिहितयोः संवत्सरदेवलोकयोः पञ्चम्याऽभिहितस्य श्रौतक्रमस्य तुल्यत्वेऽप्यर्चिषोऽहरह्न आपूर्य्यमाणपक्षमापूर्य्यमाणपक्षाद्यान्षडुदङेति मासांस्तानित्यधिककालानां न्यूनकालेभ्य उत्तरोत्तरत्वेन निवेशदर्शनात् संवत्सरस्यैव मासादनन्तरं बुद्धौ वि रिहत्ते, संवत्सर एव मासादूर्द्ध्वं निवेशयितव्य इति, तत ऊर्ध्वं देवलोक इति निश्चीयते, अन्यच्च वाजसनेयिनः "यदा वै पुरुषोऽस्माल्लोकात्प्रैति स वायुमागच्छति तस्मै स तत्र विजिहीषते यथा रथचक्रस्य

स्वन्तेन स ऊर्द्ध्वमाक्रमते स आदित्यमागच्छतीत्यादित्यात्पूर्वं वायुमधीयते। कौषीतकिनस्तु स एतं देवयानं पन्थानमापद्याग्निलोकमागच्छति स वायुलोकमित्यग्निलोकशब्दनिर्दिष्टादर्चिषः परं वायुलोकमधीयते, तच्च कौषीतकिनां पाठक्रमेणार्चिषः परत्वेन प्राप्तस्य वायोर्वाजसनेयिनान्तेन स ऊर्ध्वमाक्रमते स आदित्यमागच्छतीत्यूर्द्ध्वशब्दनिर्दिष्टश्रौतक्रमेण पाठक्रमाद्बलीयसा आदित्यात्पूर्वं प्रवेशो निश्चीयते, अत आदित्यात्पूर्वं संवत्सरादूर्द्ध्वं देवलोकोवायुश्च प्राप्तौ तत्रेदं चिन्त्यते किं देवलोकोवायुश्चार्थान्तरभूतौ यथेष्टक्रमेण विद्वानभिगच्छेत्? उतानर्थान्तरत्वेन संवत्सरादूर्द्ध्वं देवलोकं सन्तं वायुमभिगच्छेदिति? किं युक्तं, भिन्नार्थत्वं प्रसिद्धेः, भिन्नार्थत्वे चोर्ध्वशब्देन पञ्चम्या चोभयोः संवत्सरादित्यान्तराले श्रुतिक्रमेण प्राप्तत्वाद्विशेषाभावाच्च यथेष्टमिति प्राप्ते उच्यते वायुमब्दादिति, वायुं संवत्सरादूर्ध्वमभिगच्छेत् कुतः—

टी० मासेभ्यो देवलोकं देवलोकादादित्यमिति देवलोकस्यादित्यात् पूर्वत्वं पञ्चम्यभिहितं स ऊर्ध्वमाक्रमत इति वायोरादित्यात्पूर्वत्वं प्रातिपदिकाभिहितं विशेषाभावाच्चेति यथापूर्वं संवत्सरस्य मासानन्तरत्वे पञ्चमीमात्रादधिकोऽधिककालानां न्यूनकालोत्तरनिवेशो हेतुरुक्तः, तथाऽत्र श्रुतिप्रमाणादधिकं प्रमाणं नास्तीत्यर्थः । सिद्धान्तमाह "वायु"मिति, अविशेषविशेषाभ्यां—सामान्यविशेषाभ्यां, देवलोक—शब्दः सामान्यशब्दः वायु-शब्दो विशेषः । लोकपरत्वव्यावृत्त्यर्थमाह "वायुश्चासा"विति, उक्त-

भू० अविशेषविशेषाभ्यां वायोरेव निर्दिष्टत्वात्, देवलोकशब्दो ह्यविशेषेण सामान्येन देवानां लोक इत्यनेन रूपेण वायुमभिधत्ते स वायुमभिगच्छति तस्मै स तत्रेति वायुशब्दो विशेषेण वायुमभिधत्ते, अतो देवलोकवायुशब्दाभ्यामविशेषविशेषाभ्यां वायुरेवाभिधीयत इति, संवत्सरादूर्ध्वं वायुमेवाभिगच्छेत् कौषीतकिनां वायुलोकशब्दस्याग्निलोकशब्दवत् वायुश्चासौ लोकश्चेति व्युत्पत्त्या वायुमेवाभिधत्ते, वायुश्च देवानामावासभूत इत्यन्यच्च श्रूयते "योऽयं पवत एष देवानां गृहा" इति, वाय्वधिकरणं समाप्तम् ॥

टी० स्वावधार्थस्य प्रामाणिकत्वं दर्शयति "वायुश्च देवाना"मिति, ननु "संवत्सरः खलु वै देवानां पूरि"ति श्रुत्यनुरोधेन देवलोक-शब्दस्य संवत्सरविषयत्वं किं न स्यात्, नैवं संवत्सरस्य देवपरत्वोक्तेः स्तुतिमात्रत्वात् वायोर्देवगृहत्वस्य वास्तवत्वादवास्तवप्रहाणेन वास्तवस्वीकारस्य न्याय्यत्वाच्च ज्योतिर्मयकृत्स्नवैमानिकदेवतागणस्य वायुपाशधृतत्वात् वायोर्देवगृहत्वं हि यथार्थः । परे चापरे चाहुः मासानन्तरमर्थक्रमात् संवत्सरस्तदनन्तरं देवलोकः तदनन्तरं वायुरिति वायुमब्दादिति सूत्रनिर्देशः छान्दोग्यश्रुत्यपेक्षः, तत्र संवत्सरस्य पठितत्वादिति तदयुक्तं देवलोकवायुशब्दयोः सामान्यविशेषरूपेणैकार्थत्वे संभवत्यर्थभेदकल्पनाऽनुपपत्तेः, देवलोकादूर्ध्वं वायोर्निवेशे सति देवलोकादादित्यमिति श्रौतक्रमभङ्गश्च देवलोकस्य सूत्रेणानिरूपितत्वं च स्यात्, वायोरब्दादूर्ध्वं निवेशपरत्वादस्य सूत्रान्तराभावाच्च संदिग्धेऽर्थे न्यायश्च वक्तव्य एव स ऊर्ध्वमाक्रमते स आदित्यमागच्छति देवलोकादादित्यमागच्छति देवलोकादादित्यमिति श्रौतक्रमसाम्यात्, भवति च संशयः वायुदेवलोकयोरेकत्वे च न संशयसम्भवः, अत एवाविशेषविशे-

भ्याभ्यामिति सौत्रपदस्य वायोरग्न्यानन्तर्यं शाब्दक्रमविशेषाभावादादित्यात् पूर्वत्वे ऊर्द्ध-शब्देन विशेषावगमाच्चेति व्याख्यानमप्ययुक्तम्, अतो यथाभाष्यमेव सूत्रार्थः । अन्यैस्तु वायुः किमग्नेरुपरि निवेशयितव्यः? उत संवत्सरस्योपरि? उतादित्यस्याधस्तात्? इति संशय उक्तः । तदचतुरम् अग्नेरानन्तर्य्यपक्षस्तावन्मन्दः, तस्य पाठक्रमप्रतिपन्नस्य श्रौतक्रमेण स्फुटबाधात्संशयशिरोऽनारोहुयन्तु वायुदेवलोकयोरेकत्वेऽनुत्थितं स्यात्, अतः पृथक्त्वैकत्वे संशयितव्ये एकत्वे नियमेन वायुप्राप्तिः पृथक्त्वे विकल्पेन प्राप्तिश्च फलम्, अतः सहेतुकः सफलः संशयो भाष्योक्त एव न्याय्यान् ॥ वाय्वधिकरणं समाप्तम् ॥

वरुणाधिकरणम् ।

## सू० तडितोऽधिवरुणः संबन्धात् ॥ ३ ॥

भा० कौषीतकिनां स एतं देवयानं पन्थानमापद्याग्निलोकमागच्छति स वायुलोकं स वरुणलोकं स आदित्यलोकं स इन्द्रलोकं स प्रजापतिलोकं स ब्रह्मलोकमित्यत्राग्निलोकशब्दस्यार्चिःपर्य्यायत्वेन प्राथम्यमविगीतं, वायोश्च संवत्सरादूर्द्ध्वं निवेश उक्तः, आदित्यस्याप्यत्र प्राप्तपाठक्रमबाधेन देवलोकादादित्यमादित्याच्चन्द्रमसमिति वाजसनेयकोक्तश्रुतिक्रमाद्देव लोकशब्दाभिहिताद्वायोरुपरि निवेशः सिद्धः, इदानीं वरुणेन्द्रादिषु चिन्ता प्राप्ता किमेते वरुणादयो यथापाठं वायोरूर्ध्वं निवेशयितव्याः? आहोस्विद्विद्युतोऽधीति विमर्शे, अर्चिःप्रभृतिषु सर्वेष्वर्चिषोऽहरिति श्रुतिक्रमापरोधाद्विद्युतः परस्ताच्च तत्पुरुषो मानवः स एनान् ब्रह्म गमयतीति विद्युत्पुरुषस्य

ब्रह्मगमयितृत्वश्रवणाच्च सर्वत्रावकाशाभावेनाप्राप्तौ चोपदेशवैयर्थ्यायावश्यं कस्यचिद्बाध्यत्वे पाठक्रमानुरोधेन वायोरनन्तरं वरुणो निवेशितव्यः वाय्वादित्ययोः क्रमस्य बाधितत्वेन

टी० सू० तडितोऽधिवरुणः सम्बन्धात् ॥ ३ ॥ किं वरुणादयो यथापाठन्निवेशयितव्याः ? किं विद्युतोऽधी ? ति किं वरुणस्य विद्युत्सम्बन्धानुरोध उपपन्नो नेति ? अनुपपत्तौ यथापाठनिवेशः, उपपत्तौ विद्युतोऽधिनिवेशः, कौषीतकीनामित्यादिना वक्ष्यमाणार्थवैशद्याय पूर्वोक्तार्थं द्रढयति, तत्रार्चिषः प्राथम्ये वायोः संवत्सरात् पूर्वत्वे[1] आदित्यस्य वायोरूर्ध्वत्वे च कौषीतकीवाक्याविगानं विगीतविषये तस्य दौर्बल्यं चाह निरूपितांशनिरूपणीयांशप्रदर्शनार्थेन कौषीतकिनामित्यादिना, आदित्यस्यापीति, अत्र कौषीतकीवाक्ये उपदेशवैयर्थ्यायेति क्रमिबाधादपि क्रमबाधो न्याय्यः इति भावः । इन्द्रप्रजापती अपि ह्यत्रैव निवेशयितव्याविति, वरुणे वाय्वन्तरे सति इन्द्रप्रजापत्योरन्यत्र निवेशे क्रमद्वयभङ्गः स्यात्, तस्मादेकक्रममात्रभङ्गेन तयोरपि क्रमिणोः सावकाशत्वं युक्तमिति भावः । वरुणस्तावदित्यादि विद्युच्च वरुणाभिमानविषयं जलं च मेघोदरस्थं तत्र विद्युतः स्फुटतरदृश्यत्वात् सलिलस्य तथा दृश्यत्वाभावाच्च सलिलस्य विद्युत उपरि स्थितिर्गम्यते एवमभिमानविषययोः सम्बन्धानुरूपमभिमानिदेवतयोरपि ।

सू० इन्द्रप्रजापती अपि ह्यत्रैव निवेशयितव्याविति प्राप्ते उच्यते तडितोऽधिवरुण इति, वरुणस्तावद् विद्युत उपरिष्टान्निवेशयितव्यः कुतः सम्बन्धात्, मेघोदरवर्त्तित्वाद्विद्युतो हि वरुणेन सम्बन्धो लोकवेदयोः प्रसिद्धः, एतदुक्तं

१ ऊर्ध्वत्वे पा० ।

भवति वरुणादीनामुपदेशावैयर्थ्याय क्वचिन्निवेशनीयत्वे सति पाठक्रमादर्थक्रमो बलीयानिति विद्युतोऽधिवरुणो निवेशयितव्यः, ततश्चामानवस्य गमयितृत्वं व्यवधानसह- मित्यवगम्यते तस्य व्यवधानसहत्वादिन्द्रादेश्च उपदिष्ट- स्यावश्यं निवेशयितव्यस्य वरुणादुपरि उपदिष्टत्वादागन्तू- नामन्ते निवेशयितव्यत्वाच्च वरुणादुपरीन्द्रादिर्निवेशयि- तव्य इति, ॥ वरुणाधिकरणं समाप्तम् ॥

टी० संबन्धो न्याय्य इति तदिदमभिमानिन ऊर्ध्वं जलाभिमानी वरुण इति भावः । किं च द्युपर्जन्यपृथिवीक्रमेण पर्जन्यः स्वर्गादनन्तरस्थः तडित्ततोऽप्यधस्तडित्पुरुषस्योपरि वरुणो मेघोदरे तडित्सम्बन्धोऽस्तु तेन पाठक्रमं बाधित्वा कथं तडिदुपरि वरुणनिवेशः कथं वेन्द्रप्रजापत्यो- स्तत्रावकाश इत्यत्राह "एतदुक्त"मिति, अर्थक्रमस्य पाठक्रमात् बलीय- स्त्वेन वरुणस्य तडिदुपरि निवेशः कौषीतकीपाठक्रमानुरोधात् आगन्तूना- मन्ते निवेशयितव्यत्वरूपान्मीमांसासिद्धन्यायाच्चेन्द्रप्रजापत्योर्वरुणोपरि- निवेशः । तडितोऽधिगमयितृत्वाव्यवधानाय वरुणस्तडितः पूर्वं निवेश्यः तथा सति मेघोदरसंबन्धरूपार्थक्रमोऽपि स्यादिति चेन्न तथा सतीन्द्रप्रजा- पत्योर्यथापाठं वरुणतडिन्मध्यनिवेशेऽर्थक्रमभङ्गात् तडिदानन्तर्ये वरुणे- न्द्रप्रजापतीनां पाठक्रमभङ्गप्रसङ्गः, तस्मात्पाठक्रमानुरोधेन अर्थक्रमानुविधाने सम्भवति न पाठक्रमभङ्गो युक्तः । तडितोगमयितृत्वमव्यवहितमिति न श्रुतं तस्मात्तस्य गमयितृत्वं व्यवधानसहमित्ययमेव क्रम इत्यर्थः । अत्रास्मदाचा- र्याणां वरदमिश्राणाम् अयं श्लोकः "अर्चिरहस्सितपक्षानुदगयनाब्दमरु- दर्केन्दून् । अपि वैद्युतवरुणेन्द्रप्रजापतीनातिवाहिकानाहुरि"ति, । वरुणा- धिकरणं समाप्तम् ।

आतिवाहिकाधि- करणम् ।

## सू० आतिवाहिकास्तल्लि- ङ्गात् ॥ ४ ॥

भू० इदमिदानीं चिन्त्यते, किमर्चिरादयो मार्गचिन्हभूता? उत भोगभूमयः? अथवा विदुषां ब्रह्म प्रेप्सतामतिवोढार? इति, किं तावद् युक्तं मार्गचिन्हभूता इति, कुतः उपदेशस्य तथाविधत्वाल्लोके हि दृश्यते ग्रामान्प्रति गन्तृणामेवंविधोदेशिकैरुपदेशः—इतो निष्क्रम्यामुकं दृत्तममुकीं नदीममुकं च पर्वतपार्श्वं गत्वा ऽमुकं ग्रामं गच्छेति । अथवा भोगभूमय एताः स्युः कालविशेषतया प्रसिद्धानामहरादीनां मार्गचिन्हत्वानुपपत्तेः, अन्यस्य च मार्गचिन्हभूतस्यैतेषामनभिधायित्वाद्, भोगभूमित्वं च एत एव लोका यदहोरात्राण्यर्द्धमासा मासा ऋतवः संवत्सरा इत्यहरादीनां लोकत्ववचनादुपपद्यते, अत एव कौषीतकिनोऽग्निलोकमागच्छतीत्यादिना लोक—शब्दाभिधानेनार्चिरादीन् पठन्तीत्येवं प्राप्ते ब्रूमः आतिवाहिका इति, विदुषामतिवाहे परमपुरुषेण नियुक्ता आतिवाहिकाः देवताविशेषाः एतेऽर्चिरादयः, कुतः तल्लिङ्गात्—अतिवहनलिङ्गात्, अतिवहनं हि गन्तॄणां गमयितृत्वं तच्च तत्पुरुषोऽमानवः स एनान्ब्रह्म गमयतीत्युपसंहारे श्रूयमाणं पूर्वेषामप्यविशेषश्रुतानां स एव संबन्ध इति गमयति ।

टी० सू० आतिवाहिकास्तल्लिङ्गात् ॥ ४ ॥ अनन्तरसङ्गतिः स्फुटा किमर्चिरादयो मार्गसिद्धभूता भोगभूमयः? उतातिवोढार? इति, किं लौकिकोपदेशप्रक्रमानुरोधो न्याय्यः किमेते एव लोका यदहोरात्राण्यर्द्धमासा ऋतवः संवत्सर इति वाक्यानुरोधो युक्तः? उत गमयितृत्वलिङ्गानुरोध

उचितः? आद्ये मार्गचिन्हत्वं, द्वितीये भोगभूमित्वं, तृतीये त्वातिवाहिकत्वम् । अथवेत्यादि, भोगभूमित्वस्याप्यवाचकाः शब्दा इत्यत्राह "एत एव लोका" इति, लोकाअहरादिशब्दवाच्या इत्यस्य वाक्यस्यार्थ इति पूर्वपक्षिणो हृदयम् । अत्राहरादिकालविशेषाणां लोकशब्दवाच्यत्वमुक्तं स्यात् न भोगभूमीनामहरादिशब्दवाच्यत्वमित्यत्राह "अत एव कौषीतकिन" इति, लोक-शब्दानुविधानमनुवृत्तिः तस्मै स तत्र विजिहीर्षते इत्यपि लोकत्वसाधकहेतुरर्थसिद्धः । राद्धान्तमाह "एव"मिति, तर्ह्यहरादिशब्दाः कथं देवतावाचिन इत्यत्राह—

सू० वदन्ति चार्चिरादयः शब्दाः अर्चिराद्यात्मभूतानभिमानिदेवताविशेषान्, तं पृथिव्यब्रवीदितिवत् । यद्येवं तत्पुरुषोऽमानवः स एनान् ब्रह्म गमयतीति वैद्युतस्यैव पुरुषस्य ब्रह्म प्रति गमयितृत्वश्रुतेः, विद्युतः परेषां वरुणादीनां कथमातिवाहिकत्वेनान्वय इत्यत आह—

## सू० वैद्युतेनैव ततस्तच्छ्रुतेः ॥ ५ ॥

ततो विद्युत उपरि वैद्युतेनामानवेनैवातिवाहिकेन विदुषामाब्रह्मप्राप्तेर्गमनम् । कुतः तच्छ्रुतेः स एनान् ब्रह्म गमयतीति तस्यैव गमयितृत्वश्रुतेः, वरुणादयस्तु अनुग्राहका इति तेषामप्यतिवाहिकत्वेनान्वयो विद्यत एव ॥ आतिवाहिकाधिकरणं समाप्तम ॥

टी० "वदन्ति चे"ति, तं पृथिव्यब्रवीत् आपो वा अकामयन्त अग्निर्वाग् भूत्वा मुखं प्राविशत् आदित्यश्चक्षुर्भूत्वा अक्षिणी प्राविशदितिवदिति भावः । उत्तरसूत्रशङ्कामाह—"यद्येव"मिति, सू० वैद्युतेनैव ततस्तच्छ्रुतेः ॥ ५ ॥ ततः—शब्दस्य पश्चाद्भावपरत्वव्यावृत्त्यर्थं व्याचष्टे "ततो विद्युत" इति, तर्ह्यातिवाहिकेषु वरुणादीनामन्वयः कथमित्य-

त्राह "वरुणाद्धयसित्व"ति, परेषां पक्षे नातीव विरोधः सगुणोपासकवि-षयमित्येतावत् तु पूर्वमेव प्रत्युक्तं तेषां परेषां च उपपादनप्रकारे वैषम्यमेव न तूपपाद्यवैषम्यं, स एतान् ब्रह्म गमयतीति गमयितुरमानवत्त्वं दर्शयति इदं त्वविशेषणं मानवगमयितृत्वव्यवच्छेदकत्वात् पूर्वेषां मानवत्वेन गमयितृत्वे सिद्धम्, अमानवत्त्वं नाम मनोर्दैवादिगत्वं । अत्रेतनानाम-न्यादीनां गमयितृत्वायोगात्, संपिण्डितकरणग्रामस्योत्क्रान्तस्यापि स्वात-न्त्र्येण गमनायोगात् अर्चिराद्यभिमानिनो देवा आत्मानो गमयितारोऽभ्युप-गन्तव्या इति, अमानवशब्दस्य यौगिकत्वेऽपि व्यवच्छेद्यस्य मानवत्त्वं गम-येत् न गमयितृत्वं, विशेषणं हि स्वप्रत्यनीकाकारयोगं व्यवच्छेद्यस्य दर्शयति न त्वाकारान्तरसाम्यं चन्द्रमसा संवादादिदर्शनाद्व अन्यत्वापटुकरणत्व-मपि दुर्वचम् अतस्तदादरः । अन्ये तु वरुणस्य तडित्सम्बन्धोवर्षद्वारकः स तस्य वाय्वादित्याभ्यामपि तुल्यः वायुर्वै वृष्ट्या ईशे तस्माद्वायुप्रच्युतादिवो-वृष्टिरिति याभिरादित्यस्तपति रश्मिभिस्ताभिः पर्जन्योवर्षतीति च तयो-र्वृष्टिहेतुत्वश्रवणात्ततश्च केवलार्थक्रमेण विघन उपरिवेशनादपि पाठ-क्रमसहकृतार्थक्रमवशादादित्यस्याधस्ताद्वरुणो निवेशनीय इति सिद्धान्त-यन्ति तडितोऽधीति सूत्रं विद्युत उपरि वरुणनिवेशनपरं व्याख्यातं तत्र वाय्वादित्यतडिद्भिः संबन्धस्य समानतया ऽतिप्रसङ्गमपहारार्थं शङ्कान्तरमेव-मुपन्यस्तं स एतान् ब्रह्म गमयति इति श्रवणाद्विद्युदामन्येन नेतव्यत्वम्प्र-तीयते न तु स्वयं गन्तृत्वं तत्र प्रजापतिरिन्द्रश्च चेतनत्वात् स्वस्वलो-कावधि नेतारौ विद्युतस्त्वचेतनत्वात् इन्द्रलोकावधिनेतृत्वानुपपत्तेर्ने-तृविशेषाकाङ्क्षायां वरुणस्य विद्युत्सम्बन्धश्चास्तीत्याकाङ्क्षासहकृतात् संब-न्धाद्विद्युत उपरि वरुणो निवेशनीय इत्युक्त्वा तर्ह्यर्चिरादीनामप्यचेत-नत्वेन नेतृत्वानुपपत्तेस्तत्रापि नेतृभिरन्यैर्भवितव्यमिति शङ्कापरिहारा-र्थमर्चिरादीनां चेतनत्वेन नेत्रन्तरनैराकाङ्क्ष्यप्रतिपादकमातिवाहिका इत्यादिसूत्रं व्याख्यातम् । अस्मिन्सूत्रे मार्गपरत्वे भोगभूमित्वं चार्चिरादीनां पूर्वपक्षीकृत्य देवतात्वं समर्थितं तत्प्रकारिणां गुहासि देवोऽसीत्यादि-श्रुतौ तमग्निरभिप्रवहति तं वायुरभिप्रवहतीत्यादिना पृथिव्यग्निर्वा-

युरन्तरिक्षं लोको दिशोऽहोरात्रेऽर्धमासा मासाश्चर्तवः संवत्सरो दिव्य-गन्धर्वाश्चाप्सरसोऽद्भिर्देवा आदित्यश्चन्द्रमा इत्यातिवाहिका उच्यन्ते, ते एवैते अर्चिरादयस्तन्नामधेयकप्रत्यभिज्ञानलिङ्गात् देवानामेव महिमानं गत्वा आदित्यस्य सायुज्यं गच्छतीति विदुषां तत्र सायुज्यप्राप्तिरर्चिरा-दीनां देवतात्वे लिङ्गम् । अतो न तत्र नेत्रन्तरापेक्षा, विद्युतस्त्वचेतन-तया तदपेक्षाऽस्तीति तस्या उपरि वरुणो नेतेति पूर्वपक्षं परिसमाप्य सिद्धान्त उच्यते. वैद्युतेनैवेति सूत्रेण, आदित्याद्वैद्युतं वैद्युतात्पुरुषो मान-व एत्य ब्रह्मलोकान् गमयतीति अमानवस्य पुरुषस्य ब्रह्मलोकगमयि-तृत्वं वैद्युतस्यापादनत्वं चावगम्यते, अतो विद्युदभिमानी पुरुषो वैद्युतः स च ब्रह्मलोकादर्वाचीनेषु लोकेषु नेतेति प्रतीतम् । अतो-नेत्रन्तरनिराकाङ्क्षत्वाद्वरुणो यथाश्रुति वायोरुपर्येव वर्तते न तु तस्यास्ति नेतृत्वमिति सिद्धान्तसूत्रं वर्णयन्ति । अत्रोच्यते आदित्यादधस्ताद्वरुण निवेशनस्य सिद्धान्तितत्वं तावदयुक्तं पाठक्रमार्थक्रमयोरुभयोरपि श्रौत-क्रमबाध्यत्वात् स वायुमागच्छति तस्मै स तत्र विजिहीते यथा रथ-चक्रस्य खन्तेन ऊर्ध्व आक्रमते स आदित्यमागच्छतीति देवलोकादादि-त्यमिति च वायोरनन्तरमादित्यस्य श्रौतक्रमप्राप्तत्वात् तयोर्मध्ये स वायुलोकं स वरुणलोकं स आदित्यलोकमिति पाठक्रमानुरोधेन वरुण-निवेशनं हि श्रौतक्रमबाधितं स्यात्, एतदुक्तं भवति वाय्वादित्ययो-र्मध्ये तडित उपरि च वरुणनिवेशनमर्थक्रमप्राप्तं तत्र वाय्वादित्ययोरर्थ-क्रमस्य क्रमानुगृहीतया प्राप्तं तत्र वाय्वादित्ययोरर्थक्रमस्य श्रौतक्रम-बाधितत्वादबाधितार्थक्रमेण तडित उपरि वरुणनिवेशनमेव युक्तमिति । किंच अर्थक्रमानुगृहीतपाठक्रमेण क्रमनिर्णये कर्तव्यत्वे वृष्टिहेतुत्वलक्ष-णार्थक्रमसचिवेन स आदित्यलोकं स इन्द्रलोकं स प्रजापतिलोकमिति पाठक्रमेणादित्यादुपरि इन्द्रनिवेशनप्रसङ्गः, आदित्याच्चन्द्रमसमिति श्रौत-क्रमविरोधात्तदयुक्तमिति चेत्पूर्वदर्शितश्रौतक्रमविरोधात् वायोरूर्ध्वं वरु-णनिवेशनमयुक्तं यतः श्रौतक्रमाविरोधात् विद्युतः परं वरुणनिवेशन-मेव युक्तम् अत एव तडितोऽधीति सिद्धान्तसूत्रं न तु पूर्वपक्षविषयम् ।

अत एवातिवाहिका इति सूत्रद्वयमधिकरणान्तरं भवितुमर्हतीति तस्य परोक्तयोजनाऽनुपपन्ना ॥ आतिवाहिकाधिकरणं समाप्तम् ॥

कार्याधिकरणम् । **सू० कार्य्यं बादरिरस्य गत्युपपत्तेः ॥ ६ ॥**

भा० अर्चिरादिनैव गच्छति विद्वान् अर्चिरादिरमानवान्तश्च गण आतिवाहिको विद्वांसं ब्रह्म गमयतीत्युक्तम्, इदमिदानीं चिन्त्यते किमयमर्चिरादिको गणः कार्य्यं हिरण्यगर्भमुपासीनान्नयति? उत परब्रह्मोपासीनानेव? अथ परब्रह्मोपासीनान् प्रत्यगात्मानं ब्रह्मात्मकतयोपासीनांश्चेति विशये कार्य्यमुपासीनानेव गमयतीति बादरिराचार्यो मन्यते कुतः, अस्य हिरण्यगर्भमुपासीनस्यैव गत्युपपत्तेः, न हि परिपूर्णं सर्वज्ञं सर्वगतं सर्वात्मभूतं परं ब्रह्मोपासीनस्य तत्प्राप्तये देशान्तरगतिरुपपद्यते, प्राप्तत्वादेव नित्यप्राप्तपरब्रह्मविषया ऽविद्यानिवृत्तिमात्रमेव हि परविद्याकार्यं कार्यं, तु हिरण्यगर्भरूपं ब्रह्मोपासीनस्य परिच्छिन्नदेशवर्तिप्राप्यप्राप्त्यर्थं गमनमुपपद्यते, अतोऽर्चिरादिक आतिवाहिकगणस्तमेव नयति ॥

टी० सू० कार्य्यं बादरिरस्य गत्युपपत्तेः ॥ ६ ॥ अवान्तरसङ्गतिमाह "अर्चिरादिनैवे"ति, कार्यं हिरण्यगर्भमुपासीनानिति, कार्य्योपासकस्य कार्य्यप्राप्तिः परोपासकस्य परप्राप्तिश्च तत्क्रतुन्यायसिद्धा, अत उपासितृविशेषे निश्चिते प्राप्तिसन्देहाभावात् संशयस्योपासितृभेदमूलत्वात् स एनानित्युपासितृणां प्रतिपन्नत्वाच्च उपासीनानित्यध्याहृतं, नयतिपदं सिद्धान्तसूत्रादाकृष्टं किमर्चिरादिको गणःकार्य्यं हिरण्यगर्भमुपासीनानेव नयति? उत परं ब्रह्म उपासीनानेव? उत परं ब्रह्मो-

पापासीनान्प्रत्यगात्मानं ब्रह्मात्मकतयोपासीनांश्चेति, किं परब्रह्मणि प्राप्ये गतिब्रह्मलोकशब्दावुपपद्येते नेति ब्रह्मोपासीनानामेव गमयितृत्वे तद्य इत्थं विदुर्ये चेमे इत्यादिवाक्यसामञ्जस्यमस्ति नेति यदा तदा नोपपद्येते तदा कार्य्यमुपासीनानेव नयेत्, यदा गतिब्रह्मलोकशब्दावुपपद्येते यदा च तद्य इत्थमित्यादिवाक्यसामञ्जस्यमस्ति तदा ब्रह्मोपासीनानेव नयेत्, यदा सामञ्जस्यं नास्ति तदा परं ब्रह्मोपासीनान् प्रत्यगात्मानं ब्रह्मात्मकतयोपासीनांश्च नयेत् उपास्तिनयत्योर्द्वयोरपि कर्म हिरण्यगर्भः कार्य्यमुपासीनानित्यादि सर्वगतत्वात् ब्रह्मणो मुक्तेन तत्प्राप्त्यर्थं न क्वचिद्गन्तव्यं सर्वगतत्वेऽपि देशविशेषप्राप्तानेव जानाति नान्यमिति न नियमोऽस्ति येन क्वचिद्गन्तव्यं सर्वज्ञत्वात् क्वचित्कल्याणगुणपूर्त्तिः क्वचिदपूर्त्तिरिति न तदर्थं गन्तव्यं सर्वतः परिपूर्णत्वात्, सम्बन्धविशेषसम्पादनाय नान्यत्र गन्तव्यं सर्वात्मत्वादिति विशेषणानां तात्पर्य्यं नित्यप्राप्तिश्चेदुपासनावैयर्थ्यमित्यत्राह "नित्यप्राप्ते"ति,

## सू० विशेषितत्वाच्च ॥ ७ ॥

वृ० पुरुषो ऽमानवः स एत्य ब्रह्मलोकान् गमयतीति लोक–शब्देन बहुवचनेन च लोकविशेषवर्तिनं हिरण्यगर्भमुपासीनमेवामानवो गमयतीति विशिष्यते । किंच प्रजापतेः सभां वेश्म प्रपद्यत इति कार्य्यस्य हिरण्यगर्भस्य समीपगमनमर्चिरादिना गतोऽभिसन्धत्ते । नन्वेवं तत्पुरुषोऽमानवः स एनान् ब्रह्म गमयतीत्ययं निर्देशो नोपपद्यते हिरण्यगर्भनयने हि स एनान्ब्रह्माणं गमयतीति निर्देष्टव्यं स्यात् अत आह–

## सू० सामीप्यात्तु तद्व्यपदेशः ॥ ८ ॥

स्रू० "यो ब्रह्माणं विदधाती"ति हिरण्यगर्भस्य प्रथमजत्वेन ब्रह्मसामीप्यात्तस्य ब्रह्म-शब्देन व्यपदेश इति गत्यनुपपत्तिविशेषणादिभिरुक्तैर्हेतुभिर्निश्चीयते इत्यर्थः । अथ स्यात् अर्चिरादिना हिरण्यगर्भप्राप्तौ एष देवपथो ब्रह्मपथ एतेन प्रतिपद्यमाना इमं मानवमावर्तं नावर्तन्ते तयोर्ध्वमायन्नमृतत्वमेतीत्यमृतत्वप्राप्त्यपुनरावृत्ति व्यपदेशो नोपपद्यते हिरण्यगर्भस्य कार्य्यभूतस्य द्विपरार्द्धकालावसाने विनाशशास्त्रात् आब्रह्मभुवनाल्लोकाः पुनरावर्तिनोऽर्जुनेति वचनाद्धिरण्यगर्भं प्राप्तस्य पुनरावृत्तेरवर्जनीयत्वादिति तत्राह—

टी० सू० विशेषितत्वाच्च ॥ ७ ॥ एतं ब्रह्मलोकं न विन्दन्ति इत्यादिषु कर्मधारयः स्वीकृतः तद्व्यावृत्त्यर्थं बहुवचनेन चेत्युक्तं, बहुवचनान्तलोक-शब्दे तात्पर्य्यम् ॥ उत्तरसूत्रशङ्कामाह "नन्वि"ति, । सू० सामीप्यात्तु तद्व्यपदेशः ॥ ८ ॥ गत्यनुपपत्तिविशेषणादिभिरिति आदि-शब्देन ब्रह्मेति निर्देशोपपत्तिर्गमनोपपत्तिश्च विवक्षिता कार्ये कारणोपचार इत्यर्थः । उत्तरसूत्रशङ्कामाह—

## सू० कार्यात्यये तदध्यक्षेण सहातः परमभिधानात् ॥ ९ ॥

स्रू० कार्य्यस्य ब्रह्मलोकस्यात्यये तदध्यक्षेण हिरण्यगर्भेणाधिकारिकेणावसिताधिकारेण विदुषा सह स्वयमपि तत्राधिगतविद्योऽतः कार्य्याद् ब्रह्मलोकात्परं ब्रह्म प्राप्नोती-

त्यर्चिरादिना गतस्यामृतत्वप्राप्त्यपुनरावृत्त्यभिधानात् ते ब्रह्मलोके तु परान्तकाले परामृतात् परिमुच्यन्ति सर्वे" इति वचनाच्चावगम्यते ॥

सू० स्मृतेश्च ॥ १० ॥

भा० स्मृतेश्चायमर्थोऽवगम्यते "ब्रह्मणा स च ते सर्वे सम्प्राप्ते प्रतिसंचरे । परस्यान्ते कृतात्मानः प्रविशन्ति परं पदम्"-मिति, अतः कार्य्यमुपासीनमेवार्चिरादिको गणो नयतीति बादरेर्मतम् । अथ जैमिनिः पक्षान्तरपरिग्रहेण प्रत्यवतिष्ठते ।

सू० परं जैमिनिर्मुख्यत्वात् ॥ ११ ॥

भा० परं ब्रह्मोपासीनमेवार्चिरादिर्नयतीति जैमिनिराचार्य्यो-मन्यते कुतः, मुख्यत्वात् तत्पुरुषोऽमानवः स एनान् ब्रह्म गमयतीति ब्रह्म-शब्दस्य परस्मिन्नेव ब्रह्मणि मुख्यत्वात् प्रमाणान्तरेण कार्य्यत्वनिश्चये सत्येव हि लाक्षणिकत्वं युक्तं, न च गमनानुपपत्तिः प्रमाणं परस्य ब्रह्मणः सर्वगतत्वेऽपि विदुषो विशिष्टदेशगतस्यैवाविद्यानिवृत्तिशास्त्रात्, यथा हि विद्योत्पत्तिर्वर्णाश्रमधर्मशौचाचारदेशकालाद्यपेक्षा तमेतं वेदानुवचनेनेत्यादिशास्त्रादवगम्यते तथा निःशेषाविद्यानिवर्त्तनरूपविद्यानिष्पत्तिरपि विशिष्टदेशगतिसापेक्षेति गतिशास्त्रादवगम्यते ॥

टी० "अथ स्या"दिति, सू० कार्य्यात्यये तदध्यक्षेण सहातः परमभिधानात् ॥ ९ ॥ अयमर्थः कथमवगत इत्यत्राह "ते ब्रह्मलोके" इति

परामृतात्परामृतं प्राप्य ल्यब्लोपे पञ्चमीति पूर्वपक्षिणोऽभिप्रायः । सू० स्मृतेश्च ॥ १० ॥ परस्य ब्रह्मायुषः अन्ते इति पक्षान्तरपरिग्रहेण पूर्वपक्षात्पक्षान्तरेण न तु कृत्स्नसिद्धान्तेनेत्यर्थः सू० परं जैमिनिर्मुख्यत्वात् ॥ ११ ॥ विद्यानिष्पत्तिः विद्या हि स्वमाहात्म्यात् सूक्ष्मशरीरस्थितिहेतुरनुवर्तते तस्या निष्पत्तिः कार्य्यकरत्वावस्थापत्तिः । यद्वा निष्पत्तिर्नितरां विकासः सा गतिसापेक्षेत्यर्थः नित्यत्वेऽपि । कालविशेषापेक्षावत् सर्वगतत्वेऽपि देशविशेषापेक्षा युक्तेति भावः । नित्यमुक्ततया कालविशेषापेक्षा न चेच्छास्त्रवैयर्थ्यं प्रत्यक्षविरोधश्च, उत्क्रान्त्यनुपपत्त्या न गतिरिति चेत्तत्राह–

सू० विदुष उत्क्रान्तिप्रतिषेधादि तु पूर्वमेव परिहृतम् । यत्तु ब्रह्मलोकानिति लोक–शब्दबहुवचनाभ्यां विशेषणात्कार्य्यभूतहिरण्यगर्भप्रतीतिरिति तदयुक्तं निषादस्थपतिन्यायेन ब्रह्मैव लोको ब्रह्मलोक इति कर्मधारयस्यैव युक्तत्वात्, अर्थस्य चैकत्वे निश्चिते बहुवचनस्य अदितिः पाशानितिवदुपपत्तेः, परस्य ब्रह्मणः परिपूर्णस्य सर्वगतस्य सत्यसङ्कल्पस्य स्वेच्छापरिकल्पिताः स्वासाधारणा अप्राकृताश्च लोका नात्यन्ताय न सन्तीति श्रुतिस्मृतीतिहासपुराणप्रामाण्यात् ॥

सू० दर्शनाच्च ॥ १२ ॥

दर्शयति च श्रुतिः ऊर्द्ध्वन्यनाड्या निर्गत्य देवयानेन गतस्य परब्रह्मप्राप्तिम्, एष सम्प्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यत इति, यदुक्तं प्रजापतेः सभां वेश्म प्रपद्य इत्यर्चिरादिना गतस्य कार्य्ये प्रत्यभिसंधिर्दृश्यत इति तत्रोत्तरम् ।

## सू० न च कार्य्ये प्रत्यभिसन्धिः ॥ १३ ॥

न चायं प्रत्यभिसन्धिः कार्य्ये हिरण्यगर्भे अपि तु परस्मिन्नेव ब्रह्मणि वाक्यशेषे "यशोऽहं भवामि ब्राह्मणानामिति तस्याभिसन्धानात्; सर्वाविद्याविमोकपूर्वकसर्वात्मभावाभिसंधानात्, अश्व इव रोमाणि विधूय पापं चन्द्र इव राहोर्मुखात् प्रमुच्य धूत्वा शरीरमकृतं कृतात्मा ब्रह्मलोकमभिसंभवानीत्यभिसंभाव्यस्य ब्रह्मलोकस्याकृतत्वश्रवणात् सर्वबन्धविनिर्मोकस्य च साक्षात् श्रवणात्, अतः परमेव ब्रह्मोपासीनमर्चिरादिरातिवाहिको गणो नयतीति जैमिनेर्मतम् । इदानीं बादरायणस्तु भगवान्स्वमतेन सिद्धान्तमाह—

टी० "विदुष" इति, यत्त्वित्यादि नाऽन्यन्ताय न सन्तीति, न न सन्तिनिषेधप्रसङ्गो नास्ति सन्त्येव अत्यर्थं सन्त्येवेत्यर्थः । स्वेच्छापरिकल्पिता इत्यर्थः परमव्योमशब्दादीनां हृदयगुहादिस्थानपरत्वापादनेन लोकविशेषापलापो न युक्तः यथन्तमस्य रजसः पराके हिरण्मये परे कोशे विरजं ब्रह्मनिष्कलं तच्छुभ्रं ज्योतिषां ज्योतिस्तद्य आत्मविदो विदुरिति तदक्षरे परमे व्योमन्नित्यादिभिर्दुरपन्हवत्वादिति प्रमाणदार्ढ्यं विवक्षितम् । सू० दर्शनाच्च ॥ १२ ॥ उस्थायोपसंपत्तिवचनेन देवयानेन प्राप्तिसिद्धिः । उत्तरसूत्रशङ्कामाह "यदुक्त"मिति, । सू० न च कार्य्ये प्रत्यभिसंधिः ॥ १३ ॥ उपपादकवाक्यवशात् परस्मिन्नेवेत्युक्तम् ॥

## सू० अप्रतीकालम्बनान्नयतीति बादरायण उभयथा च दोषात्तत्क्रतुश्च ॥ १४ ॥

भू० अप्रतीकालम्बनान् प्रतीकालम्बनव्यतिरिक्तान्नयत्यर्चिरादिरातिवाहिको गण इति भगवान्बादरायणो मन्यते, एतदुक्तं भवति, कार्य्यमुपासीनान्नयतीति नायं पक्षः सम्भवति परस्यैवोपासीनानित्ययमपि नियमो नास्ति न च प्रतीकालम्बनानपि नयति, अपि तु ये परं ब्रह्मोपासते ये चात्मानं प्रकृतिवियुक्तं ब्रह्मात्मकमुपासते तानुभयविधान्नयति ये तु ब्रह्मकार्य्यान्तर्भूतं नामादिकं वस्तु देवदत्तादिषु सिंहादिदृष्टिवद्ब्रह्मदृष्ट्या केवलं वा तत्तद्वस्तूपासते न तान्नयति, अतः परं ब्रह्मोपासीनानात्मानञ्च प्रकृतिवियुक्तं ब्रह्मात्मकमुपासीनान्नयतीति, कुतः उभयथा च दोषात्, कार्य्यमुपासीनान्नयतीति पक्षे अस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसंपद्येत्यादिकाः श्रुतयः प्रकुप्येयुः, परस्यैव ब्रह्मोपासीनानिति च नियमे ॥

टी० सू० अप्रतीकालम्बनान्नयतीति बादरायण उभयथा च दोषात्तत्क्रतुश्च ॥ १४ ॥ प्रतीकालम्बनव्यतिरिक्त एव हि परब्रह्मोपासीनः तन्नयतीति दर्शनात् जैमिनिमतात् सिद्धान्तिमतस्य कोविशेष इत्यत्राह "एतदुक्त"मिति, कार्य्यमुपासीनोऽपि प्रतीकालम्बनो नामादिषु ब्रह्मदृष्ट्योपासीनश्च प्रतीकालम्बनः न च प्रतीकालम्बनानित्यत्र प्रतीकालम्बन-शब्दो दृष्ट्युपासनपरमाह गोबलीवर्द्दनयात् प्रतीकालम्बनव्यतिरिक्तेषु केषांचिदर्चिरादिगतिर्जैमिनिनोक्ता प्रतीकालम्बनव्यतिरिक्तत्वोपाधिकेषु तान् सर्वान्नयतीति सिद्धान्तमतमिति विशेषः कार्यमुपासीनान् नयतीति नायं पक्ष इति हिरण्यगर्भोपासीनानामर्चिरादिगतिरनुपपन्ना अर्चिरादिना गतस्य परब्रह्मप्राप्तेः, न हि हिरण्यगर्भोपासकस्य परब्रह्मप्राप्तिः, यथोपासनं हि फलं तस्मादर्चिरादिना परब्रह्मोपासक एव

गच्छति न कार्य्योपासक इत्यर्थः । उदाहृतश्रुतिवाक्यप्रतिपन्नयोरन्यतरस्य प्रतीकालम्बनत्वादप्रतीकालम्बनान् नयतीति प्रतिज्ञानं व्याहतमित्यत्राह "पञ्चाग्नी"ति, तत्र प्रतिपन्नयोरुभयोरप्यप्रतीकालम्बनत्वं साधयितुं सूत्रकारस्तत्क्रतुश्चेत्युक्तवानित्यर्थः ॥

भा० तद्य इत्थं विदुर्ये चेमेऽरण्ये श्रद्धा तप इत्युपासते तेऽर्चिषमभिसम्भवन्तीति पञ्चाग्निविदोऽर्चिरादिगणो नयतीति श्रुतिः प्रकुप्येत्, अत उभयस्मिन्नपि पक्षे दोषः स्यात्तस्मादुभयविधान्नयतीति तदेतदाह तत्क्रतुश्चेति, तत्क्रतुः तथोपासीनस्तथैव प्राप्नोतीत्यर्थः, यथा क्रतुरस्मिँल्लोके पुरुषो भवति तथेतः प्रेत्य भवति तं यथा यथोपासत इति न्यायात् पञ्चाग्निविदोऽप्यर्चिरादिना गतिश्रवणात् अर्चिरादिना गतस्य ब्रह्मप्राप्त्यपुनरावृत्तिश्रवणाच्च, अत एव तत्क्रतुन्यायात् प्रकृतिविनिर्मुक्तब्रह्मात्मकात्मानुसन्धानं सिद्धं नामादिप्राणपर्यन्तप्रतीकालम्बनानां तूभयविधश्रुतिसिद्धोपासनाभावादर्चिर्मिश्रोपासने तत्क्रतुन्यायाच्चार्चिरादिना गतिर्ब्रह्मप्राप्तिश्च न विद्यते। तमिमं विशेषं श्रुतिरेव दर्शयतीत्याह—

टी० तद्य इत्थं विदुर्ये चेमेऽरण्ये श्रद्धा तप इत्युपासत इत्यत्र पञ्चाग्निविद्यानिष्ठस्यार्चिरादिगतिश्रवणात् तया गतस्य ब्रह्मप्राप्त्याऽपुनरावृत्तिश्रवणात् फलस्य च यथोपासनभावित्वात् अर्चिरादिना ब्रह्मप्राप्तिफलोपासननिष्ठः पञ्चाग्निविद्यानिष्ठो ब्रह्मोपासक एव, तत्र तद्य इत्थं विदुर्ये चेमेऽरण्ये श्रद्धा तप इत्युपासत इति विभागान्यथानुपपत्त्या स्वात्मविशिष्टब्रह्मोपासनं ब्रह्मात्मकस्वात्मोपासनं चेति कत्यं ब्रह्मप्राप्त्यानुगुण्यात् पृथङ्निर्देशावैयर्थ्याच्चेत्यर्थः । के पुनरत्र प्रतीकालम्बना इत्य-

त्राह "नामादी"ति, । सू० विशेषं च दर्शयति ॥ १५ ॥ यावन्नाम्नोगतं देवादिनाम्नो गोचर इत्यर्थः, ब्रह्मणा सह ते सर्व इत्यादिवचनं नार्चिरादिगतपुरुषविषयम् अपि तु चतुर्मुखलोकस्थयोगिविषयं "ते ब्रह्मलोके इति ब्रह्मैव लोको ब्रह्मलोकः तत्र वर्त्तमाना ब्रह्मनिष्ठाः परान्तकाले अन्तकाले च मामेवेत्युक्तचरमदेहावसानसमये परामृतात् प्रसन्नात् ब्रह्मणो हेतोः सर्वे परिमुच्यन्त इत्यर्थः । ब्रह्मलोकशब्दस्य कर्मधारयः स्वतःप्राप्तः वर्तमानशब्दाध्याहारस्तुल्यः अन्तकाल—शब्दस्य चरमदेहावसानपरत्वं स्मृतिप्रसिद्धम् । अतोऽस्मिन्नेव पते स्वारस्यम् । अधिकरणार्थमुपसंहरति "तस्मादि"ति, अत्र परेषां पूर्वपक्षसूत्राण्येव सिद्धान्तसूत्राणि परं जैमिनिरित्यादिसूत्रत्रयं पूर्वपक्षविषयं तत्तु सर्वाधिकरणेष्वितिविरोधात् सूत्रकाराभिप्रायविरुद्धं सत्यपि सिद्धान्तोपक्रमेऽधिकरणे सिद्धान्तावसानत्वं सर्वत्र दृष्टं न तु पूर्वपक्षावसानत्वं परविद्याप्रकरणे गति-

## सू० विशेषं च दर्शयति ॥ १५ ॥

**भू० यावन्नाम्नो गतं तत्रास्य यथाकामचारो भवतीत्यादिका श्रुतिर्नामादिप्राणपर्यन्तप्रतीकमुपासीनानाम् ।**

कीर्तनं स्तुत्यर्थमित्यनुपपन्नम् अन्यफलतयाऽवगम्यमाने नान्यस्तुत्यनुपपत्तेः, गतिर्हि सगुणविद्याफलत्वेन मता । यत्तूक्तं प्रजापतेः सभामित्यत्र कार्य्ये प्रत्यभिसन्धिरुपपद्यते ते यदन्तरेति पूर्ववाक्यविच्छेदात् प्रकरणाद्धि श्रुतिवाक्ये बलीयसी इति तदयुक्तं यशोऽहं भवामि ब्राह्मणानामिति सर्वात्मकत्वकीर्त्तनात्सगुणब्रह्मणस्सर्वात्मत्वकीर्त्तनानुपपत्त्या च परप्रकरणाविच्छेद इति, यतः, न च वाच्यं सगुणेऽपि ब्रह्मणि सर्वकामत्वादिवदुपासनार्थं प्रशंसार्थं वा तदिति तत्र पूर्वापरवाक्ययोः परविषयत्वेऽवगम्यमाने मध्यगतवाक्यस्य पदश्रुतेर्वाऽग्निना सिञ्चेदितिवदयोग्यार्थत्वेन दुर्बलत्वात्प्रजापतिशब्दस्य परविषयत्वेऽपि प्रजापतिश्चरति गर्भे अन्तरितिवत् प्रयोगोपपत्तेः, परविषयत्वकार्यविषयत्वयोरेकवाक्यत्वानुपपत्त्या वाक्यभेदकल्पनप्रसङ्गात् एकवाक्यात्मकत्वे सम्भवति वाक्यभेदा-

योगाच्च प्रत्यभिसन्धिरनुपपन्नः, परब्रह्मण एव निरवधिककल्याणगुणकस्य सर्वान्तरात्मत्वात्सर्वात्मत्वकीर्त्तनस्य प्रशंसार्थत्वमप्युक्तम् । यत्तूक्तं विभोर्गन्तृत्वानुपपत्तिर्भूगतेन प्रदेशान्तरगमनवत् पयसो दध्याद्यवस्थापत्तिवच्चांशभेदेनावस्थाभेदेन च गन्तृत्वाभावोऽनुपपन्नः निरंशत्वादवस्थाभेदशून्यत्वाच्च ब्रह्मणः गन्तुश्च जीवस्य ब्रह्मावयवत्वे तद्विकारत्वे च तत्प्रहाणेन स्थित्यभावात् गमनमयुक्तं, मध्यमपरिमाणत्वे अनित्यत्वात् अणुत्वे कृत्स्नशरीरवेदनानुपपत्तेः, व्यापित्वे गत्यनुपपत्तेश्च न मार्गगमनं, संसार्यात्मनः पारमार्थ्ये बन्धादनिर्मोक्षः, मोक्षे स्वरूपनाश इत्यादि तर्कबलात् परं जैमिनिरित्यादिसूत्राणां पूर्वपक्षविषयतेति तदप्ययुक्तं ग्रामादिगतेरिव ब्रह्मसंयोगार्थत्वाभावादर्चिरादिगतेर्निःशेषप्रतिबन्धनिवृत्त्यर्था हि सा, तस्याश्च कालापेक्षावद्देशापेक्षा युज्यते यावन्न विमोक्ष्य इति कालापेक्षा ह्युपलभ्यते परिप्राणविकल्पेन गमनानुपपत्तिरपरविद्याफलत्वेऽपि प्रसज्जेदिति स्वव्याघातः,—

सू० गत्यनपेक्षं परिमितफलविशेषं च दर्शयति, तस्मादचिन्मिश्रं केवलं वा चिदस्तु ब्रह्मदृष्ट्या तद्वियोगेन च

टी० न च गतेर्मिथ्यात्वेन तत्रोपपत्तिः, विभुत्वस्य गतिमात्रविरोधित्वात्सत्यगमनमेव विभुत्वविरोधीति चेन्न दृष्टान्ताभावात् व्याप्त्यसिद्धेः, विभुत्वगत्योर्विरोधो नाम नियमेन भिन्नाधारत्वलक्षणः, ततश्च यत्र विभुत्वाभावस्तत्रैव सत्यगतिदर्शनात् विरोधो निश्चीयेत, न च विभुत्वानाश्रयघटादिनिष्ठं गमनं त्वन्मते सत्यं तस्मात् गतिमात्रं विभुत्वविरोधीति स्वव्याघातो दुस्तरः, अणुत्वे कृत्स्नदेहवेदनानुपपत्तावपि तुल्यो व्याघातः, तत्रापि वास्तवकृत्स्नवेदनस्यैवाणुत्वविरोध इति चेत् पूर्ववद् दृष्टान्ताभावात् व्याप्त्यसिद्धेः प्रभाप्रभावन्न्यायेनानुपपत्तिरपि नास्तीति प्रागेवोक्तं, संसारित्वस्य पारमार्थ्येऽपि स्वरूपत्वाभावादनिर्मोक्षस्वरूपनाशौ न स्याताम् । यत्तु संसारस्य कर्मनिमित्तत्वे सूक्ष्मापराधसम्भवात् कर्तृत्वशक्तिसद्भावाच्च निःशेषकर्मक्षयाऽनुपपत्त्यादि

जल्पितं तज्ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुत इति शास्त्रबलादीश्वर प्रसादशक्तिद्वारा निवर्तनीयत्वान्नोपपन्नं, या तु स्वपक्षे मोक्षोपपत्तिः सा च प्रागेव ध्वस्ता, अप्रतीकालम्बनानिति पृथगधिकरणयन्ति सगुणब्रह्मव्यतिरिक्तविकारालम्बनाः प्रतीकालम्बनाः तेषां पितृयाणतृतीयस्थानसम्बन्धाभावात् प्रतीकविशेषणत्वेन ब्रह्मणोऽप्युपासितत्वाच्चेमेऽरण्य इत्यत्र तेषामप्युपादानात्सर्वान् विकारालम्बनानमानवो ब्रह्मलोकं नयतीति पूर्वपक्षं कृत्वा प्रतीकालम्बनान्वर्जयति तद्व्यतिरिक्तान्विकारालम्बनान् नयतीत्युभयथाऽभ्युपगमेऽपि दोषाभावादिति योजयन्ति, तत्र तावदधिकरणभेदोऽनुपपन्नः त्रिशिरस्के विचारे जैमिनिपक्षस्य सिद्धान्त्येकदेशिमतत्वादप्रतीकालम्बनानित्यस्य साक्षात्सिद्धान्तपरत्वाच्चाधिकरणभेदानुपपत्तिरुभयथा च दोषादिति पठ्यमानत्वाददोषादिति पदमनुपपन्नम् उभयथा दोषानौचित्यं च स्वपक्षे दोषाभावमात्रादपि परपक्षे दोषोद्घाटनं हि स्वपक्षदार्ढ्यहेतुः । अपरे तु सामीप्यात्तु तद्व्यपदेश इत्यन्तं पूर्वपक्षमुक्त्वा सिद्धान्तं वक्तुमन्तरा चिन्तान्तरपरं कार्य्यात्यय इत्येतद्व्याचक्षते ।

मू० य उपासते न तान्नयति, अपि तु परं ब्रह्मोपासीनानात्मानं च प्रकृतिवियुक्तं ब्रह्मात्मकं चोपासीनानतिवाहिको गणो नयतीति सिद्धम् ॥ कार्याधिकरणं समाप्तम् ॥ इति श्रीभगवद्रामानुजाचार्यविरचिते शारीरकमीमांसाभाष्ये चतुर्थाध्यायस्य तृतीयः पादः ॥

टी० कार्य्यब्रह्मप्राप्तानां पुनरावृत्तिरस्ति तेषामिह न पुनरावृत्तिरिति वाजसनेयके इह–शब्दश्रवणात्तस्य कल्पविशेषत्वात् कल्पान्तरे चावृत्तिरिति पूर्वपक्षं कृत्वा श्वो भूते निर्वपेदिति श्वोभावस्येव सर्वकल्पानामिह–शब्दार्थत्वाविशेषादन्यथा अनावृत्तिः स्यादिह स्यादिति वाक्यभेदप्रसङ्गात्, एकया यात्यनावृत्तिमन्ययाऽऽवर्त्तते पुनरित्युक्तवैषम्याभावप्रसङ्गाच्च कार्य्यब्रह्मप्राप्तानामपि नावृत्तिरिति । अतस्तत्सामर्थ्यात्

कार्य्यात्यये तदध्यक्षेण सह परब्रह्मप्राप्तिरिति एवं निर्णीय परं जैमिनिरिति पूर्वोक्तस्य पूर्वपक्षस्य सिद्धान्तमाहुः, तत्र चाप्रतीकालम्बनात् प्रतीकालम्बनव्यतिरिक्तान् कार्य्यब्रह्मोपासकान् परब्रह्मोपासकाँश्च नयतीति हिरण्यगर्भोऽहम्भविष्यामीति प्रवृत्ताः कार्य्यब्रह्मोपासकाः उभयेषामर्च्चिरादिमार्गेण गतिः तयोर्ध्वमायन्नित्यादिश्रुतेः, पर्य्यङ्कविद्यापञ्चाग्निविद्ययोः कार्य्यब्रह्मोपासकस्यार्चिरादिश्रवणात् कार्य्यब्रह्मविदः क्रममुक्तिरतोऽनावृत्तिः परब्रह्मविदस्तु सद्योमुक्तिः अर्चिरादिना सत्यलोकमतिक्रम्य कारणे ब्रह्मणि सूक्ष्मदेहस्य करणानाञ्च प्रविलय इति परं जैमिनिरित्यनेन न विरोधः, ब्रह्मणो विभुत्वेऽपि कार्य्यमण्डलातिक्रमरूपा गतिर्जीवत्वस्यौपाधिकत्वाल्लिङ्गगमनमेव गतिरिति सिद्धान्तयन्ति तत्र हिरण्यगर्भं प्राप्तानां सर्वेषां पुरावृत्तिश्चेदयुक्ता ब्रह्मलोकगतानां श्वेतमहाभीषादीनां पुनरावृत्तिस्मरणात् तत्रत्यज्ञानिनामपुनरावृत्तिश्चेदभिमता, यत्तु हिरण्यगर्भो भविष्यामीति कार्य्यब्रह्मोपासीनानामर्चिरादिगत्या तत्प्राप्तिरिति तदयुक्तं हिरण्यगर्भस्य चेत्रज्ञतया तदुपासकानाममृतत्वप्राप्त्यभावादेवार्चिरादिगत्यनुपपत्तेः, तस्य च कार्य्यत्वकर्मवश्यत्वानुपास्यत्वादि च मुहुरुपपादितम्, अतस्तदुपासकानामप्रतीकालम्बनत्वमयुक्तं, जापकोपाख्याने ब्रह्मकायं प्रविशतो जापकस्य जिह्वया निष्क्रान्तस्य मूर्द्धन्यनाड्या निष्क्रमणाभावादर्चिरादिगत्यभावः स्फुटतरः। अथवा नेच्छते तत्र ब्रह्मकायनिवेशणम् उत्क्रामति च मार्गस्थः शीतीभूतोनिरामय इति ब्रह्मकायनिवेशणमनिच्छतो मुक्तिमार्गस्यतयोत्क्रमणवचनाच्च हिरण्यगर्भं प्राप्तवतो नार्चिरादिगतिः, अर्चिरादिना प्राप्यत्वं च न चतुर्मुखलोकस्योपपद्यते नारदादीनामादित्यमण्डलमभित्वा ब्रह्मलोकगमनदर्शनात्, "अपुनर्भवाय कोशं भिनत्ति कोशं भित्वा शीर्षकपालं भिनत्तीत्युपक्रम्य पृथिवीं भिनत्ति अपो भिनत्तीत्यारभ्याव्यक्तम्भिनत्ति अक्षरं भिनत्ति मृत्युं भिनत्तीत्यभिधानात् ब्रह्माण्डतदावरणात् बहिर्भूतत्वादव्यक्ताक्षरतमसां च न शरीरानुप्रविष्टपृथिव्यादीनां भेदनं तत्रोच्यते कोशं भिनत्ति शीर्षकपालं भिनत्तीत्यभिधाय पृथिव्यादिभेदनप्रतिपादनस्य पार्थिवाण्डक-

टाहतदावरणविषयताया अवर्जनीयत्वात्, ज्ञापकोपाख्याने द्वाभ्यां मुक्तं त्रिभिर्मुक्तमिति मुक्तप्राप्यस्य परमस्थानस्य गुणत्रयोत्तीर्णत्वाभिधानात् न कालस्तत्र वै प्रभुरित्यत्राकालकाल्यत्वप्रतिपादनात्, ब्रह्मलोकस्य च प्राकृतत्वेन गुणत्रयोत्तीर्णत्वायोगात् द्विपरार्द्धावसानत्वेन अकालकाल्यत्वायोगादत एवाक्षरे परमे व्योमन्नित्यक्षरत्वश्रवणविरोधाच्च तमसः परत्वायोगाच्च न चतुर्मुखलोकोऽर्चिरादिप्राप्यः कार्यब्रह्मोपासकान् परब्रह्मोपासकांश्च नयतीत्युभयथा शब्दव्याख्यानमनुपपन्नम् एवमुभयथाभाव एव दोषान्न स कारणं कारणं तु ध्येय इति कार्य्योपासनं हि प्रतिषिध्यते क्रममुक्त्यभ्युपगमादविरोध इति चेन्न अर्चिरादिगतस्य क्रममुक्तेः श्रुतिविरुद्धत्वात्, स एतान् ब्रह्म नयतीति हि श्रुतिः न तु क्रमेण गमयतीति हिरण्यगर्भादीनां मोक्षप्रदत्वाभावादेव तदुपासकानामर्चिरादिगत्ययोगाच्चैवं व्याख्यातुमयुक्तं कार्य्योपासकस्यार्चिराद्यन्वये पर्यङ्कविद्यादिकं प्रमाणमिति चेत् न कारणत्वबलादाकाशादिशब्दानां प्रसिद्धार्थपरत्वाभाववदर्चिराद्यन्वयबलेन तस्याप्युपास्यसमर्पकशब्दस्य कार्य्यपरत्वासिद्धेः, विग्रहाद्यन्वयात् कार्य्यत्वमिति चेत् विलक्षणविग्रहयोगस्यैव कारणत्वसाधकत्वात् । अन्ये त्वाहुः कार्य्यं ब्रह्म हिरण्यगर्भलोकः परं चापरं चेत्युपक्रम्य स सामभिरुन्नीयते ब्रह्मलोकमिति प्रयोगदर्शनात्सर्वगतस्य परब्रह्मणोगन्तव्यत्वायोगात् पर्य्यङ्कविद्यायां ह्रदनदीवृक्षादिविशेषवत्त्वदर्शनात् हिरण्यगर्भसामीप्येन लोकस्य ब्रह्मशब्दवाच्यत्वोपपत्तेश्च लोकप्राप्तिरिति पूर्वपक्षं कृत्वा ब्रह्मशब्दमुख्यत्वात् लोकस्थस्य हिरण्यगर्भस्य सतः परमात्मनः प्राप्यत्वेऽपि पूर्वपक्षयुक्तीनां सम्भवान्मुक्तानां चतुर्मुखलयावधिब्रह्मलोके भोगाभ्युपगमाद्धिरण्यगर्भाकारं परं ब्रह्मैव नयतीति सिद्धान्तयन्ति । अत्र चतुर्मुखलोकप्राप्तिरेव विद्याफलं तत्राप्रलयात् भोगः तल्लोकनाशे सृज्यताहेतुकर्माभावात् मोक्षइति बादरिमतं, ब्रह्मलोकप्राप्त्यनन्तरमेव ब्रह्मणि लयः तेन लिङ्गनाशः, ततश्च गुणाष्टकाविर्भावात्समानभोगता ब्रह्मलोके लीने परमाकाशप्राप्तिः तत्र च भोग इति जैमिनेरभिप्राय इति पक्षद्वयवैषम्यं दर्शितं भवति, अप्रतीकालम्बनानिति किं

सर्वेऽप्युपासका देवयानेन ब्रह्मलोकं यान्ति? उत नेति चिन्ता, तत्र देवयानेन गतान्सर्वानमानवः परं ब्रह्म हिरण्यगर्भाख्यं नयति? उत नेति? द्वे सृती अशृणवं पितॄणामहं देवानामुत मर्त्यानामिति मार्गद्वित्वं प्रतिज्ञाय अथ ये यज्ञेन दानेन तपसा लोकं जयन्ति ते धूममभिसंविशन्तीतीष्टादिकारिणां धूमादिप्राप्तिश्रवणात् तद्व्यतिरिक्तसर्वोपासकानामुत्तरमार्गस्य प्राप्तत्वादब्रह्मविदां पञ्चाग्निवित्प्रभृतीनामप्यर्चिरादिश्रवणात् एष पन्था ब्रह्मणो भानुवित्तस्तेनैति ब्रह्मवित्पुण्यकृत्तैजसश्चेति तैजसाख्यपञ्चाग्निवित्प्रभृतिपुण्यकृतां ब्रह्मविन्मार्गगमनदर्शनादयं वा य एषोऽग्निश्चित इत्यादि चित्याग्न्युपासनेष्वपि देवयानश्रवणाद्विद्ययैव तदारोहन्ति यत्र कामाः परागता इत्यन्ते ब्रह्मलोकप्राप्तिश्रवणाच्च सर्वोपासकानां देवयानप्राप्तौ सिद्धायां स एनानिति विशेषेणोक्तात् देवयानेन गतान्सर्वानमानवो ब्रह्म गमयतीति पूर्वपक्षं कृत्वा यावन्नाम्नो गतमित्यादि फलप्राप्तौ ब्रह्मलोकस्य देवयानापेक्षायां प्रमाणाभावान्न सर्वेषां देवयानप्राप्तिरिति सिद्धेःपञ्चाग्निवित् प्रभृतीनामब्रह्मविदामपि ब्रह्मलोकप्राप्ततया प्रमासिद्धानां लोकवासमात्रमेव, न तत्रत्यचतुर्मुखप्राप्तिः ब्रह्मविदामेव चतुर्मुखप्राप्ति एवमुभयथाभावे दोषाभावात्सर्वेषां ब्रह्मप्राप्तौ ब्रह्म-शब्दस्य कार्य्यवचनत्वे परवचनत्वे चोभयथाऽपि ब्रह्मविदामितरतुल्यफलत्वमितरेषां ब्रह्मवित्तुल्यफलत्वं चेति दोषप्रसङ्गात्, ततश्च तत्क्रतुन्यायविरोधात्, अतो देवयानेन ब्रह्मलोकगतेषु अब्रह्मविदो न ब्रह्म गमयति ब्रह्मविदस्तु गमयति अब्रह्मविदोऽपि तत्र लब्धज्ञानाश्चेत् क्रमेण मुच्यन्ते यथा पञ्चाग्निविदः यथा च चित्याग्निविद इति सिद्धान्तयन्ति अत्र ब्रूमः कार्ये ब्रह्म ब्रह्मलोकः चतुर्मुखः परं ब्रह्मेत्ययुक्तं तस्यापि सृज्यत्वश्रवणेनानपोदितेन कार्य्यब्रह्मान्तर्भावावगमात् न च तत्र ब्रह्मगुणानां ज्ञानानन्दैश्वर्य्यादीनां नित्याविर्भूतत्वात् परमात्मत्वं वेदापहारादिषु ज्ञानशक्त्यैश्वर्य्यादीनां परिमितत्वदर्शनात् योगाधीनभगवत्साक्षात्कारत्व—तदाहितसर्गशक्तित्वदर्शनादुभयभावनान्वयेनानुपास्यत्वावगमाच्च ब्रह्माविश्वः कतमः स्वयम्भूः प्रजापतिः संवत्सर इति संवत्सरोऽसावादित्यो य एष आदित्ये

पुरुषः स परमेष्ठी ब्रह्मात्मेत्यादिश्रुतयस्तु ब्रह्माण्डोदरवर्त्तितत्तद्विभूतिविशेषनिर्वाहकत्वाभिप्रायतया न निरङ्कुशैश्वर्य्ये प्रमाणं हिरण्यगर्भः समवर्त्ततेत्याद्यष्टत्वं त्वाकाशप्राणादिवाक्यतुल्यन्यायत्वादुपपत्त्यन्तरैश्च परमपुरुषपरमिति समर्थितम् अपरेषां प्रतिक्षेपे दर्शितैर्मानन्यायैर्देवयानमार्गस्य चतुर्मुखलोकप्राप्तिहेतुत्वमयुक्तमिति तच्च सिद्धान्तेऽनुमन्तव्यं ह्रदनदीवृक्षसंस्थानादियोगो न चतुर्मुखलोकत्वे प्रमाणं तनवकारसाम्निसप्तमो ब्रह्मलोक इत्युपक्रम्य उत परस्मात् उतापरस्मात्परस्तृतीयादथवा चतुर्थात्सहस्रस्थूणे विधृते दृढ उग्रे यत्र देवानामधिदेव आस्त इति चतुर्मुखलोकात्परतः परत्र सहस्रस्थूणाविशिष्टस्थानविशेषावगमात्, अतः सत्यलोकचतुर्मुखयोर्देवयानप्राप्यत्वपरब्रह्मत्वाभावात् चतुर्मुखलोके गुणाष्टकाविर्भाव आप्रलयान्मुक्तानां तत्रावस्थानं ततः परमाकाशप्राप्तिरित्यनुपपन्नम् । अनन्तरं चाब्रह्मविदोऽपि देवयानेन गच्छन्तीति न युक्तं स एनान् ब्रह्म गमयतीति देवयानगतानामविशेषेण ब्रह्मप्राप्तिश्रवणात् न पञ्चाग्निविदां ब्रह्मप्राप्तिश्रवणं स एनानिति वाक्यसंकोचकं तेषामब्रह्मवित्त्वे प्रमाणान्तराभावात् देवयानगतिश्रवणेनैव तत्रापि ब्रह्मवेदनस्य कल्प्यत्वात् चित्याग्निविदां प्रकरणे देवयानश्रवणं प्रासङ्गिकमहीननयात् परविद्याप्रकरणान्वयि स्यात् तेनेति ब्रह्मवित्पुण्यकृत्तैजसश्चेत्यत्र ब्रह्मविद एव पदान्तरविशेष्यत्वसंभवात् तदपि नाब्रह्मविदां देवयानगतौ प्रमाणं द्वे सृती अशृणवमित्यत्र द्वित्वावधारणमपि नास्मिन्नर्थे प्रमाणम् अथ ये यज्ञेन दानेनेति वाक्यस्य परविद्याव्यतिरिक्तश्रेयःप्रदर्शनार्थत्वसंभवात्, एवं सर्वत्र ब्रह्मवेदनकल्पनप्रकारकरणोत्कर्षसामानाधिकरण्यप्रदर्शनार्थत्वादिभिर्निर्वाहसंभवात् न काचिदपि श्रुतिरब्रह्मविदां देवयानगमने प्रमाणम्, अत एव देवयानगतान्सर्वान् वा न वेति चिन्ता निरवकाशा हिरण्यगर्भमेव परं ब्रह्म मन्वानस्य नाब्रह्मविदां परब्रह्मप्राप्तिः तत्र गुणाष्टकाविर्भावात् ब्रह्मसमानभोगः तत्र परब्रह्मप्राप्तानामपुनरावृत्तिरिति सर्वमिदमनुपपन्नम् । अब्रह्मविदां श्वेतमहाभीषकरैवतप्रभृतीनां ब्रह्मसभायामासिकाप्रतिपादनात्, क्षुत्पिपासाकामाद्यभिभवपुनर्जन्मप्रतिपा-

र्दनात् च, श्वेतादीनामब्रह्मविर्त्त्वं च पुनरावृत्त्यैव सिद्धम् । नन्वब्रह्मविदां देवयानेन परब्रह्मप्राप्तिरेव निवार्य्यते न तु परब्रह्मप्राप्तिमात्रम् अमानवेन नयनं देवयानगतब्रह्मविदामेव नान्येषाममानवनीतानामेव, अपुनरावृत्तिर्नान्येषां ब्रह्मप्राप्तानाम्, अतः सर्वमुपपन्नमिति नैवं नान्यः पन्था अयनाय विद्यत इति ब्रह्मविद्व्यतिरिक्तानां ब्रह्मप्राप्तिनिषेधात्, तत्राप्यब्रह्मविदां देवयानेन ब्रह्मप्राप्तिर्निषिध्यते न ब्रह्ममात्रमिति चेत् तर्ह्यब्रह्मवित्तयाऽभिमतानां पञ्चाग्निविदां देवयानगतिर्न स्यात् यद्युच्येत विशिष्टमिह निषेध्यमब्रह्मविदां देवयानविशिष्टब्रह्मप्राप्तिर्नास्ति तस्मादब्रह्मविदां ब्रह्मप्राप्तिविधुरदेवयानगतिर्देवयानगतिविधुरब्रह्मप्राप्तिश्चोपपद्यते इति तदयुक्तम् अयनायेत्येतावन्मात्रस्य श्रुतत्वात् देवयानेन ब्रह्मण इत्यध्याहारप्रसङ्गाच्च । ननु नाध्याहारापेक्षा अयनं वेदेवयानपूर्वकं ब्रह्मकर्मकं च विदितमिति चेन्न त्वया देवयानविधुरब्रह्मप्राप्तेर्ब्रह्मप्राप्तिविधुरदेवयानगतेश्चाभ्युपगतत्वात् । किञ्च अयन—शब्दस्य कस्सङ्कोचः येन विशिष्टायनविवक्षाऽऽश्रीयेत । अब्रह्मविदां देवयानगमनशास्त्रं ब्रह्मप्राप्तानां केषांचित्पुनरावृत्तिशास्त्रं चेति चेन्न तयोस्तद्विषयत्वेऽयन—शब्दसङ्कोचः तत् सङ्कोचे तयोस्तद्विषयत्वमित्यन्योन्याश्रयप्रसङ्गात्तस्मादस्मिन्मते श्रुत्यसङ्कोचः शास्त्रद्वयार्थवत्त्वं च तदेवोपपन्नमिति तावकः पक्षोऽनुपपन्नः । किञ्च सर्वैरितरैरधिकरणभेदो वर्णितः तदयुक्तं सूत्रकारशैलीविरोधात् अस्मिन्शास्त्रे सर्वत्र वादरायणकीर्त्तनस्य ऋष्यन्तरमतव्यावृत्तिविवक्षामूलत्वं तावत् दृश्यते, तदुपर्यपि वादरायणः सम्भवादित्यत्र कर्मकाण्डदेवताधिकरणप्रसिद्धजैमिनिमतात् वैषम्यविवक्षया वादरायणकीर्तनं दृष्टं मध्वादिष्वसम्भवादनधिकारं जैमिनिः, भावं तु वादरायणोऽस्ति हि, धर्मं जैमिनिः पूर्वं तु वादरायणः, शेषत्वात् पुरुषार्थवादो यथाऽन्येष्विति जैमिनिः, अधिकोपदेशात्तु वादरायणस्यैवं तद्दर्शनात् परामर्शं जैमिनिः, अनुष्ठेयं वादरायणः साम्यश्रुतेरित्यधिकरणेषु पूर्वसूत्रोपन्यस्तऋष्यन्तरमतव्यावृत्त्यर्थत्वं वादरायणकीर्त्तनस्य दृष्टं यत्र ऋष्यन्तरमतमङ्गीकृतं तत्र न वादरायणकीर्त्तनं दृष्टं यथा क्रतुस्मृते-

बादरिः सम्पत्तेरिति जैमिनिः सुकृतदुष्कृते एवेति तु बादरिः सुकृतदुष्कृते एवेति तु बादरिः, अवस्थितेरिति काशकृत्स्नः, तद्भूतस्य तु नातद्भावो जैमिनेरपि, आर्त्विज्यमित्यौडुलोमिरित्यादिषु ऋष्यन्तराणां मिथो विरुद्धेषु मतेषु चरमस्याङ्गीकारात् बादरायणमतस्य पृथक्कीर्तनाभावश्च दृष्टः प्रतिज्ञासिद्धेर्लिङ्गमाश्मरथ्यः अवस्थितेरिति काशकृत्स्नः, तदुपलक्षणार्थेति तु कार्ष्णाजिनिः, सुकृतदुष्कृते एवेति तु बादरिः, स्वामिनः फलश्रुतेरित्यात्रेयः, आर्त्विज्यमित्यौडुलोमिरित्यादिषु, सूत्रेषु, अतो बादरायणकीर्तनम् ऋष्यन्तरमतवैषम्यप्रदर्शनार्थम् उभय-शब्दश्चोपन्यस्ताकारद्वयपरो दृष्टः, उपपूर्वमपीत्येके, बहिस्तूभयथाऽपि, अभावं बादरिः, भावं जैमिनिर्द्वादशाहवदुभयविधमिति च, एवमुभयशब्दकीर्तितमतद्वयव्यावृत्त्यर्थत्वदर्शनात् बादरायणकीर्तनस्य ऋष्यन्तरमतवैषम्यप्रदर्शनार्थत्वात्, अत एव दोषशब्दस्य नञ्पूर्वकत्वायोगाच्च त्रिशिरस्कविचारास्पदैकार्थविषयत्वं कार्यं बादरिरित्यादिसूत्रसमुदायस्य स्वरसतः प्रतिपन्नमिति युक्तमैकाधिकरण्यम्, दर्शनाच्चेति सूत्रे तयोर्द्धमायन् तस्य तावदेवेति वाक्यमितरैरुदाहृतं ततोऽपि परं ज्योतिरुपसम्पद्येति वाक्योदाहरणं सफलम् अस्य वाक्यस्य साक्षान्मोक्षपरत्वसंप्रतिपत्त्या क्रमयुक्तिविषयत्वेन निर्वाहस्यानुपपन्नत्वादत्र च शरीरादुत्थानश्रवणेनार्चिरादिगतविषयत्वस्य दुरपन्हवत्वाच्च ॥ कार्याधिकरणं समाप्तम् ॥

इति श्रीहरितकुलतिलकवाग्विजयिसूनुना श्रीरङ्गराजदिव्याज्ञालब्धवेदव्यासापरनामधेयेन श्रीमद्वरदाचार्यपादसेवासमधिगतभगवद्रामानुजविरचितशारीरकमीमांसाभाष्यहृदयेन श्रीसुदर्शनसूरिणा विलिखितायां श्रुतप्रकाशिकायां चतुर्थाध्यायस्य तृतीयः पादः ॥ ३ ॥

—o—

श्रीमते रामानुजाय नमः ।

## अथ चतुर्थेऽध्याये चतुर्थः पाद आरभ्यते ।

संपद्याविर्भावाधिकरणम् ।

### सू० संपद्याविर्भावः स्वेन शब्दात् ॥ १ ॥

भू० परं ब्रह्मोपासीनानामात्मानञ्च प्रकृतिवियुक्तं ब्रह्मात्मकमुपासीनानामर्चिरादिना मार्गेणापुनरावृत्तिलक्षणा गतिरुक्ता, इदानीं मुक्तानामैश्वर्य्यप्रकारं चिन्तयितुमारभते—इदमाम्नायते "एवमेवैष संप्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यत" इति, किमस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसंपन्नस्य देवादिरूपवत्साध्येन रूपेण सम्बन्धोऽनेन वाक्येन प्रतिपाद्यते ?

टी० सू० सम्पद्याविर्भावः । स्वेन शब्दात् ॥ १ ॥ पादसङ्गतिमाह परं ब्रह्मेत्यादिना, विषयवाक्ये न च पुनरावर्त्तत इति श्रवणादपुनरावृत्तिलक्षणेत्युक्तं, किमस्माच्छरीरादित्यादिवाक्ये मुक्तस्य साध्येन रूपेण संबन्ध प्रतिपाद्यते? उत स्वाभाविकस्वरूपाविर्भावः ? किंत्र स्वरूपाविर्भावपरत्वे मोक्षशास्त्रस्य पुरुषार्थावबोधित्वं सम्भवति ? नेति किं स्वरूपस्य स्वतोऽपरिच्छिन्नानन्दत्वं सम्भवति ने? ति किमानन्दस्वरूपस्य तिरोधानं संभवति नेति, किमाविर्भावपरत्वेऽभिनिष्पत्तिशब्दवैयर्थ्यमस्ति नेति च यदा वैयर्थ्यं यदा च तिरोधानासम्भवेन स्वतोऽपरिच्छिन्नानन्दायोगात् शास्त्रस्य न पुरुषार्थपर्यवसानं तदा साध्येन रूपेण संबन्धः प्रतिपाद्यः स्यात्, यदा नाभिनिष्पत्तिव्यपदेशवैयर्थ्यं यदा च तिरोधानसम्भवेन स्वतोऽपरिच्छिन्नानन्दत्वोपपत्तेः मोक्षशास्त्रस्य पुरुषार्थपर्यवसानं तदा स्वाभाविकस्वरूपाविर्भावः प्रतिपाद्यः स्यात्, रूपेण—आकारेण, न च दुःखनि-

वृत्तिमात्रं परं ज्योतिरुपसम्पन्नस्य पुरुषार्थं इति, अत्रायं भावः दुःखनिवृत्तिमात्रं मोक्षश्चेत्संसारनिर्विशेषः स्यात्पुरुषार्थापुरुषार्थमिश्रत्वात् दुःखनि-

भू० उत स्वाभाविकस्य स्वरूपस्याविर्भाव? इति संशये साध्येन रूपेण संबन्ध इति युक्तम्, अन्यथा ह्यपुरुषार्थाववबोधित्वं मोक्षशास्त्रस्य स्यात्स्वरूपस्य स्वतोऽपुरुषार्थत्वदर्शनात्, न हि सुषुप्तौ देहेन्द्रियव्यापारेषु उपरतेषु केवलस्यात्मस्वरूपस्य पुरुषार्थसम्बन्धो दृश्यते, न च दुःखनिवृत्तिमात्रं परं ज्योतिरुपसम्पन्नस्य पुरुषार्थः, येन स्वरूपाविर्भाव एव मोक्ष इत्युच्येत स एको ब्रह्मण आनन्दः श्रोत्रियस्य चाकामहतस्य रसं ह्येवायं लब्ध्वाऽऽनन्दी भवतीत्यादिभ्योमुक्तस्य सुखानन्त्यश्रवणात्, न चापरिच्छिन्नानन्दरूपचैतन्यमेवास्य स्वरूपं, तच्च संसारदशायामविद्यातिरोहितं परं ज्योतिरुपसम्पन्नस्याविर्भवतीति शक्यं वक्तुं, ज्ञानस्वरूपस्य तिरोधानासम्भवात् प्रकाशपर्यायस्य ज्ञानस्य तिरोधानं तद्विनाश एवेति हि पूर्वमेवोक्तम् ॥

टी० वृत्तिः सुखप्राप्तिश्चेष्टे दृष्टे सुखानिवृत्तिर्दुःखप्राप्तिश्चानिष्टे दृष्टे, तत्र दुःखनिवृत्तेरिष्टत्वात्सुखनिवृत्तेरनिष्टत्वादिष्टानिष्टमिश्रो मोक्षः संसारतुल्य इति, तस्मात्पुरुषार्थापुरुषार्थमिश्रो न मोक्ष एवेति स्वरूपभूतस्यैवापरिच्छिन्नस्यानन्दस्य तिरोधाननिवृत्तौ तथात्वं प्रकाशत इति श्रुत्यर्थं इत्यत्राह—

भू० न च प्रकाशमात्रस्यानन्दता सम्भवति सुखस्वरूपता ह्यानन्दस्वरूपता, सुखस्वरूपत्वं चात्मनोऽनुकूलत्वं

प्रकाशमात्रात्मवादिनः कस्य प्रकाशोऽनुकूलवेदनीयो भवेदिति प्रकाशमात्रात्मवादिनः कथञ्चिदप्यानन्दस्वरूपता दुरुपपादा, स्वरूपापत्तिमात्रे च साध्ये स्वरूपस्य नित्यनिष्पन्नत्वादुपसम्पन्नस्य स्वेन रूपेणाभिनिष्पद्यत इति वचनमनर्थकं स्यात्, अतोऽपूर्वेण साध्येन रूपेण संबध्यते, एवं चाभिनिष्पद्यत इति वचनं मुख्यार्थमेव भवति स्वेन रूपेणेत्यप्यानन्दैकान्तेन स्वासाधारणेनाभिनिष्पद्यत इति सङ्गच्छते इत्येवं प्राप्तेऽभिधीयते सम्पद्याविर्भाव इति, अयं प्रत्यगात्मार्चिरादिना परं ज्योतिरुपसम्पद्य यं दशाविशेषमापद्यते स स्वरूपाविर्भावरूपः, नापूर्वाकारोत्पत्तिरूपः, कुतः स्वेन शब्दात्स्वेन रूपेणेति विशेषणोपादानादित्यर्थः । आगन्तुक[1]देहपरिग्रहे हि स्वेन रूपेणेति विशेषणमनर्थकं स्यात ॥

टी० "न चे"ति, तदुपपादयति "ज्ञानस्वरूपस्ये"ति, तिरोधानतन्निवृत्त्योः सम्भवेऽपि पुरुषार्थरूपत्वं स्वरूपस्य प्रतिक्षिपति "न च प्रकाशे"ति, कस्येति अनुकूलत्वं नाम सप्रतियोगिको धर्मविशेषः प्रकाशवदित्यर्थः अन्यथाऽनुकूलत्वमेव न स्यादिति भावः । न केवलं तर्कविरोधः श्रुतिविरोधश्चेत्याह "स्वरूपापत्ती"ति, अनर्थकं स्यात् अभिनिष्पत्तिशब्दानर्थक्यमित्यर्थः । स्वेन-शब्दः कथमित्यत्राह 'स्वेने'ति, स्व-शब्दोऽसाधारण्यपरः, न त्वसाध्यत्वपरः अभिनिष्पत्तिवचनात्स्वरूपेणाभिनिष्पद्यते रूपविशिष्टतया साध्यत इति रूपं साध्यमित्यर्थः एवं चेति स्व-शब्दाभिनिष्पत्तिशब्दावुभावपि मुख्यावित्यर्थः । राद्धान्तं वक्तुं सूत्रमुपादत्ते "सम्पद्ये"ति, यं दशाविशेषमिति दशावस्था ज्ञानविकासस्य काल-

१ आगन्तुकविशेषपरिग्रहे हीति पा० ।

विशेषाऽभावादवस्थात्वं ज्ञानस्य विकासाहेत्वात्स्वाभाविकत्वं स्वेन रूपेणेति विशेषणमनर्थकं स्यादिति कथमानर्थक्यं स्वासाधारण्य मुक्त-मित्यत्राह—

सू० अविशेषणेऽपि तस्य स्वकीयरूपत्वसिद्धेः । यत्तूक्तं स्वरूपस्य नित्यप्राप्तत्वादुपसंपद्याभिनिष्पद्यत इति वचनमनर्थकमिति तत्रोत्तरम्—

सू० मुक्तः प्रतिज्ञानात् ॥ २ ॥

कर्मसम्बन्धतत्कृतदेहादिविनिर्मुक्तः स्वाभाविकेन रूपेणावस्थितोऽत्र स्वेन रूपेणाभिनिष्पद्यत इत्युच्यते अतो नित्यप्राप्तस्यापि स्वरूपस्य कर्मरूपाविद्यातिरोहितस्य तिरोधाननिवृत्तिरत्राभिनिष्पत्तिरुच्यते, कुतः प्रतिज्ञानात्सा हि प्रतिपाद्यतया प्रतिज्ञाता, कुत इदमवगम्यते, य आत्मेति प्रकृतं प्रत्यगात्मानं जागरिताद्यवस्थात्रितयविनिर्मुक्तं प्रियाप्रियहेतुभूतकर्मारब्धशरीरविनिर्मुक्तं च प्रतिपादयितुम् ॥

टी० "अविशेषणेऽपी"ति, परं ज्योतिरुपसम्पद्याभिनिष्पद्यत इत्येतत्सम्बन्धादेव तदसाधारणत्वं सिद्धं न ह्यन्यस्य रूपेणान्यो निष्पद्यते अतस्तत्सम्बन्धादेव तदसाधारण्यं सिद्धमिति स्वेन पदमनर्थकं स्यादित्यर्थः । उत्तरसूत्रशङ्कामाह "यत्तूक्त"मिति, सू० मुक्तः प्रतिज्ञानात् ॥ २ ॥ मुक्त इति प्रतिज्ञाखण्ड व्याचष्टे "कर्मे"ति, ततः किमित्यत्राह "अत"-इति, पूर्वमसिद्धायास्तिरोधाननिवृत्तेर्वाचकत्वादभिनिष्पत्ति-शब्दो नानर्थक इत्यर्थः । प्रतिज्ञानादिति हेतुं व्याचष्टे "सा ही"ति, सा तिरोधाननिवृत्तिः, निवृत्ततिरोधानं स्वरूपं प्रतिज्ञातमिति भावः तया प्रतिज्ञातमिति कथमवगतम् इत्यत्राह "कुत इद"मिति, य आत्मेत्यादि

जाग्रदाद्यवस्थासूच्यमानासु प्रत्यवस्थम् एतं त्वेव ते भूयोऽनुव्याख्यास्यामीत्युक्तं, तत्र एतं त्वेव तेऽनुव्याख्यास्यामीति प्रतिपर्यायमुक्तैतच्छब्दस्य प्रकृतपरामर्शित्वाद्य आत्मेत्यादिना प्रकृतस्यापहतपाप्मत्वादिगुणकत्वादपहतपाप्मत्वादीनां च जाग्रदाद्यवस्थास्वसम्भवात् गुणाष्टकयुक्तं स्वाभाविकरूपकथनमेव प्रतिज्ञातुं श्रोतुराशयपरीक्षार्थं जाग्रदादिकथनन्तस्माद्

भा० एतं त्वेव ते भूयोऽनुव्याख्यास्यामीति पुनः पुनरुक्त्वा एवमेवैष सम्प्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यत इत्यभिधानात्, अतः कर्मणा संबद्धस्य परं ज्योतिरुपसंपद्य बन्धनिवृत्तिरूपा विनिर्मुक्तिः स्वेन रूपेणाभिनिष्पद्यत इत्युच्यते, स्वरूपाविर्भावेऽप्यभिनिष्पत्ति-शब्दो दृश्यते युक्त्याऽयमर्थो निष्पद्यत इत्यादिषु, यद्योक्तम् आत्मस्वरूपस्य सुषुप्तावपुरुषार्थत्वदर्शनात् स्वरूपाविर्भावे मोक्षशास्त्रस्यापुरुषार्थावबोधित्वं स्यादिति कृत्वा देवाद्यवस्थावत्सुखसम्बन्ध्यवस्थान्तरप्राप्तिरभिनिष्पत्तिरिति, तत्रोत्तरम्–

टी० व्याख्यास्यामीत्युक्तं व्याख्यातव्यरूपं स्वाभाविकमेवेत्यर्थः ततः किमित्यत्राह "अतः कर्मणे"ति, अभिनिष्पत्ति-शब्दः कथं वाचक इत्यत्राह "स्वरूपाविर्भावेपी"ति, निष्पद्यत इत्यादिष्विति आदि-शब्देन विचार्य्य च पुनःपुनः इदमेकं सुनिष्पन्नमित्यादिप्रयोगो विवक्षितः एवमयमर्थः साध्यत इति सिद्धिपर्यायत्वेन प्रयुज्यमानोऽभिनिर्वृत्ति-शब्द आविर्भावस्यापि वाचक इत्यर्थः । उत्तरसूत्रशङ्कामाह "यच्चोक्त"मिति,

## सू० आत्मा प्रकरणात् ॥ २ ॥

भा० स्वरूपेणैवायमात्माऽपहतपाप्मत्वादिसत्यसङ्कल्पत्वपर्यन्त-

गुणक इति प्रकरणादवगम्यते य आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसङ्कल्प इति हि प्रजापतिवाक्यप्रक्रमः, इदं च प्रकरणं प्रत्यगात्मविषयमित्युत्तराच्चेदाविर्भूतस्वरूपस्त्वित्यत्र प्रतिपादितम्, अतोऽपहतपाप्मत्वादिस्वरूप एवायमात्मा संसारदशायां कर्माख्ययाऽविद्यया तिरोहितस्वरूपः परं ज्योतिरुपसंपद्याविर्भूतस्वरूपो भवति, अतः प्रत्यगात्मनोऽपहतपाप्मत्वा.यः स्वाभाविका गुणाः परं ज्योतिरुपसम्पन्नस्याविर्भवन्ति नोत्पद्यन्ते, यथोक्तं भगवता शौनकेनापि—

टी० सू० आत्मा प्रकरणात् ॥ ३ ॥ परमात्मविषयं हीदं वाक्यमित्यत्राह "इदं चे"ति, स्वाभाविकत्वे सर्वदोपलभ्येरन्निमे गुणा इत्यत्राह "अत"इति, आनन्दश्चेदौपाधिकाकारसम्बन्धनिबन्धनो न भवति संसारदशायां स्वाभाविकानन्दस्य तिरोहितत्वादौपाधिकरूपसम्बन्धसापेक्ष आनन्दयोगो भवति, अत एव सुषुप्तौ चानन्दायोगो न त्वानन्दस्यौपाधिकाकारहेतुत्वस्वाभाव्यात् तिरोधाननिवृत्तौ स्वाभाविक एवानन्द आविर्भवतीति स्वरूपाविर्भावपरत्वे मोक्षशास्त्रस्य नापुरुषार्थावबोधित्वमित्यर्थः । परे चापरे च परं ज्योतिरिति ज्योतिःशब्दस्य भौतिकपरत्वशङ्कायामात्मविषयत्वप्रतिपादकमात्मा प्रकरणादिति सूत्रं व्याचक्षते तदयुक्तम् अस्माभिर्दहराधिकरणे निर्णीतत्वात्तैश्च ज्योतिर्दर्शनादित्यत्र समर्थितत्वाच्च भौतिकविषयत्वशङ्काऽनुदयादधिकशङ्काहेत्वभावाच्च अतोऽपुरुषार्थत्वपरिहारपरत्वं युक्तम् । अनध्याहारे सूत्रवैयर्थ्यात् तत्परिहारार्थोऽध्याहारो न दोषाय अपि तु गुणायैव तस्मिंश्च न्याये सत्यात्मसम्बन्धितया श्रुतगुणाविपदाध्याहारो न्याय्यः कः पुनर्विशेषः पूर्वावस्थात इति शङ्कायां द्वितीयसूत्रमवतारयन्ति, तत्र परे प्रष्टव्याः किं

काल्पनिकाकारनिवृत्तिः स्वरूपं वा तदतिरिक्तं वेति, आद्ये मोक्षोपायवैयर्थ्यं, द्वितीये निवृत्तिर्बाध्या वा न बाध्या चेत् अपुनरावृत्तिश्रुतिविरोधः, अबाध्या चेत् परमार्थविशेषवत्त्व निवृत्तिर्जडा वा न वा जडा चेदजडस्य

भू० "यथा न क्रियते ज्योत्स्ना मलप्रक्षालनान्मणेः ॥ दोषप्रहाणान्न ज्ञानमात्मनः क्रियते तथा ॥ यथोदपानकरणात् क्रियते न जलाम्बरम् । सदेव नीयते व्यक्तिमसतः सम्भवः कुतः ॥ तथा हेयगुणध्वंसादवबोधादयो गुणाः । प्रकाश्यन्ते न जन्यन्ते नित्या एवात्मनो हि ते" इति, अतोज्ञानानन्दादिगुणानां कर्मणाऽऽत्मनि संकुचितानां परं ज्योतिरुपसंपद्य कर्मरूपबन्धक्षये विकासरूपाविर्भावो नानुपपन्न इति सुष्ठूक्तं संपद्याविर्भाव इति ॥ संपद्याविर्भावाधिकरणं समाप्तम् ॥

टी० जडधर्मत्वं स्यात् ततश्च भवद्भिरुक्ता एव दोषाः स्युः विजातीयनानात्वञ्च स्यात् अजडा चेत्सजातीयनानात्वं स्यात्सा च निवृत्तिः कस्मै प्रकाशते, यदि ब्रह्मणः तदयुक्तं स्वानुभवस्वभावस्याविद्यया विनाऽप्यन्यानुभवरूपत्वविरोधात् । यदि स्वस्मै तदा प्रत्यगर्थद्वयप्रसङ्गः । अन्ये तु परं ज्योतिरुपसम्पन्नस्य जक्षणादिश्रवणात् विलक्षणसंसारिकफलप्राप्त्योऽयं मुक्त इति पूर्वपक्षं कृत्वा मुक्तात्मप्रतिपादनप्रतिज्ञानात् जक्षणादेः साङ्कल्पिकत्वोपगतेश्च सिद्धान्तपरमधिकरणान्तरं द्वितीयसूत्रं व्याचक्षते तदयुक्तं सङ्कल्पादेव तच्छ्रुतेरित्यत्र पितृलोकादिसृष्टेः सत्यसङ्कल्पमूलतया उपपादयिष्यमाणत्वात् । अत्र वक्तव्याभावादश्लिष्टविनष्टोत्तरपूर्वाघत्वात्सांपराये विधूतकर्मत्वाच्च परं ज्योतिरुपसंपन्नस्य संसारित्वशङ्काऽनुदयात्, अभिनिष्पन्नरूपं किमपहतपाप्मत्वादिविशिष्टस्वरूपम्? उत जक्षणादिनिष्पादनशक्ति? रिति विचारे पूर्वकर्मसंबन्धभाजः पाप्मप्रागभावप्रध्वंसात्यन्ताभावरूपापहतपाप्मत्वा-

व्यपेगात्तदाविर्भावानुपपत्तेः, जक्षणादिशक्तिरिति पूर्वपक्षं कृत्वा पुण्यपापहेतुभूतव्यापारचिरघृतदेहेन्द्रियलोकादिहेतुषु सत्स्वपि पापजरात्सुत्पत्तिप्रतिबन्धशक्तेर्नित्यायाः प्राक्तिरोभूताया आविर्भावोपपत्तेर्जक्षणादिशक्तेरपि सत्यसंकल्पत्वान्तर्भावाच्चापहतपाप्मत्वादिलक्षणं स्वरूपमिति सिद्धान्तपरमधिकरणान्तरं तृतीयं सूत्रं व्याचक्षते तदयुक्तम्—अपहतपाप्मत्वादिलक्षणं स्वरूपमिति व्यवस्थापिते सति ब्राह्मेण जैमिनिरित्यधिकरणस्यानुत्थानप्रसङ्गात्, अतोऽपुरुषार्थाभिनिष्पत्तिवचनवैयर्थ्यशङ्कापरिहारपरत्वमेव सूत्रद्वयस्य न्याय्यम् । संपद्याविर्भावाधिकरणं समाप्तम् ॥

अविभागेन दृष्टत्वाधिकरणम् ।

## सू० अविभागेन दृष्टत्वात् ॥ ४ ॥

भा० किमयं परं ज्योतिरुपसंपन्नः सर्वबन्धविनिर्मुक्तः प्रत्यगात्मा स्वात्मानं परमात्मनः पृथग्भूतमनुभवति? उत तत्प्रकारतया तदविभक्त? मिति विशये सोऽश्नुते सर्वान्कामान्सह ब्रह्मणा विपश्चिता यदा पश्यः पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिं तदा विद्वान्पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः । सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्तीत्यादिश्रुतिस्मृतिभ्यो मुक्तस्य परेण साहित्यसाम्यसाधर्म्यावगमात् पृथग्भूतमनुभवतीति प्राप्ते उच्यते ।

टी० सू० अविभागेन दृष्टत्वात् ॥ ४ ॥ अवान्तरसङ्गतिः स्पष्टा मुक्तः किमात्मानं परमात्मनः पृथग्भूतमनुभवति ? उत तत्प्रकारतया तदविभक्तं ? किं साहित्यसाम्यसाधर्म्यवचनान्यविभागेनानुभवे विरुध्यन्ते ने ? ति किं प्रकारभूतस्यैव साहित्यादिकमुपपन्नं ने ? ति न चेत्तद्वचनविरोधात्पृथग्भावेनानुभवः, उपपन्नं चेत्तद्वचनाविरोधादविभागेनानुभवः, यथाऽवस्थितस्योपास्यत्वे यथोपासनभावित्वे च फलस्य स्थिते कथं पूर्वपक्षोत्थानमिति

शङ्कायां सहश्रुतिसाम्यश्रुतिसाधर्म्यस्मृतीनां बलात्तत्क्रतुन्यायोऽपोदित इत्यभिप्रायेण पूर्वपक्षमाह "सह ब्रह्मणे"ति, श्रुतेर्भोक्तृसाहित्यपरत्वं पूर्वपक्षिणोमतं साम्यसाधर्म्यशब्दौ नार्थभेदविवक्षया प्रयुक्तौ अपि तूदाहृतश्रुतिस्मृतिवचनस्थत्वात् प्रयुक्तौ साम्यस्य पारम्ये सति प्रकारप्रकारिभावादिलक्षणवैषम्यं बद्धावस्थायामेवेति पूर्वपक्षिणोऽभिप्रायः ॥

सू० "अविभागेने"ति, परस्माद् ब्रह्मणः स्वात्मानमविभागेनानुभवति मुक्तः, कुतः दृष्टत्वात् परं ब्रह्मोपसम्पद्य निवृत्ताविद्यातिरोधानस्य याथातथ्येन स्वात्मनो दृष्टत्वात् स्वात्मनः स्वरूपं हि तत्त्वमस्ययमात्मा ब्रह्म ऐतदात्म्यमिदं सर्वं सर्वं खल्विदं ब्रह्मेत्यादिसामानाधिकरण्यनिर्देशैर्य आत्मनि तिष्ठन्नात्मनोऽन्तरो यमात्मा न वेद यस्यात्मा शरीरं य आत्मानमन्तरो यमयति स त आत्माऽन्तर्याम्यमृतः। अन्तः प्रविष्टः शास्ता जनानां स त आत्मा इत्यादिभिश्च परमात्मात्मकं तच्छरीरतया तत्प्रकारभूतमिति प्रतिपादितम् ॥

टी० अविभागेनेतीति याथातथ्येन स्वरूपं दृष्टमस्तु ततः किमित्यत्राह 'स्वात्मनः स्वरूपं ही"ति, स्वरूपैक्यव्यावृत्त्यर्थमाह "य आत्मनी"ति, अहं ब्रह्मास्मीत्येवानुभवतीति अहमर्थस्य तत्पर्यन्तत्वेन तद्बुद्धिशब्दयोश्च तत्पर्यन्तात्वात्तथात्वेनानुभवतीत्यर्थः । न कश्चिद्विरोधः सहश्रुतेर्भोग्यसाहित्यपरत्वात् भोग्यसाहित्यस्य ब्रह्मपर्यन्तत्वेऽपि सम्भवात्तत्पर्यन्तत्वेनानुभवनेन विरोध इत्यर्थः। उक्तप्रकार एवाविभागः न तु स्वरूपैक्यमविभागः । तथा सति पूर्वापरवैघट्यादित्याह–

सू० अवस्थितेरिति काशकृत्स्न इत्यत्र, अतो ऽविभागेनाहं ब्रह्मास्मीत्येवानुभवति, साम्यसाधर्म्यव्यपदेशो ब्रह्मप्रका-

रभूतस्यैव प्रत्यगात्मनः स्वरूपं तत्सममिति देवादिप्राकृतरूपप्रहाणेन ब्रह्मसमानगुणत्वं प्रतिपादयन्ति सह श्रुतिस्त्वेवं भूतस्य प्रत्यगात्मनः प्रकारिणा ब्रह्मणा सह तद्गुणानुभवं प्रतिपादयन्तीति न कश्चिद्विरोधः । ब्रह्मप्रकारतया तदविभागोक्तेर्हि सङ्कल्पादेव तच्छ्रुतेरित्यादि न विरुध्यते ।

टी० "ब्रह्मप्रकारतये"ति, परे त्वत्र स तत्र पर्येतीत्यधिकरणाधिकर्त्तव्यभावेनोपसम्पत्तौ कर्मकर्तृभावेन च भेदं पूर्वपक्षं कृत्वा तत्त्वमसीत्यादिवाक्यैः परमात्मनो दृष्टत्वाद्यथादर्शनं फलत्वान्नदीसमुद्रनिदर्शनादिभिश्चाविभागं सिद्धान्तयन्ति स्वे महिम्नि प्रतिष्ठित इतिवत्स तत्र पर्येति इत्यादीनामर्थः अस्मिन्पक्षे परविद्याप्रकरणस्थानां मुक्तौ भेदश्रुतीनां गुणानुभवश्रुतीनां चामुख्यार्थत्वमिति तासामभेदश्रुतीनाञ्च मुख्यार्थत्वानुगुणः एव प्रयत्नः । भेदश्रुत्यमुख्यार्थत्वदोषोऽपरेषामपि समानः । औपाधिकनामरूपप्रहाणेन संश्लेषे दृष्टान्तो नदीसमुद्रघटकरकाकाशादिरिति सर्वमुपपन्नम् । अन्ये तु सह ब्रह्मणा यथोदकं शुद्धे शुद्धमासिक्तं तादृगेवेत्यत्र तादृक्त्वमुक्तं न तु तद्भावः, सर्वेष्वात्मस्ववस्थमत्तीत्यादिभेदव्यपदेशात् मुक्तस्य स्वपरविज्ञानवत्तया स्वापप्रलययोरिव विभागशक्तिमत्तया निर्वाहायोगात् शुकस्सर्वगतो भूत्वा सर्वात्मा सर्वतो मुखः । प्रत्यभावत धर्मात्मा

सू० अधिकं तु भेदनिर्देशादधिकोपदेशादित्यादि च ॥ अविभागेन दृष्टत्वाधिकरणं समाप्तम् ॥

भोःशब्देनानुवादयन्निति सर्वात्मभूतस्यापि सम्भाषणादिदर्शनात् वेदान्तेषु य एवं वेदाहं ब्रह्मास्मीति स इदं सर्वं भवतीत्याम्नातोमुक्तस्य सर्वात्मभावः संश्लेषमात्रमिति पूर्वपक्षं कृत्वा भोक्तृभोग्येश्वर्यैर्जले जलवत्क्षीरे नीरवच्चाविभागं गच्छति नामरूपविलयप्रतिपादनसामानाधिकरण्याभ्यां परे व्यये सर्व एकी भवन्तीत्यादिश्रुतेश्च शक्तिभेदस्य

विद्यमानत्व द्वैदवाद्या अविरुद्धाः, अविभागापत्तावपि स्वपरसम्बोध उपपन्नः सुषुप्ताविव करणाधीनज्ञानत्वे सत्युपरतकरणत्वाभावात्, अतः स्थित एव सर्वात्मभावे शरीरभेदेन विहर्तुमिच्छति चेद्विहरतीति सिद्धान्तयन्ति अस्मिन्पूर्वपक्षात्सिद्धान्तस्य शब्दमात्रेण भेदः । न त्वर्थतः स्वपरसम्बोधविभागस्यानपगमात्तत्कार्यसम्बोधस्य पृथग्व्यवहाराणां च विद्यमानत्वात्कदाचिदसम्बोधेनापि तिष्ठतीति चेत्तदयुक्तं करणानपेक्षज्ञानस्य सङ्कोचकाभावात्, यद्यप्यसम्बोधः तथाऽपि सुषुप्तात्मनां परस्परैक्याभावात्तद्वदविभागः देहाद्युपाधिसम्बन्धाच्च परस्परैक्यमिति चेत्तर्हि सूक्ष्माचित्त्वादिव भेदो दुपह्नवः, अचितः शक्तिमात्रशेषत्वाभावाच्चानावस्थत्वात् तस्माद्भेद इति चेत्तर्हि निःसम्बोधेऽपि तस्मिन्नीश्वरात्सर्वज्ञाद्भेदः स्यादेव अन्यतरशिरसि भेदकधर्मस्य विद्यमानत्वात् । किञ्च यद्ययुतसिद्धिरविभागः अस्मत्सिद्धान्ताभ्युपगमः स्यात् न ह्यध्यस्तभेदनिवृत्तिः, ब्रह्माज्ञानपक्षप्रसङ्गात्, नाप्यौपाधिकभेदनिवृत्तिः भास्करमतादविशेषापात्तात् नाप्येकसमुदायान्तर्भावः, देवदत्तस्य परिषत्सामानाधिकरण्यवत् स इदं सर्वमिति सामानाधिकरण्यस्य मुख्यत्वायोगात्, नापि सर्वथा भेदनिवृत्तिः शक्तितो भेदस्याभ्युपगमात्, विभागशक्तिव्यतिरिक्तभेदाभाव इति चेत् किं तदा विभागो नास्ति किंतु विभागशक्तिरेवेति मतं तच्च अणुत्वस्य स्थितत्वात् अणुत्वं त्यक्तव्व वा त्यक्तं चेत्सर्षपघटमहीधरादीनामिव स्वरूपगतपरिमाणविरहेण लयाभ्युपगमे स्वरूपानित्यत्वमेव स्यात् । न चेत्तद्विभागशक्तिव्यतिरेकभेदस्य स्थितौ नाविभागः । किञ्च विभागशक्तिव्यतिरिक्तनित्यभेदानभ्युपगमे विभागशक्त्या कदाचिदात्मानं विभज्य विहरन्मुक्तः किं पूर्वमुक्त एवात्मा वा रामकृष्णादिवत्परमात्मैकदेशो वेति विशये सतीदानीमुद्भूतशीकरस्य पूर्वप्रलीनशीकरांशानन्यत्वनिश्चयस्येव देवदत्तात्मानन्यत्वनिश्चयस्य दुष्करत्वान्मुक्तेश्वरांशसंकरः स्यात् ततश्च कदाचिन्मुक्तस्यापि जगद्व्यापारसम्भवः स्यात्, ईश्वरः सर्वज्ञत्वाच्छक्तिमात्रावशेषमपि मुक्तमसङ्कीर्णं जानातीति न जगद्व्यापारप्रसङ्ग इति चेत् तर्ह्यसङ्कीर्णतया ज्ञानं भेदकाकारेण विना स्वरूपभेदेन वा विनाऽनुपपन्नमिति विभागशक्तिव्यति-

रिक्तभेदाऽभावरूपाविभागोऽनुपपन्नः । भोक्तृभोग्येश्वराणां विरुद्धस्वभावत्वाच्च मुक्तस्य तैरविभागोऽप्यनुपपन्नः । अतः पूर्वपक्षाद्विशेषसिद्धिर्दुरुपपादा । अविभागेन दृष्टत्वाधिकरणं समाप्तम् ॥

ब्राह्माधिकरणम् ॥

**सू० ब्राह्मेण जैमिनिरुपन्यासादिभ्यः ॥ ५ ॥**

भा० प्रत्यगात्मनः परं ज्योतिरुपसंपद्य निवृत्ततिरोधानस्य स्वरूपाविर्भाव एवेत्युक्तं, तच्च येन स्वरूपेणायमात्माऽऽविर्भवति तत्स्वरूपं श्रुतिवैविध्याद्विचार्यते – किमपहतपाप्मत्वादिकमेवास्य स्वरूपमिति तेन रूपेणायमाविर्भवति? उत विज्ञानमात्रमेवेति तेन रूपेण? अथोभयोरविरोध इत्युभयस्वरूपेणेति? किं तावत्प्राप्तं ब्राह्मेणेति जैमिनिराचार्यो मन्यते, ब्राह्मेणापहतपाप्मत्वादिनेत्यर्थः । अपहतपाप्मत्वादयो हि दहरवाक्ये ब्रह्मसम्बन्धितया श्रुताः ब्राह्मेणेति कुतोऽवगम्यते उपन्यासादिभ्यः, उपन्यस्यन्ते हि ब्रह्मगुणाः अपहतपाप्मत्वादयः प्रत्यगात्मनोऽपि प्रजापतिवाक्ये "य आत्माऽपहतपाप्मेत्यादिना सत्यसङ्कल्प इत्यन्तेन, आदि-शब्देन सत्यसङ्कल्पत्वादिगुणायत्ता जक्षणादयः, जक्षत्क्रीडन् रममाण इत्यादिवाक्यावगता व्यवहारा गृह्यन्ते, अत एभ्य उपन्यासादिभ्यः प्रत्यगात्मनो विज्ञानमात्रस्वरूपत्वं न सम्भवतीति जैमिनेर्मतम् ॥

टी० सू० ब्राह्मेण जैमिनिरुपन्यासादिभ्यः ॥ ५ ॥ अवान्तरसङ्गतिमाह "प्रत्यगात्मन"इति प्रथमाधिकरणेन सङ्गतिरित्यर्थः अपहतपाप्मत्वादिकमेवेत्येवकारेण स्वप्रकाशत्वव्यावृत्तिः, विज्ञानमात्रमेवेति

मात्र-शब्देनांशतो जाड्यव्युदासः एवकारेण गुणाष्टकव्युदासः, किं गुणाष्टकविशिष्टमेवास्य स्वरूपम्? उत विज्ञानमात्रमेव उतोभयं स्वरूपं किं गुणाष्टकवैशिष्ट्यज्ञानमात्रस्वरूपत्वविषयश्रुत्योः प्राबल्यदौर्बल्यविभागो युज्यते नेति? तयोः किमविरोधः सम्भवति नेति विज्ञानघन एवेत्यवधारणं किं गुणान्तरं व्यावर्त्तयितुं शक्नोति नेति? यदाऽवधारणं गुणान्तरव्यावर्त्तनक्षमन्तदानीमविरोधासम्भवेन प्राबल्यदौर्बल्यविभागाश्रयणस्य न्याय्यत्वाद्बाधितद्वयपत्तापेतयाऽन्यतरस्वरूपत्वसिद्धिः, यदा न व्यावर्त्तनक्षमं तदा विरोधाभावेन प्राबल्यदौर्बल्यविभागाश्रयणान्याय्युक्तत्वादुभयस्वरूपत्वम् अपहतपाप्मत्वादेः कथं ब्राह्मत्वमित्यत्राह "अपहतपाप्मत्वादयो ही"ति, व्यवहाराः-प्रवृत्तयः न सम्भवतीति, स्वरूपं जडं ज्ञानत्वे ज्ञानाद्याश्रयत्वायोगादिति भावः ॥

## सू० चितितन्मात्रेण तदात्मकत्वा-दित्यौडुलोमिः ॥ ६ ॥

सू० चैतन्यमात्रमेवास्यात्मनः स्वरूपमिति तेन रूपेणाविर्भवतीत्यौडुलोमिराचार्य्यो मन्यते, कुतः, तदात्मकत्वात्तावन्मात्रात्मकत्वादस्य प्रत्यगात्मनः, "स यथा सैन्धवघनोऽनन्तरोऽबाह्यः कृत्स्नो रसघन एव एवं वा अरेऽयमात्मानन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघन एव विज्ञानघन एवेत्यवधारणाद्विज्ञानमात्रमेवास्य स्वरूपमित्यवगम्यते, अतोऽस्य गुणान्तराभावादपहतपाप्मेत्यादयः शब्दाः विकारसुखदुःखाद्यविद्यात्मकधर्मव्यावृत्तिपरा इति चितितन्मात्ररूपेणाविर्भाव इत्यौडुलोमेर्मतं, । सम्प्रति भगवान्बादरायणः स्वमतेन सिद्धान्तमाह-



टी० सू० चितितन्मात्रेण तदात्मकत्वादित्यौडुलोमिः ॥ ६ ॥ तेनेति सूत्रे भाष्ये च तृतीयान्तनिर्देशः औपचारिकः, विकारसुखदुःखादीनि आदि-शब्दादुपेक्षाग्रहणं विजर इत्यादिपदानि निर्विकारत्वपराणि विशोको निर्दुःखः सत्यकामः सत्यमकादाचित्कं सुखमस्येति सत्यकामपदं कादाचित्सुखराहित्यपरं न तु नित्यसुखत्वपरं सत्यसंकल्पः उपेक्षारहितः न ह्युपेक्षकः सत्यसंकल्पः मोघेन संकल्पेन रहित इति वा पूर्वपक्षार्थः ॥

## सू० एवमप्युपन्यासात्पूर्वभावादविरोधं बादरायणः ॥ ७ ॥

भा० एवमपि विज्ञानमात्रस्वरूपत्वप्रतिपादने सत्यपि सत्यकामत्वादीनां पूर्वोक्तानां गुणानामविरोधं बादरायण आचार्यो मन्यते, कुतः, उपन्यासात् पूर्वभावादौपनिषदाद्य आत्माऽपहतपाप्मेत्याद्युपन्यासात्प्रमाणात्पूर्वेषामपहतपाप्मत्वसत्यसंकल्पत्वादीनामपि भावाद्विद्यमानत्वात्तुल्यप्रमाणकानामितरेतरबाधो न युज्यते इत्यर्थः । न च वस्तुविरोधादपहतपाप्मत्वादीनामविद्यापरिकल्पितत्वं न्याय्यं विशेषाभावाद्विपरीतं कस्मान्न भवतीति न्यायात् । तुल्यबलत्वे ह्यप्राक्यस्यावधारणस्यान्यपरत्वमेव न्याय्यम् ॥

टी० सू० एवमप्युपन्यासात्पूर्वभावादविरोधं बादरायणः ॥ ७ ॥ विज्ञानमात्रप्रतिपादनपरत्वापातप्रतीतिं विज्ञानघन एवेत्यादिवाक्यस्याभ्युपगम्य परिहरति एवमपीत्यादिना, अपहतपाप्मेत्यादिके वाक्ये सत्यपि तत्पूर्वपक्षीकृत्य ह्यौडुलोमिमतमुदीरितमिति शङ्कायां सूत्रतात्पर्य्यमाह "तुल्यप्रमाणकाना"मिति, एवकारः, कस्यचिद्वाक्यस्य शेषभूततया न स्वतन्त्रार्थप्रतिपादकः अवधारणीयसापेक्षत्वादवधारणस्य, अतः शेषभूतैवकारस्वारस्याय न शेषिभूतपदजातभङ्गः कार्य्यः । अपि तु शेषिणमभ-

ह्त्वा शेषभूतभङ्ग एव कार्यः, तस्मादेवकारस्वारस्यार्थं वाक्यान्तरगता गुणा न भञ्जनीया इति विज्ञानरूपत्वमपहतपाप्मत्वादिकत्वं च तुल्यप्रमाणकत्वादेवकारभङ्गेनापि स्वीकर्त्तव्यमित्यर्थः । न च वस्तुविरोधादिति वस्तुविरोधो ज्ञानस्य ज्ञानान्तराश्रयत्वासंभवः स किं व्याप्त्याऽभिधीयते? उत श्रुतिबलात्? व्याप्त्या चेत् ज्ञानं कस्यचित् गुणभूतं दृष्टमिति ब्रह्म च तथा-स्यात् श्रुतिप्रतिपन्नत्वाच्च गुणभूतमिति चेत्तत एव श्रुतिबलात् गुणाश्रयत्वमप्यङ्गीक्रियताम् । यत्तु न ज्ञानं ज्ञानान्तराश्रयमिति तन्न ज्ञानत्वप्रयुक्तमपि तु गुणभूतज्ञानत्वप्रयुक्तम्, आत्मनस्तु गुणत्वाभावात् ज्ञानस्वरूपस्यापि ज्ञानाश्रयत्वे व्याप्तिविरोधोऽपि नास्तीत्यनुसंधेयं, विशेषाभावादिति, उभयमपि श्रुतिसिद्धत्वाविशेषाच्चान्योन्यबाधकं, बाधकं चेद्विपर्य्ययेण स्यादित्यर्थः । अशक्यस्य गुणान्तराबाधेन निर्वोढुमशक्यस्य अन्यपरत्वमविरुद्धार्थान्तरपरत्वमभ्युपगम्य वदतस्तात्पर्यमाह—

मू० एवमप्यविरोध इत्यभ्युपगम्य वदन् ज्ञानमात्रमेवास्य स्वरूपं नान्यत्किञ्चिदस्तीत्ययमर्थो विज्ञानघन एवेत्यादिभिर्न प्रतिपाद्यत इति मन्यते कस्तर्हि विज्ञानघन एवेत्यवधारणस्यार्थः कृत्स्नोऽप्यात्मा जडव्यावृत्तः स्वप्रकाशो नान्यायत्तप्रकाशः स्वल्पोऽपि प्रदेशोऽस्तीत्ययमर्थो वाक्यादेव सुव्यक्तः, स यथा सैन्धवघनोऽनन्तरोऽबाह्यः कृत्स्नो रसघन एव एवं वा अरेऽयमात्माऽनन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघन एवेति, न चैवं प्रत्यगात्मनो धर्मिस्वरूपस्य कृत्स्नस्य विज्ञानघनत्वेऽप्यपहतपाप्मत्वसत्यसङ्कल्पत्वादिधर्मसम्बन्धो वाक्यान्तरावगतो विरुध्यते यथा सैन्धवघनस्य कृत्स्नस्य रस—

टी० "एवमपी"ति, अपहतपाप्मत्वादिविरुद्धार्थप्रतीत्यभावं मन्यत इत्यर्थः । तमेव चोद्यपूर्वकमुपपादयति "कस्तर्ही"त्यादिना, वाक्यादेव सुव्यक्तत्वं वाक्यैकदेशभूतदृष्टान्तवाक्येनोपपादयति "स यथे"ति, आत्मनः सर्वत्र विज्ञानघनत्वं स्यात् ततः किं गुणाश्रयत्वस्येत्यत आह "न चैव"मिति, "स यथेति दृष्टान्तवाक्येऽप्यविरोधः कथमवगत इत्यत आह "यथे"ति, दृष्टान्तवाक्यगतावधारणस्य कोऽर्थः तत्रोपजीव्यांशश्च क इत्यत्राह "इदमत्र वाक्यतात्पर्य्य"मिति, प्रदेशभेदे जडत्वं व्यावर्त्यमित्यर्थः । विज्ञानस्वरूपत्वमित्येतद्व्याचष्टे "स्वप्रकाशस्वरूपत्व"मिति, परे तु तृतीयं सूत्रमेवं वर्णयन्ति ज्ञानमात्रस्वरूपत्वेऽपि सत्यसङ्कल्पत्वादीनां व्यावहारिकत्वादविरोधं बादरायणो मन्यत इति, तदयुक्तं व्यावहारिकत्वाश्रयणस्य विरोधफलत्वेनाविरोधसूत्रप्रणयनस्य निष्प्रयोजनत्वात्सम्भवत्यविरोधादुभयपारमार्थ्ये विरोधफलभूतव्यावहारिकत्वाश्रयणायोगात्सत्यकामत्वादीनां दुःखाद्यभावपरत्वेन निर्वाहेऽभिमते तेषां पदानामुख्यत्वाच्च अपरैरविरोधः । अन्येषां पक्षे सन्मात्ररूपेण सर्वात्मभावेन स्थित एवान्येन विभक्तेन रूपेण नानाशरीरवर्त्तिना विहरतीति यदुक्तं तन्निरूप्यम् ।

मू० घनत्वे रसनेन्द्रियावगते चक्षुराद्यवगताः रूपकाठिन्यादयो न विरुध्यन्ते, इदमत्र वाक्यतात्पर्य्यं—यथा रसवत्त्वाम्रफलादिषु त्वगादिप्रदेशभेदेन रसभेदे सत्यपि सैन्धवघनस्य सर्वत्रैकरसत्वं तथाऽऽत्मनोऽपि सर्वत्र विज्ञानस्वरूपत्वं स्वप्रकाशस्वरूपत्वमित्यर्थः । ब्राह्माधिकरणं समाप्तम् ॥

टी० किं स्वरूपं सर्वात्मभावेन तिष्ठति विसर्पता ज्ञानेनाधिष्ठितशरीरो विहरतीत्यभिप्रायः, तत्र स्वरूपस्य सर्वात्मभावोऽनुपपन्नः अणुत्वात्, तत्प्रहाणेन सन्मात्रब्रह्मतापत्तिर्जलबिन्दोर्बिन्दुत्वप्रहाणेन समुद्रतापत्तितुल्या, ततश्च जृम्भमाणस्य तरङ्गस्य पूर्वप्रलीनबिन्दुविशेषा-

अयत्वनिर्धारणवत् विसर्पतो ज्ञानस्य मुक्तात्मविशेषाश्रयत्वनिर्द्धारणायोगात् न मुक्तोविरहतीति वक्तुं युक्तम् । ननु मुक्तस्यात्मभावो नाम जलविन्दोः समुद्र इव न भेदकाकारप्रहाणेन लयः किन्तु क्षीरे नीरस्येव भेदकाकाराप्रहाणेन संसर्गः, तस्य च स्वरूपस्य विसर्पणसङ्कोचनविभागाविभागविषयाः शक्तयः सन्ति, अतो विभागशक्त्या विभक्त एकदेशो विहरतीति चेत् विभक्तांशः किमिदन्तया भाति? उताह? मिति, आद्ये च सोऽशोऽनादिश्चेद्धर्मभूतनित्यज्ञानविज्ञानविकासाद्यभ्युपगमादस्मदीय एव पक्षः स्यात्सादिश्चेत् प्रत्यगर्थैकदेशस्य पराक्तया परिणामान्निर्विकारत्वश्रुतिभङ्गः । अहमिति भातीति चेत्तस्याहमिति भासमानस्य विभक्तस्यांशस्यांशान्तरं किमिदन्तया भाति? उताहन्तया? आद्ये तयोरात्मान्तरत्वं विभक्तस्यांशस्यादिमत्त्वं ध्रुवस्यैकस्य परिणामित्वं च स्यात्, द्वितीये च परस्परापेक्षयाऽहमिति भासमानावंशौ किमहं चाहं चेति समुच्चयार्हौ भवतः किमहमेवेति, आद्ये मिथोभेदकधर्मग्रहणेन विना समुच्चयावभासायोगात् व्यावर्तकधर्मग्रहणं स्याज्जीवान्तरव्यवच्छेदायैक्यग्रहणं च स्यात्, तत्रेदन्तया व्यावृत्तिरहन्तयैकत्वञ्च वक्तव्यम् । अत एकं प्रत्येकस्याहन्तयाऽदन्तया च भानं विरुद्धेत समुच्चयानर्हमहमेवेति भातीति चेत्तर्हि भेदकधर्माभावात् विभक्तत्ववादोऽर्थशून्यः स्यात् । अधिष्ठेयदेहभेदसम्बन्ध एव भेदकाकार इति चेन्न धर्मभूतज्ञानसम्बन्धेनापि करचरणादीनामिवाधिष्ठेयत्वोपपत्तेः, अतः सन्मात्ररूपेण सर्वात्मभावेनावस्थानमन्येन विभक्तरूपेण नानाशरीरवर्त्तिना विहरणं चानुपपन्नम् ॥ आत्माधिकरणं समाप्तम् ॥

संकल्पाधिकरणम् । **सू० सङ्कल्पादेव तच्छ्रुतेः ॥ ८ ॥**

**सू० मुक्तः परं ब्रह्मोपसम्पद्य ज्ञानस्वरूपोऽपहतपाप्मत्वादिसत्यसङ्कल्पत्वपर्यन्तगुणक आविर्भवतीत्युक्तं, तमधिकृत्य तस्य सङ्कल्पत्वप्रयुक्ता व्यवहाराश्च श्रूयन्ते "स तत्र पर्य्येति**

जक्षत् क्रीडन् रममाणः स्त्रीभिर्वा यानैर्वा ज्ञातिभिर्वे"ति किमस्य ज्ञात्यादिप्राप्तिः प्रयत्नान्तरसापेक्षा ? उत परमपुरुषस्येव सङ्कल्पमात्रादेव भवती ? ति विशये लोके राजादीनां सत्यसङ्कल्पत्वेन व्यवह्रियमाणानां कार्य्यनिष्पादने प्रयत्नान्तरसापेक्षत्वदर्शनादस्यापि तत्सापेक्षेति प्राप्ते उच्यते सङ्कल्पादेवेति, कुतः तच्छ्रुतेः, स यदि पितृलोककामो भवति सङ्कल्पादेवास्य पितरः समुत्तिष्ठन्तीति हि सङ्कल्पादेवास्य पित्रादीनां समुत्थानं श्रूयते, न च प्रयत्नान्तरसव्यपेक्षत्वाभिधायिश्रुत्यन्तरं दृश्यते। येनास्य सङ्कल्पादेवेत्यवधारणस्य विज्ञाघनन एवेतिवद् व्यवस्थापनं क्रियते॥

टी० सू० संकल्पादेव तच्छ्रुतेः ॥ ८ ॥ अवान्तरसंगतिमाह 'मुक्त'-इति, विज्ञानघन एवेतिवत्संकल्पादेवेत्यवधारणस्य सङ्कोचशङ्कया च सङ्गतिरभिप्रेता । प्रयत्नान्तरेति प्रयत्न—शब्दः सङ्कल्पव्यतिरिक्तव्यापारपरः, सत्यसङ्कल्पत्वं किं प्रयत्नान्तरसापेक्षम् ? उत ने ? ति विशय इत्यर्थः । मुक्तस्य किं ज्ञात्यादिप्राप्तिः प्रयत्नान्तरसापेक्षा ? उत सङ्कल्पमात्रमूला ? किमस्य सत्यसङ्कल्पत्वं राजादीनामिव [illegible]? उत परमपुरुषस्येव, किं सङ्कल्पादेवेत्यवधारणं राजादितुल्यतां निवर्त्तयितुं प्रभवति ने? ति किमीश्वरसङ्कल्पवन्मुक्तात्मसङ्कल्पस्यामोघत्वं सम्भवति नेति ? किमस्य जक्षणादयो व्यापाराः पुण्यपपारूपतया बन्धका भवन्ति नेति ? बन्धकाश्चेतत्सङ्कल्पस्य कर्माधीनप्रतिघातसम्भवेनेश्वरवत्तत्सङ्कल्पस्यामोघत्वाभावेनावधारणस्य राजादितुल्यतानिवर्त्तनाक्षमत्वान्मुक्तस्य ज्ञात्यादिप्राप्तिः प्रयत्नान्तरसापेक्षा स्यात्, यदा बन्धका न भवन्ति तदा मुक्तात्मनः कर्माधीनप्रतिघातासम्भवेनेश्वरवदमोघसङ्कल्पत्वसम्भवेनावधारणस्य राजतुल्यत्वनिवर्त्तनक्षमत्वात् मुक्तस्य ज्ञात्यादिप्राप्तिः सङ्कल्पमात्रमूला स्यात् । अस्यापि तत्सापेक्षेति ज्ञात्यादिप्राप्तिः प्रयत्नान्तरसापेक्षेत्यर्थः, सङ्कल्पादेवेत्येवकारस्तु विज्ञानघन एवेति

तदयोगव्यवच्छेदपरः न त्वन्ययोगव्यवच्छेदपर इत्यभिप्रायः । राद्धान्ते विज्ञानघन एवेतिवदित्यनेन सङ्गतिविशेषोऽप्यभिप्रेतः ॥

## सू० अत एव चानन्याधिपतिः ॥ ९ ॥

यतो मुक्तः सत्यसङ्कल्पः अत एवानन्याधिपतिश्च, अन्याधिपतित्वं हि विधिनिषेधयोग्यत्वं विधिनिषेधयोग्यत्वे हि प्रतिहतसङ्कल्पत्वं भवेत्, अतः सत्यसङ्कल्पत्वश्रुत्यैवानन्याधिपतित्वं च सिद्धम् । अत एव स स्वराड् भवतीत्युच्यते । संकल्पाधिकरणं समाप्तम् ॥

सू० अत एव चानन्याधिपतिः ॥ ९ ॥ सत्यसङ्कल्पत्वोपपादकमिदं सूत्रं जक्षणादिव्यापाराणां पुण्यपापरूपत्वेन सङ्कल्पप्रतिघातसम्भवात्मोघसङ्कल्पत्वशङ्काव्युदासेनावधारणस्य सङ्कोचनिरासकं हीदम् । अस्यार्थमाह "यत "इति, अन्याधिपतित्वं विवृणोति "विधिनिषेधे"ति, अनन्याधिपतित्वसत्यसङ्कल्पत्वयोरुपपाद्योपपादकभावं व्यतिरेकेण दर्शयति "विधिनिषेधयोग्यत्वे ही"ति, ननु सत्यसङ्कल्पत्वात् विधिनिषेधायोग्यत्वं तदयोग्यत्वात्सत्यसङ्कल्पत्वमित्यन्योन्याश्रय इत्यत्राह "अतः सत्यसंकल्पत्वश्रुत्यैवे"ति, सङ्कल्पादेवेत्यवधारणासङ्कोचः स्वतः प्राप्तः मुक्तस्य जक्षणादिव्यापाराणां पुण्यपापरूपत्वमश्रुतं न च तत्कल्प्यं स्वर्गिणां कर्मफलभूतेषु तिरश्चां व्यापारेषु च व्यभिचारात्, अतः सङ्कोचकाभावादसङ्कुचितेनावधारणेन सत्यसंकल्पत्वं सिद्धमिति तयैव श्रुत्या विधिनिषेधागोचरत्वं च ज्ञापितमित्यर्थः । उक्ततर्कानुगृहीतं श्रुत्यन्तरं च विधिनिषेधायोग्यत्वे प्रमाणमित्याह—"अत एवे"ति, अनेन सूत्रस्य च-शब्दार्थो व्याख्यातो भवति, एवमनेन सूत्रेण मुक्तानामीश्वरवद् ब्रह्मगुणान्वयः प्रतिष्ठापितो भवति अपहतपाप्मत्वं नाम न पापप्रध्वंसवैशिष्ट्यमपि तु पुण्यपापसजातीयव्यापारेषु सत्स्वपि तत्फलसंबन्धानर्हत्वमित्यत्रैव हि स्पष्टं दर्शितम् । अत्रानधिपतिरिति नोक्तं किन्त्वनन्याधिपतिरिति, अत्रायमभि-

प्रायः स्वाभाविकशेषिणः परमपुरुषादनन्योनाधिपतिर्मुक्तस्येति अन्यथा ह्यनधिपतिरित्येव ब्रूयात्, अन्य-शब्दो बहुव्रीहिसूचनार्थ इति चेन्न अनन्याधिपतिरित्युक्तेऽप्यन्येषामिति समाससद्भावात्, अतोऽन्यशब्दस्योक्त एवार्थ इति संप्रदायः । परे तु संकल्पादेव पित्रादि सृजन्नपि मुक्तोऽनन्याधिपतिः न स्वामिनं संकल्पयतीत्येतदर्थपरमनन्याधिपतिशब्दमाहुः तत्र को हेतुः स्वामिपारतन्त्र्यस्यापुरुषार्थत्वादिति चेत्पित्रादिपारतन्त्र्येऽपि तुल्यं पित्रादयः प्रियङ्कराश्च स्युरतस्तत्संकल्प इति चेत्तत्स्वामिनोऽपि तुल्यम्, अतो नायमर्थ उपपन्नः । अपरेषामपि तुल्येयमनुपपत्तिः । अन्ये तु अत एवेति सूत्रमधिकरणान्तरमाहुः सर्वेश्वरत्वपरवाक्यैर्मुक्तस्यापीश्वरोऽधिपतिरिति पूर्वपक्षं कृत्वा मुक्तस्य सत्यसङ्कल्पत्वादेव नास्याधिपतिरित्याहुः कथं दुःखहेतुःविरहेण मुक्ते तदापादनायोगात् दुःखासद्भावादेव तन्निवर्तनायोगात्स्वतःसिद्धानन्दतया तदापादनतन्निवर्तनायोगात्प्रवृत्तस्य विघाते निवृत्तस्य प्रवर्तने च प्रवृत्तिनिवृत्तिविषयसङ्कल्पयोर्मोघत्वप्रसङ्गाच्च । अथ येऽन्यथा विदुरन्यराजानस्ते क्षय्यलोकाभवन्तीत्यन्यराजवतः क्षय्यलोकतां दर्शयन्नात्मविदोऽनन्यराजत्वं दर्शयति स स्वराड् भवतीत्यादिश्चायमेवार्थइति । अत्र ब्रूमः—अधिपति-शब्दस्य शेषिवाचित्वमभिमतं चेत्तदप्रतिषेध्यं शेषलक्षणस्य मुक्तात्मनि विरोधासम्भवात् । यदि नियन्तृत्वं विवक्षितं तच्च मुक्तं प्रति सम्भवत्येव । तथा हि नियमनशब्देन यदि नियमनसामान्यं विवक्षितं तदा धारणमपि तदन्तर्गतत्वेन विवक्षितं स्यात् तत्तावदप्रतिषेध्यं सगुणान्समतीत्यैतान् ब्रह्मभूयाय कल्पते ब्रह्मणो हि प्रतिष्ठाहमिति वचनात्स्वेच्छया परप्रवृत्तिनिवृत्त्योरुत्पादनरूपनियमनरूपविशेषो यदि विवक्षितः तत्प्रतिषेधस्तावत्स्वपक्षव्याघातकः, जगद्व्यापारवर्जमित्यत्रेश्वराधीनं मुक्तस्य सङ्कल्पादि प्रवर्तते अस्य जगद्व्यापारवर्जितेषु स्वभोगार्थेषु नित्यं सङ्कल्पोभूयात् माभूतत्सङ्कल्पविरुद्धेषु जगद्व्यापारेष्वित्यपवर्गप्रदानसमय एवेश्वरः सङ्कल्पयतीत्यभ्युपगमात्, अपवर्गप्रदानोत्तरकाले तु न तादधीन्यमिति चेन्न जगद्व्यापारविषयसङ्कल्पोत्पत्तिप्रतिबन्धे तत्प्रतिबन्धकेश्वरसङ्कल्पस्य नित्यस्य वा तदा

सञ्जातस्य वा विद्यमानत्वस्यापेक्षितत्वात् । न हि प्रतिबन्धकासन्निधौ कार्य्यप्रतिबन्धसम्भवः । अथ मतं—प्राथमिकसङ्कल्पजन्यः कश्चिदतिशयो मुक्तात्मगतः सर्वदा जगद्व्यापारं प्रतिबध्नाति न तदेश्वरनियाम्यत्वं न ह्यतिशयाधायकानां नियन्तृत्वम् आधायकविनाशेऽप्याहितातिशयस्य कार्य्याकरत्वदर्शनादिति चेत्तच कल्पनागौरवप्रसङ्गात्, ईश्वरसङ्कल्पजन्यातिशयस्य स्थायित्वाभ्युपगमादपि वरं हीश्वरसङ्कल्पस्यैव स्थायित्वोपगमः । अतः स्ववचनव्याघातः सर्वेश्वरत्ववादिश्रुतिस्वारस्यभङ्गश्च स्यात्, यस्यात्मा शरीरमिति श्रुतिविरोधश्च । काष्ठाप्राप्तं नियाम्यं हि शरीरं, न चात्मशब्दो बद्धमात्रपरः सर्वदेवसर्वभूतानां बद्धानां तन्नियाम्यत्वस्योक्तत्वात्, नाप्यन्तःकरणविषयः अमुख्यत्वादात्मशब्दस्य, यो मनसि तिष्ठन्नित्यनेन पुनरुक्तत्वाच्च, येन येन धाता गच्छति तेन सह गच्छतीति मुक्तस्य परमात्मानुविधानश्रुतिविरोधश्च नित्यस्य परसापेक्षत्वमीश्वरप्रमितिनित्यपदार्थगतपरिमाणादिषु सर्वसंप्रतिपन्नत्वात्सम्भवति ॥ सङ्कल्पाधिकरणं समाप्तम् ॥

अभावाधिकरणम् ।

## सू० अभावं बादरिराह ह्येवम् ॥ १० ॥

भू० किं मुक्तस्य देहेन्द्रियाणि न सन्ति? उत सन्ति? अथवा यथासङ्कल्पं सन्ति? न सन्ति चे? ति विशये शरीरेन्द्रियाणामभावं बादरिराचार्यो मन्यते कुत आह ह्येवम् "न ह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशत" इति शरीरसम्बन्धे सुखदुःखस्यावर्जनीयत्वमभिधायास्माच्छरीरात्समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यत इति मुक्तस्याशरीरत्वं ह्याह श्रुतिः ।

सू० अभावं बादरिराह ह्येवम् ॥ १० ॥ यथा सङ्कल्पमित्यनेन सङ्गतिर्दर्शिता, किं मुक्तस्य देहेन्द्रियाणि न सन्ति ? उत सन्ति ? उत यथासङ्कल्पं सन्ति न सन्ति चेति ? तदर्थं स एकधा भवतीत्यादिश्रुतिरशरीरत्वश्रुतिं सङ्कोचयितुं शक्नोति नेति ? किं स एकधा भवतीत्यादिश्रुतिर्मुक्तस्य सशरीरत्वं प्रतिपादयितुं प्रभवति ? उत न ? प्रतिपादनेऽपि किं सशरीरत्वमात्रं प्रतिपादयति ? उततस्यैच्छत्वमप्यवगमयति ? तदर्थमेकधाभवनत्रिधाभवनादिकं मुक्तस्य शरीरेण विना सम्भवति ? उत न ? असम्भवे च मुक्तस्य ब्रह्मानुभवैकभोगस्य तद्व्यतिरिक्तदेहसर्गादाविच्छादिकं सम्भवति ने ? ति अणोर्जीवस्यानेकशरीरपरिग्रहः सम्भवति नेति च, यदा ऽनेकशरीरपरिग्रहो न सम्भवति यदा च शरीरेण विनापि त्रिधाभवनादिकमुपपद्यते, तदा स एकधेत्यादिवाक्यस्य शरीरप्रतिपादकत्वाभावेनाशरीरत्वश्रुतिसङ्कोचनासामर्थ्यान्मुक्तो ऽशरीर एव स्यात्, यदा ऽणोरप्यनेकशरीरयोगः सम्भवति, यदा च शरीरेण विना त्रिधाभवनादिकमनुपपन्नं ब्रह्मानुभवैकभोगस्य देहसर्गादीच्छा च न स्यात्तदा शरीरस्यावश्यापेक्षितत्वादिच्छाधीनान्वयव्यतिरेकत्वाभावाच्च तत्प्रतिपादकवाक्येनाशरीरत्वश्रुतिसङ्कोचे सति मुक्तः सशरीर एव स्यात्, यदाऽनेकशरीरपरिग्रहोपपत्तिः अनेकधाभवनञ्च शरीरसापेक्षं ब्रह्मानुभवैकभोगस्य देहसर्गादाविच्छा च सम्भवति तदानीमैच्छशरीरप्रतिपादनत्वेन स एकधा भवतीत्यादिवाक्येनाशरीरत्वश्रुतेः सङ्कोचे सति मुक्तो यथेच्छं सशरीरोऽशरीरश्च स्यादिति, शरीरेन्द्रियाणामभावमिति । अभावप्रतिसम्बन्धि किमित्यपेक्षायां तन्वभाव इति सूत्रस्यतनु–शब्देन प्रतियोगिविशेषावगम इति भावः । शरीरसम्बन्ध इति, शरीरत्वप्रयुक्तं दुःखहेतुत्वमिति भावः । एवमशरीर एवेत्येकः पक्षः ॥

## सू० भावं जैमिनिर्विकल्पामननात् ॥ ११ ॥

मू० मुक्तस्य शरीरेन्द्रियभावं जैमिनिराचार्यो मन्यते, कुतः विकल्पामननात् विविधः कल्पो विकल्पः वैविध्यमित्यर्थः, "स एकधा भवति त्रिधा भवति पञ्चधा भवति

सम्पधे"त्यादिश्रुतेः, आत्मन एकस्याच्छेद्यस्यानेकधाभावा-सम्भवात्त्रिधाभावादयः शरीरनिबन्धना इत्यवगम्यते, अशरीरत्ववचनं तु कर्मनिमित्तशरीराभावपरं, तदेव हि शरीरं प्रियाप्रियहेतुः, । भगवांस्तु बादरायणः स्वमतेन सिद्धान्तमाह—

टी० सू० भावं जैमिनिर्विकल्पामननात् ॥ ११ ॥ अत्र शरीरवाचिशब्दो न श्रुत इत्यत्राह "आत्मन एकस्ये"ति, त्रिधाशब्दादीनां धर्मिभेद एव स्वारस्यं तदखण्डमकरोद् द्विधेत्यादिप्रयोगात् द्रव्यत्वपृथिवीत्वादिजातिसंयोगादिगुणपरिपरिस्पन्दरूपक्रियासहस्रान्वितेऽपि घटे द्विधा त्रिधासहस्रधाऽभूदिति प्रयोगाभावाच्च तथाऽऽप्यात्मनि स्वरूपभेदासम्भवात् शरीरद्वारकमित्यर्थः । तर्ह्यशरीरत्वश्रुतिः कथमित्यत्राह "अशरीरत्ववचनं त्वि"ति, स्ववाक्येनैव तदुपपादयति "तदेव ही"ति, प्रियाप्रियहेतुतया शरीरस्य निषेधात् प्रियाप्रिययोश्च कर्मफलत्वात्कर्मकृतशरीरविषयो निषेध इत्यर्थः । अतः सशरीरत्वश्रुतेर्निवारकाभावात् कादाचित्कहेत्वन्तरानुक्तेश्च सर्वदा सशरीरत्वं फलितमिति सूत्राभिप्रायः । सिद्धान्तसूत्रमवतारयति "भगवाँस्त्वि"ति, ।

## सू० द्वादशाहवदुभयविधं बादरायणोऽतः ॥ १२ ॥

मू० सङ्कल्पादेवेत्येनदतः—शब्देन परामृश्यते, अत एव सङ्कल्पादुभयविधं सशरीरमशरीरं च मुक्तं भगवान्बादरायणो मन्यते, एवं चोभयी श्रुतिरुपपद्यते—द्वादशाहवत्, यथा द्वादशाहमृद्धिकामा उपेयुः द्वादशाहेन प्रजाकामं याजयेदित्युपैतियजतिचोदनाभ्यां सङ्कल्पभेदेन सत्रमहीनश्च भवति । यदा शरीराद्युपकरणवत्त्वं तदा तानि शरीराद्युपकरणानि स्वेनैव सृष्टानीति नास्ति नियम इत्याह—

टी० सू० द्वादशाहवदुभयविधं बादरायणोऽतः ॥ १२ ॥ अतः–पदं व्याचष्टे "सङ्कल्पादेवे"ति, त्रिधा भवनादेर्हेत्वाकाङ्क्षायां सत्यसङ्कल्पत्वश्रुतिरेव पूरयति व्यापारान्तरेष्वपि तस्यैव हेतुत्वश्रवणेनौचित्यादिति भावः । सूत्रस्य वाक्यार्थमाह "अत एवे"ति, ननु उभयी श्रुतिरिति सशरीरत्वाशरीरत्वश्रुती विवक्षिते, अशरीरत्वश्रुतेः कर्मकृतशरीरपरत्वमुक्तं कर्मकृतशरीराभावश्च सर्वदाऽस्ति तत्कथं कदाचिदशरीरत्वे सा प्रमाणं, नैवं प्रमाणतया विवक्षितत्वाभावात् सत्यसङ्कल्पादिवाक्यानुगृहीतया सशरीरत्वश्रुत्या यथेच्छशरीरत्वे चाभ्युपगते सत्यशरीरत्वश्रुतिरप्यर्थवती सशरीरत्वश्रुतिरप्यबाधिता स्यादिति भाष्यार्थः । सङ्कल्पभेदेन सत्रत्वेऽहीनत्वे च प्रामाणिके सति तत्तत्प्रयोगविशेषेषु सङ्कल्पभेदो नियामक इत्यर्थः । बहुयजमानसङ्कल्पात्सत्रम् एकस्य सङ्कल्पादहीनं, । पूर्वसूत्रसङ्गतमुत्तरसूत्रार्थं संक्षिपन्सूत्रमवतारयति 'यद्वे"ति, ॥

## सू० तन्वभावे सन्ध्यवदुपपत्तेः ॥ १३ ॥

अ० स्वेनैव सृष्टतनुप्रभृत्युपकरणाभावे परमपुरुषसृष्टैरुपकरणैर्भोगोपपत्तेः सत्यसङ्कल्पोऽपि स्वयं न सृजति । यथा स्वप्ने "अथ रथान् रथयोगान् पथः सृजत इत्यारभ्य अथ वेशन्तान् पुष्करिण्यः स्रवन्त्यः सृजते स हि कर्त्तेति य एषु सुप्तेषु जागर्ति कामं कामं पुरुषो निर्मिमाणः तदेव शुक्रं तद्ब्रह्म तदेवामृतमुच्यते तस्मिँल्लोकाः श्रिताःसर्वे तदु नात्येति कश्चने"ति चेश्वरसृष्टैरथाद्युपकरणैर्जीवो भुङ्क्ते तथा मुक्तोऽपि लीलाप्रवृत्तेनेश्वरेण सृष्टैः पितृलोकादिभिर्लीलारसं भुङ्क्ते ॥

टी० सू० तन्वभावे सन्ध्यवदुपपत्तेः ॥ १३ ॥ परमपुरुषसृष्टैरित्युपकरसृष्टेरित्यर्थः । भोगोपपत्तेरिति देहादिसृष्टेर्ब्रह्मानुभवानन्तर्गतत्वे तत्र

एव तदिच्छाऽसम्भवेऽभ्युपगम्यमानेऽपि एकधाभवनादिश्रवणबलात्तदनुगुणप्रकारपरिकल्पनेन निर्वाहो न्याय्य इति भावः ॥ यथेति अस्य निर्वाहस्यौचित्यप्रदर्शनार्थं सूत्रे सन्ध्यदृष्टान्तोपादानमित्यभिप्रयन्सार्थत्वमाह—

## सू० भावे जाग्रद्वत् ॥ १४ ॥

भू० स्वसङ्कल्पादेव सृष्टतनुप्रभृति पितृलोकाद्युपकरणभावे जाग्रत्पुरुषभोगवन्मुक्तो लीलारसं भुङ्क्ते परमपुरुषोऽपि लीलाऽर्थं दशरथवसुदेवादिपितृलोकादिकमात्मनः सृष्ट्वा तैर्मनुष्यधर्मैर्लीलारसं यथा भुङ्क्ते, तथा मुक्तानामपि स्वलीलायै पितृलोकादिकं स्वयमेव सृजति, कदाचित्, कदाचिच्च मुक्ताः सत्यसङ्कल्पत्वात् परमपुरुषलीलान्तर्गतस्वपितृलोकादिकं स्वयमेव सृजन्तीति सर्वमुपपन्नम् ॥

ननु आत्माऽणुपरमाण इत्युक्तं, कथमनेकशरीरेष्वेकस्याणोरात्माभिमानसम्भव इत्यत्राह—

टी० सू० भावे जाग्रद्वत् ॥ १४ ॥ सूत्रं योजयति स्वसङ्कल्पादेवे"ति, ननु मुक्तस्य पित्रादिसर्गसापेक्षत्वे ब्रह्मानुभवादन्यपरत्वं ब्रह्मणि भोग्यतावैकल्यं पित्रादीच्छाया अकर्मकृतत्वं च न स्यादिति शङ्कायामाह "परमपुरुषोऽपीति, पितृलोकादिसृष्टेर्भगवल्लीलान्तर्गतत्वे निदर्शनं दशरथादिसृष्टिः, तदन्तर्गतत्वादेव पित्रादिसृष्टावपि मुक्तस्य न ब्रह्मानुभवादन्यपरत्वं ब्रह्मसम्बन्धिलीलाविशेषस्यानुकूलत्वं ब्रह्मणः प्रियतमत्वातिशयनिबन्धनम्, अत एव न ब्रह्मणः प्राप्यत्ववैगुण्यं मुक्तात्मनां पित्रादीच्छाया अकर्मकृतत्वं भगवतोवसुदेवादिकल्पनेच्छाया इवोपपन्नमित्यर्थः। उत्तरसूत्रशङ्कामाह "नन्वि"ति, ।

## सू० प्रदीपवदावेशस्तथा हि दर्शयति ॥ १५ ॥

यथा प्रदीपस्यैकस्यैकस्मिन्देशे वर्त्तमानस्य स्वप्रभया देशान्तरावेशस्तथाऽऽत्मनोऽप्येकदेशस्थितस्यैव स्वप्रभारूपेण चैतन्येन सर्वशरीरावेशो नानुपपन्नः, यथा चैकस्मिन्नपि देहे हृदयाद्येकप्रदेशवर्त्तिनोऽपि चैतन्यव्याप्त्या सर्वस्मिन्देहे आत्माभिमानस्तद्वत् । इयान्विशेषः अमुक्तस्य कर्मणाऽसंकुचितज्ञानस्य देहान्तरेष्वात्माभिमानानुगुणा व्याप्तिर्न सम्भवति मुक्तस्य त्वसंकुचितज्ञानस्य यथासङ्कल्पमात्माभिमानानुगुणा व्याप्तिरिदमिति ग्रहणानुगुणा च नानुपपन्ना, तथा हि दर्शयति—"बालाग्रशतभागस्य शतधा कल्पितस्य च भागो जीवः स विज्ञेयः स चानन्त्याय कल्पत"इति, अमुक्तस्य कर्म नियामकं मुक्तस्य तु स्वेच्छेति विशेषः । ननु परं ब्रह्म प्राप्तस्यान्तरबाह्यज्ञानलोपं दर्शयति श्रुतिः, "प्राज्ञेनात्मना सम्परिष्वक्तो न बाह्यं किञ्चन वेद नान्तरमि"ति, तत्कथं मुक्तस्य सार्वज्ञ्यमुच्यते तत्रोत्तरम्—

टी० प्रदीपवदावेशस्तथा हि दर्शयति ॥ १५ ॥ अत्र वक्तव्यं सर्वं गुणाद्वाऽऽलोकवदित्यत्रापेक्षितत्वादुक्तं, स्वरूपस्यैकदेशस्थत्वेऽपि धर्मस्य प्रदेशान्तरे कार्य्यकरत्वमात्रं दृष्टान्तोपजीव्यं, तर्हि वस्त्वन्तराण्यपि ज्ञानेनाधितिष्ठेदित्यत्राह "इयानि"ति, आत्माभिमानानुगुणेति प्रवर्त्तकत्वशक्तिविशिष्टेत्यर्थः । आत्माभिमानो हि शरीरित्वाभिमानः तदेकप्रवर्त्यं हि शरीरं तत्प्रेरकत्वं शरीरित्वमिति, इदमिति ग्रहणानुगुणेति प्रकाशकत्वशक्तिरुक्ता । तथा हि दर्शयति स्वरूपाणुत्वे ज्ञानेनानेकशरीरित्वोपपत्तौ च श्रुतिरस्तीत्यर्थः । अमुक्तेष्वपि सौभर्य्यादिष्वनेकशरीरपरिग्रहो दृश्यते

मुक्तस्य को भेदः मुक्तोऽनेकशरीरपरिग्रहक्षमश्चेत्पूर्वावस्थायामपि करोत्वित्यत्राह "अमुक्तस्य कर्मे"ति, उत्तरसूत्रशङ्कामाह "नन्वि"ति, ।

## सू० स्वाप्ययसम्पत्त्योरन्यतरापेक्ष-माविष्कृतं हि ॥ १६ ॥

भू० नेदं वचनं मुक्तविषयम् अपि तु स्वाप्ययसम्पत्त्योरन्यतरापेक्षं स्वाप्ययः सुषुप्तिरित्युक्तं, सम्पत्तिश्च मरणं वाङ्मनसि सम्पद्यत इत्यारभ्य तेजः परस्यां देवतायामिति वचनात्तयोश्चावस्थयोः प्राज्ञप्राप्तिर्निःसंबोधत्वं च विद्येते, अतस्तयोरन्यतरापेक्षमिदं वचनं सुषुप्तिमरणयोर्निःसंबोधत्वं मुक्तस्य च सर्वज्ञत्वमाविष्कृतं हि श्रुत्या "नाहं खल्वयमेवं सम्प्रत्यात्मानं जानात्ययमहमस्मीति नो एवेमानि

टी० सू० स्वाप्ययसंम्पत्त्योरन्यतरापेक्षमाविष्कृतं हि ॥ १६ ॥ सता सोम्य तदा संपन्नो भवतीत्यादिभिः स्वापे ब्रह्मसम्पत्तिः प्रसिद्धेति मृतौ ब्रह्मसम्पत्तिविषयं प्रमाणमाह "तेजः परस्याम्"इति, अस्य वाक्यस्य मरणविषयत्वद्योतनाय वाङ्मनसीत्यादिकमुक्तं, ब्रह्मसम्पत्तिनिर्बोधत्वयोस्तदा सम्भवे सति ह्यस्य वाक्यस्य तयोरन्यतरपरत्वमिति शङ्काव्यावृत्त्यर्थमाह "तयोश्चावस्थयो"रिति, इति—वचनाद्विद्येते इत्यन्वयः सूत्रखण्डान्तरं व्याचष्टे "सुषुप्ती"ति, सता सोम्य तेजः परस्यां देवतायामिति च सुषुप्तिमरणयोर्ब्रह्मसम्पत्तिश्रुतिश्चानुसन्धेया । सङ्कल्पादेवेत्यनेन मनःसिद्धेः शरीरेन्द्रियविषयोऽयं विचार इति परैरुक्तं शरीराभावपक्षेऽपि न भोगानुपपत्तिः । अत्र दृष्टान्तः सन्ध्यवदिति, तत्र शरीरावस्थानं मतोऽवस्थानाय न भोगाय शरीरस्थितेरन्यथासिद्धत्वादिति तन्वभाव इत्यस्यार्थ-

भू० भूतानि विनाशमेवापीतो भवति नाहमत्र भोग्यं पश्यामीति सुषुप्तिवेलायां निस्सम्बोधत्वमुक्त्वा तस्मिन्नेव वाक्ये

मुक्तमधिकृत्य स वा एष दिव्येन चक्षुषा मनसैतान्कामान् पश्यन् रमते य एते ब्रह्मलोक इति सर्वज्ञत्वमुच्यते, तथा सर्वं ह पश्यः पश्यति सर्वमाप्नोति सर्वश इति च स्पष्टमेव सर्वज्ञत्वमुच्यते ।

टी० माहुः तत्र मनःसृष्टादीश्वरस्येव तत्साम्यापन्नस्य मुक्तस्य मनोऽनपेतसङ्कल्पोपपत्तेः सङ्कल्पान्मनःसिद्धिरनुपपन्ना, स्वप्ने चेश्वरसृष्टदेहादिसद्भावस्य प्रामाणिकत्वान्मनोमात्रेण भोगोपपत्तौ न स्वप्नो दृष्टान्तः स्यात् । अपरे तु स्वप्ने मानसभोगस्य भ्रान्तिकृतत्वाच्छरीरभोगस्य कर्मकृतत्वान्मुक्तस्य भ्रान्तिकर्मणोरभावात् भोगासम्भवं पूर्वपक्षं कृत्वा मनसैतान्कामान्स एकधा भवतीत्यादिश्रुतेः स्वप्ने केवलमनसा भोगदर्शनाच्च भ्रान्तिकर्मणोरभावेऽपि भोगसम्भवं राद्धान्तयन्तः तन्वभाव इत्यधिकरणान्तरमाहुः । तत्र तादर्थ्यनैरन्तर्याभ्यामधिकरणान्तरत्वमयुक्तम् ईश्वरसृष्टदेहलाभादेव मनसैव भोगेऽपि न दृष्टान्तः । अन्येऽप्येकाधिकरणं वदन्तः स्वप्ने मनसैव रूपरसाद्यनुभवो दृष्टान्तः स्वप्नधीश्च न स्मृतिः किन्त्वनुभवः दोषसचिवत्वात् भ्रान्तिः, मुक्तस्य तु योगसचिवत्वाद्यथार्थं इत्याहुः तदपि पूर्वमेव दत्तोत्तरम् अत ईश्वरसृष्टदेहवत्त्वे प्रामाणिके सति स्वप्नजागरौ दृष्टान्तौ केवलेश्वरप्रयत्नसृष्टत्वजीवव्यापारद्वारकेश्वरप्रयत्नसृष्टत्वाभिप्रायाविति युक्तं, तदुपन्यासश्च देहसृष्टौ जीवपरयोरभिप्रायाविरोधज्ञापनार्थं इति युक्तं, प्रदीपवदावेश इत्यादिसूत्रद्वयमधिकरणान्तरमितरे त्रयोऽपि वर्णयन्ति स एकधा भवति त्रिधा भवतीति मुक्तसृष्टानि शरीराणि साल-

श्रु० तथा मरणे च निस्सम्बोधत्वमेतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यतीत्युक्तं, न पश्यतीत्यर्थः अतः प्राज्ञेनात्मनेति वचनं स्वाप्ययसम्पत्त्योरन्यतरापेक्षम् ॥ अभावाधिकरणं समाप्तम् ॥

टी० भञ्जिकावच्चिरात्मकानि निर्मनस्कानि आत्मनो मनसश्च भेदानुपपत्तेरिति पूर्वपक्षं कृत्वा मनस एकत्वेऽपि एकमनोनुवर्तीनि समनस्कान्यपराणि सत्यसङ्कल्पत्वात्स्रष्टुा उपाधिभेदेन भिन्नः सन्नात्मा तान्युपाधिभूतान्यधितिष्ठति तत्केन कं विजानीयादित्यादिभिर्मुक्तस्य द्वितीयदर्शनाभावादनेकशरीराधिष्ठानलक्षणैश्वर्य्यानुपपत्तिपरिहारपरं स्वाप्ययसम्पत्त्योरिति सूत्रं सुषुप्तौ कैवल्ये च द्वितीयदर्शनाभावः तदधिकारवशात्तदाविष्कृतं हि सगुणविद्याविपाकः स्वर्गादिवदस्यान्तरमिति तत्रैश्वर्य्योपपत्तिरिति परे व्याचक्षते, तत्र तावदर्थ्यनैरन्तर्य्याभ्यामधिकरणभेदानुपपत्तिः मनःसृष्टावीश्वरस्येव मनोऽनपेक्षसङ्कल्पोपपत्तेः आत्मभेदस्यान्तःकरणोपाधिकत्वाभावाच्चैकमनोमूलत्वनिर्बन्धोऽत्यन्तानुपपन्नः सगुणविद्याया एव परविद्यात्वात् साक्षान्मोक्षस्यैव परविद्याफलत्वाद्विज्ञानप्रतिषेधस्य स्वाप्ययकैवल्यविषयत्वमैश्वर्य्यस्य सगुणविपाकत्ववचनं नानुपपन्नम् । अपरे तु सुषुप्त्युत्क्रान्तिविषयोविज्ञानप्रतिषेध इति वदन्ति तत्पक्षेऽपि विरुद्धांशः प्रागेव प्रत्युक्तः आत्मभेदस्य निरुपाधिकत्वात् । अन्ये तु अणोरनेकशरीरवृत्त्ययोगात्महत्त्वेऽपि भृत्यादिशरीरवृत्तेरपुरुषार्थत्वान्मुक्तानां मुक्तान्तरानुपमर्जनत्वादमुक्तानां मोक्षस्यानारोहणायोगाच्च जीवान्तरावेशायोगान्मुक्तसृष्टशरीराणि निरात्मकानीति पूर्वपक्षं कृत्वा विभागशक्तियोगान्मुक्तादणुपरिमाणादात्मसहस्रोत्पत्तेः "आत्मनां तु सहस्राणि बहूनि भरतर्षभ योगी कुर्य्याद्बलं प्राप्य तैश्च सर्वैर्महीं चरेदि"ति स्मृत्या सङ्कोचविभागादिशक्तेर्दर्शितत्वात् स्वेषु शरीरेष्वहङ्कारकरणात् स्यादिशरीरेष्वहङ्कारकरणाकरणयोर्विरोधाभावात् भृत्यादिशरीरेषु चैतन्यप्रभासंसर्गेणाहङ्काराकरणात्तथा कूटस्थपुरुषस्य जीवसमष्टेर्व्यष्टिजीवत्वेनानुपयुक्तादंशाद्विभज्य तत्तच्छरीरेष्वात्मप्रवेशनोपपत्तेश्च सात्मकानीति सिद्धान्तयन्ति तत्र मुक्तानां परस्परगुणभावाभावेऽपीश्वरानुसञ्चरणाय संसारमण्डले पित्रादिसङ्कल्पनं भवतीत्यमुक्तानां मोक्षस्यानारोहणानुपपत्तिर्न वक्तव्या, अत एव भृत्यादिशरीरेष्वनुप्रवेशस्यापुरुषार्थत्वादिति न वक्तव्यम् अविभक्तनामरूपजीवसमूहव्यतिरेकेण कूटस्थपुरुषो नाम न

कश्चित्प्रामाणिकः जीवसमूहविषयतया वचनोपपत्तेः । यत्त्वेकस्माज्जीवादात्मसहस्रं सङ्कल्पनं विभागशक्तिमत्त्वादिति तत्पूर्वमेव निरस्तम् । आत्मनां तु सहस्राणीत्यत्रात्म–शब्दो देहवचन इति न तद्वचनं विभागशक्तौ प्रमाणं स्यादिशरीरेष्वहङ्कारकरणाकरणे भृत्यादिशरीरेषु चैतन्यप्रभासंसर्गणाहङ्कारं न करोतीति विभागकल्पना च निर्मूला । भृत्यादिभावस्यानिष्टत्वात्स्वयमेवाहङ्कारकरणाभावश्चेत् शरीरसंबन्धस्यैव दुःखहेतुत्वदर्शनात् शरीरसृष्टिरपि न स्यात्, स्वेच्छायत्ततया शरीरस्य दुःखहेतुत्वं चेत् भृत्यादिभावेनाधिष्ठेयत्वेऽपि तुल्यम् ॥ अभावाधिकरणं समाप्तम् ॥

जगद्व्यापारवर्ज्याधिकरणम् ।

## सू० जगद्व्यापारवर्ज्यं प्रकरणादसन्निहितत्वाच्च ॥ १७ ॥

भा० किं मुक्तस्यैश्वर्य्यं जगत्सृष्ट्यादि परमपुरुषासाधारणं सर्वेश्वरत्वमपि? उत तद्रहितं केवलपरमपुरुषानुभवविषय? मिति संशयः, किं युक्तं जगदीश्वरत्वमपीति, कुतः निरञ्जन परमं साम्यमुपैतीति परमपुरुषेण परमसाम्यापत्तिश्रुतेः, सत्यसङ्कल्पत्वश्रुतेश्च, न हि परमसाम्यसत्यसङ्कल्पत्वसर्वेश्वरासाधारणजगद्व्यापाररूपजगन्नियमेन विनोपपद्येते, अतः सत्यसङ्कल्पत्वपरमसाम्योपपत्तये समस्तजगन्नियमनरूपमपि मुक्तैश्वर्य्यमित्येवं प्राप्ते प्रचक्ष्महे जगद्व्यापारवर्जमिति, जगद्व्यापारो–निखिलचेतनाचेतनस्वरूपस्थितिप्रवृत्तिभेदनियमनन्तद्वर्ज्यं निरस्तनिखिलतिरोधानस्य निर्व्याजब्रह्मानुभवरूपं मुक्तस्यैश्वर्य्यं, कुतः प्रकरणात्, निखिलजगन्नियमनं हि परं ब्रह्म प्रकृत्याम्नायते "यतो

वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्ति तद्विजिज्ञासस्व तद्ब्रह्म" इति, यद्येतन्निखिलजगन्नियमनं मुक्तानामपि साधारणं स्यात् ततश्चेदं जगदीश्वरत्वरूपं ब्रह्मलक्षणं न सङ्गच्छते ॥

टी० सू० जगद्व्यापारवर्जं प्रकरणादसन्निहितत्वाच्च ॥ १७ ॥ सत्यसङ्कल्पताविचाररूपत्वात्सङ्गतिरर्थसिद्धा । जगत्सृष्ट्यादि सर्वेश्वरत्वं सर्वेश्वरत्वप्रकारो हि सृष्ट्यादिः परमपुरुषानुभवविषयं तदनुभवान्तर्गतशरीरसर्गादिविषयं किं मुक्तस्य जगद्व्यापारविषयमैश्वर्य्यमस्ति नेति? परमसाम्यसत्यसङ्कल्पत्वश्रवणं किं मुक्तस्यैश्वर्य्यस्य जगद्व्यापारविषयत्वमवगमयितुं शक्नोति न? ति किं जगन्नियमनस्य मुक्तैश्वर्य्यान्तर्भावे यतो वा इमानीत्यादिब्रह्मलक्षणवाक्यं विरुद्ध्यते नेति? किं मुक्तस्य सृष्टिप्रकरणासन्निधानेन जगद्व्यापारस्य ब्रह्मलक्षणत्वाश्रयणं न्याय्यम्? उत मुक्तस्य विकारलोकानुसञ्चरणश्रवणेन जगन्नियमनस्य ब्रह्मलक्षणत्वाश्रयणञ्च न्याय्यं, किं मुक्तस्य विकारलोकानुसञ्चरणं नियमनार्थम्? उत केवलभोगार्थं? केवलभोगार्थत्वे किं मुक्तस्यापरिच्छिन्नानन्दत्वविरोधः स्यादुत? नेति, ? अत्र तदर्थो विचारस्त्रिविधः किं विकारलोकानां भोगानित्यत्वेनानन्दानित्यता स्यादुत नेति? किं विकारलोकानां भोग्यत्वं विकारात्मत्वात्? उत ब्रह्मविभूतित्वात्? । किञ्च किं मुक्तस्यास्वातन्त्र्यमानन्दवैकल्यमापादयति? उत नेति स्वातन्त्र्यं अस्वातन्त्र्यरूपत्वादानन्दावहम्? उतात्माभिमानानुरूपत्वात् । किञ्च स्वतन्त्रस्यानावृत्तिः

सू० असाधारणस्य हि लक्षणत्वं, तथा सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयं तदैक्षत बहु स्यां प्रजायेयेति तत्तेजोऽसृजतेति ब्रह्म वा इदमेकमेवाग्र आसीत्तदेकं सन्नव्यभवत् तच्छ्रेयोरूपमत्यसृजत क्षत्रं यान्येतानि देवक्षत्राणीन्द्रो वरुणः सोमो रुद्रः पर्जन्यो यमो मृत्युरीशानः"

इति आत्मा वा इदमेव एवाग्र आसीत् नान्यत्किञ्चन मिषत् स ऐक्षत लोकान्नुसृजा इति स इमाँल्लोकानसृजत इति ।

टी० सम्भवति ने ? ति किमनावृत्तिश्रुतिश्चातुर्मास्याद्यक्षय्यफलत्वश्रुतिवच्चिराभिप्राया ? उत मुख्यार्था ? किं मुक्तात्मानावर्तनविषयः सङ्कल्प ईश्वरस्य न सम्भवति ? उत सम्भवति ? यदा न सम्भवति तदानावृत्तिश्रुतेश्चिराभिप्रायत्वेनावृत्तिसम्भवादानन्दः परिच्छिद्यते । स्वातन्त्र्यं स्वातन्त्र्यरूपत्वात्सुखरूपं चेत् तद्वैकल्यादानन्दवैकल्यं विकारलोकानां विकारात्मकतया भोग्यत्वे तदनित्यत्वादानन्दानित्यत्वम्, अतः केवलभोगार्थत्वाभावेन विकारालोकानुसञ्चरणस्य नियमनार्थत्वाज्जगद्व्यापारस्य ब्रह्मलक्षणत्वाश्रयणमन्याय्यमिति तस्य लक्षणत्वाभावेन तदविरोधात्परमसाम्यादिश्रवणस्य मुक्तैश्वर्यं जगद्व्यापारान्तर्भावावगमकत्वाज्जगद्व्यापारविषयमैश्वर्यं मुक्तस्य सम्भवेत्, यदा मुक्तानावर्तनविषयः सङ्कल्पस्य ईश्वरस्य सम्भवति तदाऽनावृत्तिश्रुतेर्मुख्यत्वेनानावृत्तिसम्भवान्नानन्दानित्यत्वं, यदा च स्वातन्त्र्यमात्माभिमानानुरूप्यात् सुखरूपं तदा मुक्तेषु स्वात्माभिमानाननुरूपत्वात् स्वातन्त्र्यस्य तद्वैकल्यान्नानान्दवैकल्यं, यदा च विकारलोकानां मुक्तभोग्यत्वं

भा०एको ह वै नारायण आसीन्न ब्रह्मा नेशानो नेमे द्यावापृथिवी न नक्षत्राणि नापो नाग्निर्न सोमो न सूर्य्यः स एकाकी न रमते तस्य ध्यानान्तस्थस्यैका कन्या दशेन्द्रियाणि"इत्यादिषु यः पृथिव्यां तिष्ठन् पृथिव्या अन्तर इत्यारभ्य य आत्मनि तिष्ठन्नित्यादिषु च निखिलजगन्नियमनं परमपुरुषं प्रकृत्यैव श्रूयते, असन्निहितत्वाच्च, न चैतेषु निखिलजगन्नियमनप्रसङ्गेषु मुक्तस्य सन्निधानमस्ति येन जगद्व्यापारस्तस्यापि स्यात् ।

टी० ब्रह्मविभूतितया तदा विकाररूपस्यानित्यत्वेऽपि सर्वावस्थासु जगतो ब्रह्मविभूतित्वस्यानपायित्वेन नानन्दविच्छेदः । एवं विकारलोकानुसञ्चरणस्य नियमनार्थत्वाभावेऽप्यपरिच्छिन्नानन्दत्वाविरोधात्केवलभोगार्थतया तदविरोधेन जगद्व्यापारस्य ब्रह्मलक्षणत्वाश्रयणस्य न्याय्यत्वात्परमसाम्यादिश्रवणस्य मुक्तैश्वर्यं जगन्नियमनान्तर्भावानवगमकत्वात् जगद्व्यापारवर्जमेव मुक्तैश्वर्यं स्यात् । यद्यनावृत्तिः शब्दादित्यधिकरणान्तरं तदाऽनावृत्त्यनुबन्धिनी विचारपरम्परापृथगनुसन्धेया । तादर्थ्यसम्भवस्तु सङ्गतिमात्रोपयोगी द्रष्टव्यः । पूर्वपक्षमुक्त्वाराद्धान्तमाह "जगदि"ति, निर्व्याजब्रह्मानुभवरूपं यथाऽवस्थितब्रह्मानुभवरूपमित्यर्थः । सृष्ट्यादेरपि नियमनविशेषरूपत्वाज्जगद्व्यापारशब्दोक्तिः कन्या—मनःप्रकाशकत्वात्, कनदीप्ताविति धातुः ।

## सू० प्रत्यक्षोपदेशान्नेति चेन्नाधिकारिकमण्डलस्थोक्तेः ॥ १८ ॥

भा० स स्वराड् भवति तस्य सर्वेषु लोकेषु कामचारो भवति स इमाँल्लोकान्कामान्नीकामरूप्यनुसञ्चरन्"ति प्रत्यक्षेण श्रुत्या मुक्तस्य जगद्व्यापार उपदिश्यते ।

अतो न जगद्व्यापारवर्जमिति चेत्तन्न आधिकारिकमण्डलस्थोक्तेः, आधिकारिकाः—अधिकारेषु नियुक्ता हिरण्यगर्भादयः, मण्डलानि—तेषां लोकाः तत्स्था भोगा मुक्तस्याकर्मवश्यस्य भवन्तीत्ययमर्थस्तस्य सर्वेषु लोकेषु कामचारो भवतीत्यादिनोच्यते अकर्मप्रतिबद्धज्ञानो मुक्तो विकारलोकान् ब्रह्मविभूतिभूताननुभूय यथाकामं तृप्यतीत्यर्थः । तदेवं विकारान्तर्वर्त्तिन आधिकारिकमण्डलस्थान्सर्वान् भोगान् ब्रह्मविभूतिभूताननुभवतीत्यनेन वाक्येनो-

च्यते न जगद्व्यापारः, यदि संसारिवन्मुक्तोऽपि विकारान्तर्वर्त्तिनो भोगान् भुङ्क्ते तर्हि बद्धस्येव मुक्तस्यापि अन्तवदेव भोग्यजातमल्पं च स्यात्तत्राह—

टी० सू० प्रत्यक्षोपदेशाचेति चेत्राधिकारिकमण्डलस्थोक्तेः ॥ १८ ॥ कामाचित्वकामरूपित्वसर्वलोकसञ्चारश्रवणाज्जगतस्तदधीनत्वं सिद्धमिति मुक्तस्येश्वरत्वमपि स्यादिति पूर्वपक्षोत्थानं प्रत्यक्षेणेति व्याख्येयस्य व्यासेनोपादानन्तद्व्याचष्टे "श्रुत्ये"ति, विकारलोकान्कार्य्यभूतलोकान्, विकारशब्दो धर्मिपरः, हेयातीतस्य मुक्तस्य हेयास्पदविकारलोकभोगापेक्षा कथमित्यत्राह "अकर्मे"ति, भगवद्विभूतित्वेनात्यन्तभोग्यता स्यादित्यर्थः । एवं कामान्नीत्यादिश्रुतिवाक्यं व्याख्यातम्, उक्तश्रुतिवाक्यार्थप्रतिपादकस्य सूत्रस्यार्थं निगमयति "तदेवमि"ति, उत्तरसूत्रशङ्कामाह "यदी"ति, ।

## सू० विकारावर्त्ति च तथा हि स्थितिमाह ॥ १९ ॥

भा० विकारे जन्मादिके न वर्त्तते इति विकारावर्त्ति, निर्धूतनिखिलविकारं निखिलहेयप्रत्यनीककल्याणैकतानं निरतिशयानन्दं परं ब्रह्म सविभूतिकं सकलकल्याणगुणमनुभवति मुक्तः, तद्विभूत्यन्तर्गतत्वेन विकारवर्त्तिनां लोकानामपि मुक्तभोग्यत्वं, तथा हि परस्मिन् ब्रह्मणि निर्विकारेऽनवधिकातिशयानन्दे मुक्तस्यानुभवितृत्वेन स्थितिमाह श्रुतिः "यदा ह्येवैष एतस्मिन्नदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दते अथ सोऽभयं गतो भवति, रसो वै सः रसं ह्येवायं लब्ध्वाऽऽनन्दी भवतीत्यादिका तद्विभूतिभूतं जगत्तत्रैव वर्त्तते तस्मिँल्लोकाः श्रिताः सर्वे तदु

नात्येति कश्चने"ति श्रुतेः, अतः सविभूतिकं ब्रह्मानुभवन् विकारान्तर्वर्तिन आधिकारिकमण्डलस्थानपि भोगान् भुङ्क्ते इति सर्वेषु लोकेषु कामचार इत्यादिनोच्यते न मुक्तस्य जगद्व्यापारः ॥

टी० सू० विकारावर्त्ति च तथा हि स्थितिमाह ॥ १९ ॥ मुक्तस्य सविभूतिकब्रह्मानुभवितृत्वेन स्थितिवचनात्सर्वत्र कामचारादयो भवन्ति न नियन्तृत्वादिकमित्यर्थः ॥

## सू० दर्शयतश्चैवं प्रत्यक्षानुमाने ॥ २० ॥

अस्य प्रत्यगात्मनो मुक्तस्य नियाम्यभूतस्य नियन्तृभूतपरमपुरुषासाधारणं जगद्व्यापाररूपं नियमनं न सम्भवतीत्युक्तं, निखिलजगन्नियमनरूपो व्यापारः परमपुरुषासाधारण इति दर्शयतः श्रुतिस्मृती—"भीषाऽस्माद्वातः पवते भीषोदेति सूर्यः भीषाऽस्मादग्निश्चेन्द्रश्च मृत्युर्धावति पञ्चम" इति एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठत इत्यादि, तथा "एष सर्वेश्वर स एष भूताधिपतिरेष भूतपाल एष सेतुर्विधरण एषां लोकानामसम्भेदाये"ति च श्रुतिः, स्मृतिरपि "मयाऽध्यक्षेण प्रकृतिः सूयते सचराचरम्। हेतुनाऽनेन कौन्तेय जगद्धि परिवर्त्तते विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगदिति च, तथा मुक्तस्य सत्यसङ्कल्पत्वादिपूर्वकस्याप्यानन्दस्य परमपुरुष एव हेतुरिति श्रुतिस्मृती दर्शयतः । "एष ह्येवानन्दयाति

मां च योऽव्यभिचारेण भक्तियोगेन सेवते । स गुणान्समतीत्यैतान् ब्रह्मभूयाय कल्पते । ब्रह्मणोऽहि प्रतिष्ठाहममृतस्याव्ययस्य च ।

टी० दर्शयतश्चैवं प्रत्यक्षानुमाने ॥ २० ॥ ब्रह्मणो हि प्रतिष्ठाहमिति ब्रह्म—जीवः अमृतं मोक्षः शाश्वतधर्मो ज्ञानं सुखमानन्दः अन्याधीनत्वनित्यत्वयोर्विरोधमाशङ्क्य परिहरति यद्यपि इत्यादिना, तस्य—अपहतपाप्मत्वादिगुणस्य, तथाविधत्वं स्वाभाविकत्वं तस्य प्रत्यगा-

त्मस्वरूपस्य नित्यस्थितिस्तदायत्तेत्यर्थः, । तदुपपादयति "परमपुरुषस्ये"ति, मुक्तस्वरूपतद्गुणनित्यत्वं परसङ्कल्पायत्तमित्युक्तम्, अन्यदपि नित्यं वस्तु तदधीनस्थित्यादिकमित्याह "एवमि"ति, मुक्तस्य नियन्तृत्वाभावावानन्दवैकल्यं प्रत्युत तत्पोष्कल्यमेव, सर्वेषां हि स्वात्माभिमानानुगुणा भोग्यव्यवस्था तद्विपर्ययव्यवस्था च, तथा पुरुषपश्वादिषु दृश्यते तस्मादात्मन आविर्भूतयथाऽवस्थितस्वरूपस्य शेषत्वमेव स्वाभाविकं रूपमप-

सू० शाश्वतस्य च धर्मस्य सुखस्यैकान्तिकस्य चे"ति, यद्यप्यपहतपाप्मत्वादिः सत्यसङ्कल्पत्वपर्यन्तो गुणगणः प्रत्यगात्मनः स्वाभाविक एवाविर्भूतः तथाऽपि तस्य तथाविधत्वमेव परमपुरुषायत्तं तस्य नित्यस्थितिश्च तदायत्ता, परमपुरुषस्यैतन्नित्यताया नित्येष्टत्वान्नित्यतया वर्तत इति न कश्चिद्विरोधः । एवमेव परमपुरुषभोगोपकरणस्य लीलोपकरणस्य च नित्यतया शास्त्रावगतस्य परमपुरुषस्य नित्येष्टत्वादेव तथाऽवस्थानमस्तीति शास्त्रादवगम्यते । अतो मुक्तस्य सत्यसङ्कल्पत्वं परमपुरुषसाम्यञ्च जगद्व्यापारवर्ज्जम् ॥

रोचयतः स्वशेषिपरमपुरुषपरिचरणमेव प्रियतमं स्यात्तद्विपर्ययेणेशितृत्व-मत्यन्तानिष्टमेव तस्मान्नानन्दवैकल्यम् अपि तु तत्पोष्कल्यमेव ॥

## सू० भोगमात्रसाम्यलिङ्गाच्च ॥ २१ ॥

भ० ब्रह्मयथात्म्यानुभवरूपभोगमात्रेण मुक्तस्य ब्रह्मसाम्यप्रतिपादनाच्च लिङ्गात् जगद्व्यापारवर्ज्जमित्यवगम्यते "सोऽश्नुते सर्वान्कामान्सह ब्रह्मणा विपश्चिते"ति अतो मुक्तस्य परमपुरुषसाम्यं सत्यसङ्कल्पत्वञ्च परमपुरुषासाधारणनिखिलजगन्नियमनश्रुत्यानुगुण्येन वर्णनीयमिति जगद्व्यापारवर्ज्जमेव मुक्तैश्वर्य्यं, । यदि परमपुरुषायत्तमेव मुक्तस्यैश्वर्य्यं तर्हि तस्य स्वतन्त्रत्वेन तत्सङ्कल्पान्मुक्तस्य पुनरावृत्तिसम्भवाशङ्केत्यत्राह—

## सू० अनावृत्तिःशब्दादनावृत्तिः शब्दात् ॥ २२ ॥

यथा निखिलहेयप्रत्यनीककल्याणैकतानो जगज्जन्मादिकारणं समस्तवस्तुविलक्षणः सर्वज्ञः सत्यसङ्कल्प आश्रितवात्सल्यैकजलधिः परमकारुणिको निरस्तसमस्तसमाभ्यधिकसम्भावनः परब्रह्माभिधानः—

टी० सू० भोगमात्रसाम्यलिङ्गाच्च ॥ २१ ॥ ब्रह्मेत्यादि स एवंवित्सर्वेषां भूतानां मतो भवति यथैवा देवतैव न यथैतां देवतां सर्वाणि भूतान्यवन्ति न ह्येवमेवंविदं सर्वाणि भूतान्यवन्ति तेनो एतस्यै देवतायै सायुज्यं सलोकतां तु यन्तीत्यादिवाक्यान्यप्यभिप्रेतानि छागो वा मन्त्रवर्णादिति न्यायात्सामान्येनावगतसाम्यं भोगसाम्ये दृष्टे तादृशसाम्यविशेषे पर्यवस्यतीति भावः । परमात्मनियाम्यत्वादिश्रुत्यानुगुण्याच्चायमर्थ इति वदन्नधिकरणार्थमुपसंहरति "अत" इति, अनन्तरसूत्रं शङ्कामुखेनावतारयति

"यदी"ति, अपुनरावृत्तिश्रुतिः पाक्षिकविषया ईश्वरस्वातन्त्र्यात्कस्यचिदना-वृत्तिसम्भवादिति च पूर्वपक्ष्यभिप्रायः । सू० अनावृत्तिः शब्दादनावृत्तिः श-ब्दात्, ॥ २२ ॥ यथेत्यादि भगवता मुक्तस्यापरित्याज्यत्वोपपादनार्थमुक्तस्यब्र-ह्मानुभवजिहासाऽनुदयज्ञापनार्थं प्रामाणिकत्वे दृष्टान्तसिद्ध्यर्थं च निखिल-हेयप्रत्यनीकत्वादिगुणाः, उक्ताः अन्येन निवृत्तिशङ्काव्यावृत्त्यर्थं निरस्तसमा-भ्यधिकसम्भावन इति पदं, स यदि पितृलोककाम इत्याद्युक्तभगवत्परिचर-णार्थविग्रहव्यावृत्त्यर्थं पुनर्जन्मदुःखालयमशाश्वतमिति वचनमुपात्तं, दुःखा-लयत्वादिविशेषणाभावेऽप्येतदैकार्थ्यं स्यादित्यभिप्रायेण पुनर्जन्म न विद्यत

सू० परमपुरुषोऽस्तीति शब्दादवगम्यते, एवमहरहरनुष्ठीय-मानवर्णाश्रमधर्मानुगृहीततदुपासनरूपतत्समाराधनप्रीतः उपासीनाननादिकालप्रवृत्तानन्तदुस्तरकर्मसञ्चयरू-पाविद्यां विनिवर्त्य स्वयाथात्म्यानुभवरूपानवधिकाति-शयानन्दं प्रापय्य पुनर्नावर्तयतीत्यपि शब्दादेवावगम्यते, शब्दश्च "स खल्वेवं वर्तयन् यावदायुषं ब्रह्मलोकमभि-सम्पद्यते न च पुनरावर्त्तत" इत्यादिकः, तथा भगवता स्वयमेवोक्तं "मामुपेत्य पुनर्जन्म दुःखालयमशाश्वतं नाप्नु-वन्ति महात्मानः संसिद्धिं परमां गताः । आब्रह्मभुवना-ल्लोकाः पुनरावर्त्तिनोऽर्जुन? मामुपेत्य तु कौन्तेय पुन-र्जन्म न विद्यत" इति, न चोच्छिन्नकर्मबन्धस्यासङ्कुचित-ज्ञानस्य परब्रह्मैकानुभवैकस्वभावस्य तदेकप्रियस्यानधिका-तिशयानन्दं ब्रह्मानुभवतोऽन्यापेक्षातदर्थान्तरारम्भाद्यस-म्भवात् पुनरावृत्तिशङ्का । न च परमपुरुषः सत्यसङ्कल्पो-ऽत्यर्थप्रियं ज्ञानिनं लब्ध्वा कदाचिदावर्त्तयिष्यति ।

टी० इति वचनमुदाहृतम् । अनेनावृत्तिः कर्मकृता न भवति इमाँल्लोकानित्युक्तकामसञ्चारादिति च फलितं । पुनरावृत्तिहेतुत्वेन सम्भावितानि शिरांस्याशङ्क्य परिहरति न चेत्यादिना, प्रमाणस्यानुग्राहकतर्कोक्तार्थतां चार्थाद्दर्शयति स्वेच्छा वा कर्म वा भगवत्सङ्कल्पो वा त्रयमेव पुनरावृत्तिहेतुतया सम्भावितं, तत्र स्वेच्छाकर्मभ्यामावृत्तिशङ्कां परिहरति "न चे"ति, तदर्थारम्भाद्यसम्भवादिति कर्म विद्यमानं चेत्सजातीयकर्मान्तरारम्भरुचिरूपां वासनामुपजनय्य तद्द्वारा कर्मान्तरं कारयति कर्मणः सवासनस्य नष्टत्वात् कर्मान्तरासम्भवात् न कर्म पुनरावृत्तिहेतुः, अनवधिकातिशयानन्दभगवदनुभवैकतानस्य नान्यापेक्षेति न स्वयं स्वस्य पुनरावृत्तिहेतुरित्यर्थः । भगवत्सङ्कल्पस्य पुनरावृत्तिहेतुत्वं परिहरति "न चे"ति, मुक्तान् पुनर्नावर्त्तयिष्यामीति सङ्कल्पो नान्यथा स्यादित्यभिप्रायेण सत्यसङ्कल्प इत्युक्तं, ज्ञानिनोऽत्यर्थं प्रियत्वाच्च तथा सङ्कल्पः । अत्यर्थप्रियत्वे प्रमाणं दर्शयति "य एवमाहे"ति, एवं न चोच्छिन्नेत्यादिना ऽपुनरावृत्तिश्रुतेरनुग्राहकस्तर्क उक्तो भवति । परे तु प्रत्यक्षोपदेशादित्यत्र आप्नोति स्वाराज्यमित्युदाहृत्य सवितृमण्डलादिस्थानेषु भोगोक्तेर्न जग-

**सू० य एवमाह "प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः । उदाराः सर्व एवैते ज्ञानी त्वात्मैव मे मतम् ॥**

टी० द्व्यापार इत्याहुः, स्वाराज्यशब्दस्य परमाकाशावस्थानेऽप्युपपत्तेस्तस्यानुपादानं सर्वलोकक्रमणशङ्काबीजत्वादिमान् लोकानित्यस्योपादानमुचितं तेन हि निरङ्कुशैश्वर्यं दर्शितं भवति विकाररूपं विकारातीतं च नित्यमुक्तं परं ब्रह्म द्विधा हि स्थितिमाह "पादोऽस्ये"ति, न तत्र सूर्यो भाति न तद्भासयते सूर्य इति प्रत्यक्षानुमाने च विकारावर्तित्वं दर्शयत इति व्याचक्षते किमर्थं सूत्रद्वयमिति चेत् विकारालम्बनानां निर्विकारपररूपप्राप्तिरनुपपन्ना अतत्क्रतुत्वादित्यभिप्राय इति चाहुः इदमपि विकारालम्बना न प्राप्नुवन्तीत्यध्याहारसापेक्षत्वादनुपपन्नम्, अध्याहारेऽपि जगद्व्यापारवर्जनस्यानुपयोगिसूत्रद्वयं परं नाप्नुवन्ति सगुणेऽपि न

निरवग्रह मैश्वर्य्यमिति ज्ञापनार्थमिति चेत् अति अतिदूराभिप्रायकल्पनमेव दोषः, तथा हि स्थितिमाहेत्यत्रैव निर्विकारस्वरूपविषयश्रु[illegible]नामपि विवक्षितत्वे पुनःप्रत्यक्ष–शब्देन परस्वरूपविषयश्रुत्युपादानवैयर्थ्यं च ऐश्वर्य्यं चेदन्तवत् तस्मादावृत्तिरिति शङ्काव्युदासार्थमनावृत्तिः शब्दादिति सूत्रमिति निर्गुणप्राप्तावावृत्तिशङ्काया अभावादित्याहुः । तदयुक्तमकर्मकृतसहजैश्वर्य्यं ऐश्वर्य्यत्वादावृत्तिशङ्काया मन्दतरत्वात्, अतः पाराधीन्यकृता ऽऽवृत्तिशङ्काव्युदासपरत्वमेव युक्तं सूत्रस्य, सगुणनिष्ठविषयत्वं चायुक्तं निर्गुणप्राप्तेरप्रामाणिकत्वात् विशेषणवैयर्थ्यं निर्गुणप्राप्त्यभावादेवात्रावृत्तिशङ्काऽनुदयश्चानुपपन्नः । अपरे तु वेदान्त एव मुक्तस्य भेदेनावस्थानं मन्यमानानां मतमभ्युपगम्य तत्र सावधिकमैश्वर्य्यप्रतिपादनार्थमिदमधिकरणमित्याहुः । तत्र परेषामिव सूत्रयोजना अस्मिन् पक्षे विकारप्रलये

सू० आस्थितः स हि युक्तात्मा मामेवानुत्तमां गतिम् ।

टी० तदाश्रितैश्वर्य्यप्रलयादावृत्तिः स्यादेव अविभागपक्ष एवानावृत्तिरित्याह अनावृत्तिः शब्दादितीत्याहुः । तत्तावदयुक्तम् अप्रामाणिकपक्षस्य निरसनमेव हि कर्त्तव्यं न तु तदभ्युपगमेन निर्वाहः, सावधिकैश्वर्य्यप्रतिपादनमेव तन्निरसनमिति चेन्न प्रतीकालम्बनोपासनानां सावधिकैश्वर्य्यं कथितेऽपि तेषां निरस्तत्वाभावात् अप्रामाणिकत्वसमर्थनं हि निरसनं सावधिकैश्वर्य्यं प्रामाणिकं चेत् कथं तस्य निरासः अनावृत्तिसूत्रमविभागपक्ष एवेति अशाब्दमविभागशब्दस्याप्रकृतत्वात्, अर्थस्वभावादविभागपक्षविषयत्वमिति चेन्न अक्षरपरमव्योमगतानां मुक्तानामैश्वर्य्यप्रच्युत्यसम्भवादेवार्थस्वभावासिद्धेः, विकारलोकाश्रितमैश्वर्य्यं प्रध्वस्तमिति चेत् ततः किमीश्वरस्येव तदानीमप्रच्युतगुणाष्टकत्वादपरिच्छिन्नानन्दत्वोपपत्तेः, न हि जगत्प्रलयादीश्वरस्यैश्वर्य्यभङ्गः तथा तदवस्थतदनुभवरूपमैश्वर्यं मुक्तानामपि न भ्रश्येत अतस्सूत्रासङ्गतिः । ननु विभागपक्षे सावधिकैश्वर्य्यप्रसङ्गो विवक्षितः न तु तत्पक्षनिर्वाह इति चेत् न जगद्व्यापारवर्जत्वप्रसङ्ग इति सूत्रितत्वाभावात् । यथा नित्योपलब्ध्यनुपलब्धिप्रसङ्गः कृत्स्न-

सू० बहूनां जन्मनामन्ते ज्ञानवान्मां प्रपद्यते ॥

टी० सक्तिरिति च तस्मात्सूत्रस्वारस्यविरोधः विकारावर्त्तीत्यादिसूत्रद्वयवैयर्थ्यानिदूरलक्षणादोषः पूर्ववत्, अविभागपक्षे वा कथं जक्षत् क्रीडन् रममाणः सङ्कल्पादेवास्य पितरः समुत्तिष्ठन्तीत्याद्यैश्वर्य्यमुपपद्यते किमीश्वरव्यापारा एव तदभिन्नस्य मुक्तस्य क्रीडात्वेनोच्यन्ते ? उत व्यापारान्तराणि ? प्रथमे बद्धस्यापि तदभिन्नत्वादीश्वरव्यापार एव क्रीडाः किन्न स्युः, उपाधितो भिन्नत्वादिति चेत् तर्हि ईश्वरस्यापि ते व्यापारा लीला न स्युस्तस्यापि सवितृमण्डलाद्युपाधिभिर्भिन्नत्वात् भिन्नत्वेऽपि सर्वज्ञः स्वलीलात्वेन सर्वत्र प्रत्यभिसन्धत्त इति चेत्तर्हि बद्धव्यापारेष्वपि प्रत्यभिसन्धानात् दुःखित्वेन लीलात्वं तद्व्यापाराणां न स्यात् एवं मुक्तानामपीश्वराद्भिन्नत्वात् प्रत्यभिसन्धानाच्च दुःखित्वमिति तेषामविभागपक्ष एवावृत्तिः यदीश्वरव्यापाराद् व्यापारान्तराणि मुक्तानां लीला तर्हि व्यापारान्तरत्वमाश्रयभेदात्स्यात् अन्यथेश्वरव्यापारानतिरेकेण प्रागुक्तदोषप्रसङ्गात् आश्रयभेदेन व्यापारान्तरत्वे मुक्तेश्वरविभागपक्ष एवाङ्गीकृतः स्यात् । अन्ये तु वर्णयन्ति प्रकरणादिति य आत्मेत्यादिमुक्तप्रकरणस्य भोगगोचरत्वान्न जगद्व्यापार इति असन्निहितत्वात् सृष्टिप्रकरणेष्वसन्निहितत्वात् परमाकाशस्यस्य मुक्तस्य विकारस्थानेष्वसन्निहितत्वादिति प्रत्यक्षोपदेशादिति आप्नोति स्वाराज्यमित्युपदेशान्न निरवग्रहं मुक्तस्यैश्वर्य्यमिति चेत् आधिकारिकपदावच्छेदकदेशविशेषेषु हिरण्यगर्भसायुज्यं गतस्य तदधीनभोगोक्तेः न तु परमाकाशस्थस्येति, विकारावर्त्तीति, परमे व्योमन्सोऽश्नुत इति मुक्तैश्वर्य्यस्य परमकाशस्थस्य विकारस्थानावर्त्तितया परमात्मन एव जगदनुप्रवेशादि-

सू० वासुदेवः सर्वमिति स महात्मा सुदुर्लभ इति । सूत्राभ्यासः शास्त्रपरिसमाप्तिं द्योतयतीति सर्वं समञ्जसम् ॥

जगद्व्यापारवर्जाधिकरणं समाप्तम् ॥

इति श्रीभगवद्रामानुजाचार्य्यविरचिते शारीरकमीमां-

साभाष्ये चतुर्थाध्यायस्य चतुर्थः पादः ॥ ४ ॥ समाप्तश्चाध्यायश्चतुर्थो, ग्रन्थश्चापि, शास्त्रं च परिसमाप्तम् ।
नमो भगवते रामानुजमुनये योगिवर्याय । नमः पूर्वाचार्येभ्यः । नमो भगवते बोधायनाय वेदान्तविशदीकरणदीक्षाय ॥ श्रीः श्रीः श्रीः श्रीरस्तु श्रीरस्तु श्रीरस्तु ॥

दिरिति दर्शयतश्चैवमिति यत्पुराणमाकाशं तत्र मे स्थानं कुर्वतः पुनर्भवायेत्यादि श्रुतिः स्मृतिश्च परमाकाशस्थितिं दर्शयत इति सोऽश्नुत इति भोगमात्रसाम्यलिङ्गाच्च न जगद्व्यापारः, इमं मानवमावर्त्तं नावर्तन्ते तेषु ब्रह्मलोकेषु परावतो वसन्ति तेषामिह न पुनरावृत्तिरिति इमं-शब्दे इह-शब्दविशेषितत्वाद् ब्रह्मलोकगतानामन्यस्मिन्मानव आवर्ते पुनरावृत्तिशङ्कां व्युदस्यति "अनावृत्तिः शब्दा"दिति, इमं-शब्देह-शब्दौ सन्निहितत्वमात्रावलम्बनौ न तु व्यक्तिविशेषपरौ श्रुतेरनित्यार्थत्वप्रसङ्गात्, अतो नावर्तान्तरे पुनरावृत्तिः मानव आवर्ते जन्माभावोऽनावृत्ति-शब्देनोच्यते गमनमात्रं न प्रतिषिध्यते अतस्सर्वेषु कामचारो भवतीत्यदोषः, ब्रह्मलोकगतानां मानवावर्तगमनं स्वदेशात् परदेशगमनवदुपपन्नं, तस्माच्च ब्रह्मलोकगतानामिह पुनर्जन्मेत्यनावृत्तिरुपपन्ना । तदेवं मुक्तैश्वर्य्यं निरवग्रहमिति तत्र ब्रूमः मुक्तप्रकरणे भोगप्रतिपादनस्य हेतुतयोक्तिर्विफला तावता जगद्व्यापाराप्रतिषेधात् विकारस्थानेष्वसन्निधानादिति चायुक्तम् अन्तिमसूत्रे मुक्तस्य स्वदेशात्परदेशगमनवत्सर्वलोकसञ्चरणस्याभ्युपगमादिमाँल्लोकानिति श्रुतत्वाच्च, आदित्येन्द्रस्य हिरण्यगर्भस्योभयभावनान्वितस्य मुक्तप्राप्यत्वायोगान्मुक्तस्य तत्पारतन्त्र्या योगाच्च द्वितीयसूत्रार्थोऽनुपपन्नः । विकारस्थाने सञ्चरणाभ्युपगमादेवानन्तरसूत्रद्वयार्थोऽनुपपन्नः, तथा हि स्थितिमाहेत्यस्य प्रत्यक्षानुमाने इति प्रत्यक्ष-शब्देन पुनरुक्तिश्च । श्रुत्यन्तरविषयः प्रत्यक्ष-शब्द इति चेन्न एकार्थविषयानेकश्रुत्युपादानस्य सूत्रभेदसापेक्षत्वाभावात् तद्भावे च सूत्रान्तराणामपि करणप्रसङ्गाच्च यदि तत्सूत्रद्वयं मुक्तैश्वर्य्यस्य परमाकाशस्थितिमात्रपरं तन्निरवग्रहैश्वर्यविरुद्धं, यदि तत्रैवावस्थानपरं तदा विका-

रस्यानभ्युपगमतदभ्युपगमविरोधः । अन्तिमसूत्रस्य चेहादिशब्दानां सन्निहितार्थमात्र परतयाऽन्यस्मिन्नावर्त्ते पुनरावृत्तिशङ्काव्युदासपरत्वं चानुपपन्नं वैदिकशब्दानामनित्यव्यक्तिविशेषवाचित्वशङ्कायाः समाननामरूपत्वादित्यत्रैव निरस्तत्वेनात्र तच्छङ्काया एवानुत्थानात् । अत ईश्वरपाराधीन्यप्रयुक्तशङ्कैवात्र परिहर्त्तव्या, सा च सुपरिहृता, अतो यथाभाष्यमेवाधिकरणवर्णनं युक्तम् । इति सर्वं समञ्जसमिति, सर्व–शब्देन भेदश्रुत्यभेदश्रुतिघटकश्रुतिगुणादिविधिनिषेधश्रुतिभगवत्कृपा–स्वातन्त्र्यादिपरवाक्यप्रत्यवादीन्यभिप्रेत्य तेषां सामञ्जस्यमुक्तम्, इति–शब्दोऽखिलभुवनेत्यादिभाष्योक्ताशेषार्थपरामर्शी । सर्व–शब्देनानुदाहृतश्रुतिस्मृतीतिहासपुराणवचांसि तदनुग्राहकतर्कजातं च विवक्षितं, तेषामनया दिशा सामञ्जस्यं द्रष्टव्यम् । उक्तार्थबाधकत्वेन ये प्रमाणतर्काः परैः प्रयुक्ताः तेषां सर्वेषां परिहारोऽत्राऽस्त्येव, एतदनन्तर्भूतार्थो नास्ति, तस्मादुक्तप्रकारेण बाधकप्रमाणतर्कपरिहारश्चानुसंधेयः इत्यभिप्रायेण इति सर्वं समञ्जसमित्युक्तम् ॥ जगद्व्यापारवर्जाधिकरणं समाप्तम् ॥ समुदिताधिकरणसंख्या । १५६ । समुदितसूत्रसंख्या । ५४५ ।

इति श्रीहरितकुलतिलकवाग्विजयिसूनुना श्रीरङ्गराजदिव्याज्ञालब्धवेदव्यासापरनामधेयेन श्रीमद्वरदराजाचार्य्यपादसेवासमधिगतभगवद्रामानुजविरचितशारीरकमीमांसाभाष्यहृदयेन श्रीसुदर्शनसूरिणा विलिखितायां श्रुतप्रकाशिकायां चतुर्थाध्यायस्य चतुर्थः पादः । अध्यायः समाप्तः । ग्रन्थः समाप्तः । ४ । शास्त्रं च समाप्तम् ।

नमो भगवते बोधायनाय वेदान्तविशदीकरणदीक्षाय ॥

नमः पूर्वाचार्येभ्यः ।




गुरवे वरदार्याय कुर्वीमहि नमस्क्रियाम् ।
यत्पदाम्भोजसेवा नः सूते वेदान्तसंपदम् ॥
श्रीमते व्यासविदुषे यतीन्द्राङ्घ्रिरजोजुषे ।
नमः कारुण्यवपुषे मायावादतमोमुषे ॥
व्यासार्यचरणाम्भोजयुगलं शरणं भजे ।
यद्गिरां परिणामस्य फलं नो भाष्यवेदनम् ॥